यथापि[1] पौरोडाशिका मन्त्रा नाभिवर्तन्त[2] एवमेवापि याजमाना मन्त्रा नाभिवर्तेरन्निति[2] ' ॥

I. 29. 12. परिधीनामभ्याधान इति ॥ सूत्रं बौधायनस्य '' प्रस्थान[3] एवैनानभ्यादध्यादिति[3] शालीकिः ' ॥

I. 29. 15. अथैनान्संस्रावेणाभिजुहोतीति ॥ सूत्रं बौधायनस्य '' प्रस्तरं चैव परिधींश्चाभिजुहुयादिति शालीकिः ' ॥

I. 29. 18. स्रुचोर्विमोक इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

I. 30. 2. पत्नीसंयाजेष्वृत्विजां परिक्रमण इति ॥ सूत्रं बौधायनस्य '' सर्व एवोत्तरेण गार्हपत्यं परिक्रामेयुरिति शालीकिः ' ॥ १४ ॥

I. 30. 9. पत्नीनां संयाजन इति ॥ सूत्रं बौधायनस्य '' ध्रौवाज्येन ध्यानेनैव[4] पत्नीः संयाजयेदिति शालीकिः ' ॥

अन्तर्धाय देवानां पत्नीः संयाजयेदिति बौधायनो '' ऽनन्तर्धायैवेति शालीकिः ' ॥

पत्नीसंयाजेषु शम्युवाकस्य करण इति ॥ कुर्यादिति बौधायनो '' न कुर्यादिति शालीकिः ' ॥

I. 32. 5. ध्रुवाया आप्यायन इति ॥ स ह स्माह बौधायन उभावेव

---

१ यथा Bu G (sec. m.); यथापि the other MSS.

२ Without नि (cp. xx. 10: 24. 6) all.

३ प्रस्थाने वैना॰ Bu U (sec. m.) G (sec. m.); ॰ने चैवा॰ Be; समाप्तावेवैना॰ C D (Sāyaṇa: प्रस्थाने कर्मावसाने समिष्टयजुर्होमानन्तरमित्यर्थः)

४ एव om. Bu G (sec. m.) and Sāyaṇa.

ध्रुवामाप्याययेतामध्वर्युश्च[1] यजमानश्चेत्य″ध्वर्युरेव ध्रुवामाप्याय्य समिष्टयजुर्जुहुयादिति शालीकिः ′ ॥

I. 33. 9. समिष्टयजुषो होम इति ॥ सूत्रमाचार्ययोर″न्यो ह स्माह गौतमः स्वाहा वाचीति हुत्वा बर्हिषो धातूनाꣳ संप्रलुप्य ध्रुवायाꣳ समज्यानुप्रहृत्याभिजुहुयात्स्वाहा वाते धाः स्वाहेति ′ ॥ १५ ॥ पञ्चमः ॥

अथातोऽग्न्याधेयं व्याख्यास्यामः ॥

I. 53. 6. संभारेष्विति ॥ सूत्रꣳ राथीतराणाम″न्यो[2] ह स्माह बौधायनो नाग्ननिहतं कुर्वीत घोररूपमिति ″ कुर्वीतैवाग्निहतं ′ न तु मुञ्जकुलायं ′ न ह्येतस्यानुख्या विज्ञायत[3] इति शालीकिः ′ ॥

I. 53. 10. पात्राणां करण इति ॥ स ह स्माह बौधायनस्त्वक्तआसेचनानि कारयेदग्रतःपुष्कराण्येवमस्य प्राचीनपुष्कराः स्रुचः सन्ना भवन्तीत्य″न्यो ह स्माह शालीकिस्त्वक्तआसेचनानि कारयेन्मूलतःपुष्कराण्येवमस्य प्राचीनपुष्कराः[4] स्रुचः सन्ना भवन्तीति ′ विज्ञायते तस्मादवाचीनाग्रा वनस्पतयः पृथिवीं क्षियन्तीति[5] ′ ॥

---

१ Thus G (sec. m.) and Sāyaṇa; ॰प्यायेताम॰ C G (pr. m.) Ben; ॰व्यायेताम॰ H; ॰प्यायताम॰ D; ॰प्यायत्य॰ U Be.

२ रथीत॰ Bu.

३ विद्यत U (sec. m.)

४ Thus G U D C Be; प्रतीचीन॰ Ben Bu H.

५ Thus (क्षियंतीति) Bu U C D G Ben; क्षिपंतीमि Be H.

स्रुचां प्रमाण इति ॥ बाहुमात्राः स्युरिति बौधायनो" अरत्निमात्रा इति शालीकिः" प्रादेशमात्रा इत्यौपमन्यवः' ॥

स्रुचामाकृतिविकार इति ॥ हस्त्योष्ठ्यः[1] स्युरिति बौधायनो" वायसपुच्छा इति शालीकिर्हंसमुखप्रसेचना[2] इत्यौपमन्यवः' ॥

I. 54. 16. अम्बरीषस्य करण इति ॥ उत्तरतोऽग्न्यगारस्याम्बरीषं कुर्यादिति बौधायनो" यत्रैवाम्बरीषः स्यात्तत्कुर्यादिति शालीकिः' ॥

I. 55. 12. अग्न्यगारस्य परिक्रम[3] इति ॥ दक्षिणेनेति बौधायन" उत्तरेणेति शालीकिः' ॥

I. 55. 14. रोहिते चर्मणीति ॥ सूत्रं बौधायनस्याप्यरोहितं स्यादिति[4] शालीकिः' ॥

I. 55. 15. ब्रह्मौदनस्य[5] मन्त्रामन्त्र इति ॥ मन्त्रवत्स्यादिति बौधायनस्तूष्णीक[6] इति[6] शालीकिः' ॥

ib. ब्रह्मौदनस्य निर्वपण इति ॥ पवित्रवता पात्रेण मन्त्रवन्तमिति बौधायनो" ऽपवित्रेण तूष्णीकमिति शालीकिः' ॥

---

१ हस्त्योष्ठ्य Ben H C D Bu G; हस्त्योष्ठा Be U.

२ Thus Be Bu G (sec. m.) U (sec. m.); °प्रसेचा H Ben C D G (pr. m.) U (pr. m.).

३ °क्रमण G and U (sec. m.).

४ कुर्यादिति C D H Ben U.

५ Here and *infra* the MSS. sometimes ब्रह्मौ° sometimes ब्रह्मो° ।

६ Thus Be only; °ष्णीकमिति G (sec. m.) Bu; तूष्णीमिति H Ben U C D G (pr. m.).

I. 56. 4. ब्रह्मौदनस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो ॥ ऽप्स्विति शालीकिः । ॥

नैवास्मिन्नाविष्टेन निःषिञ्चेदिति बौधायनः ॥ काममस्मिन्नाविष्टेन निःषिञ्चेदिति शालीकि॥र्विश्राव्य[1] तं[1] सूपवन्तमित्यौपमन्यवः । ॥

I. 56. 6. ब्रह्मौदनस्योपस्तरण इति ॥ सूत्रं बौधायनस्य ॥ नोपस्तृणीतेति शालीकिः । ॥

I. 56. 10 ब्रह्मौदनस्योद्वासन इति ॥ सूत्रं बौधायनस्य । दैव पर्युपविशेयुरिति[2] शालीकिः । ॥

I. 56. 12. ब्रह्मौदनस्योपोहन इति ॥ यज्ञो मोपनमत्विति वा तूष्णीं वेति । पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

ib. ब्रह्मौदनस्य प्राशन इति ॥ आर्षेया एव ब्रह्मौदनं प्राश्नीयुरिति बौधायनो ॥ य एव केच नियतपाना[3] इति कात्यो ॥ ऽन्नो ह स्माहौपमन्यवो महर्त्विज एव ब्रह्मौदनं प्राश्नीयुरत्र[4] ह्येवैते[5] सतानुनप्त्रिणो भवन्तीति । ॥

---

१ Uncertain; विश्राव्यतं U H Ben C D G (pr. m.); विश्राव्य G (sec. m.); विश्राव्यंतं Bu; विश्राव्य सु सुतं Be.

२ Thus Bu G and U (sec. m.); ॰पविशेरन्निति the other MSS.

३ Uncertain; निपाना H Ben G (sec. m.) C D; निपक Be; निपावना Bu; नियतपाना G (pr. m.) U; this seems to be the reading also of the vivaraṇa, according to which the meaning is: सहभोजनाः।

४ ॰त्रो Ben H G C and U (pr. m.).

५ After ॰वैते Be ins. प्रथमं, thus also Keś. in a citation of this passage.

I. 57.1. समिधामभ्याधान इति ॥ सूत्रꣳ शालीकेर्'' नो ह स्माह बौधायनः सकृत्प्राश्निते ऽसत्यवन्नुष्टे समिधो ऽभ्यज्यादध्यादित्यौ'' नो ह स्माहौपमन्यवो ऽन्वैवैनाः पार्श्वतः समज्य सादयेत्तो यदा सर्वे प्राश्नीयुरथैतां पाणीं निर्णिज्योपस्तीर्य यत्स्थाल्यामाज्यमवशिष्टꣳ स्यात्तत्सकृदभ्युन्नीय तेन समिधो ऽभ्यज्यादध्यादिति ' ॥

I. 57. 13. गोः करण इति ॥ कुर्यादिति बौधायनो '' न कुर्यादिति शालीकिर'' पि वक्रीरपि कुर्वीतानु चैतस्य भवेत्पुण्या प्रशꣳसेति कात्यः ' ॥

I. 57. 15. अरण्योः प्रदान इति ॥ सूत्रमाचार्ययोर्'' नो ह स्माहौपमन्यवो ऽपररात्र एवास्मा अरणी प्रयच्छेदिदं ददामीत्येव वाचं विसृजेदिति ' ॥

I. 59. 1. अग्न्यायतनानां परिलेपन इति ॥ सूत्रमाचार्ययोर्'' नो ह स्माहौपमन्यवो गार्हपत्यायतनमेवैकं परिलिम्पेत्तद्धि विदग्धं भवतीति ' ॥

I. 59. 2. संभाराणां निवपन इति ॥ सूत्रमाचार्ययोर्'' नो ह स्माहौपमन्यवो गार्हपत्यायतन एवैनान्सर्वैर्मन्त्रैः परिनिष्ठाप्य त्रेधा निवपेदिति ' ॥ १६ ॥

I. 62. 9. दर्भस्य हरण इति ॥ स ह स्माह बौधायनो ज्ञानुदघ्ने प्रथमꣳ हरेदथ नाभिदघ्ने ऽथ ग्रीवदघ्ने ' प्राणाꣳस्तु नातिहरेदित्यादान एवैता मात्रा अभिसंपादयेत्प्राणाꣳस्त्वेव नातिहरेदिति शालीकिः ' ॥

I. 62. 18. संभाराणामाक्रमण इति ॥ सूत्रं शालीकेरन्यो ह स्माह बौधायन एवमेवैतेन पुरस्तात्प्रत्यगावृत्तेन[१] दक्षिणेन पूर्वपदेनोत्तरतः पार्श्वतः[२] संभाराणामाक्रमयेद्यथाहितस्याग्नेरङ्गारा अभ्यववर्तेरन्निति । ॥

I. 62. 20. अश्वस्य दान इति ॥ अध्वर्यव एतमग्निपदमश्वं[३] दद्यादन्यं ब्रह्मण इति बौधायन ॥ एतं[४] ब्रह्मणे[४] ऽन्यमध्वर्यव[४] इति शालीकिः । ॥

I. 63. 1. इध्मस्य निधान इति ॥ सूत्रं बौधायनस्य ॥ तूष्णीमेवेध्मं निदध्यादिति शालीकिः । ॥

I. 63. 13. सभ्यावसथ्ययोः करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

ib. सभ्यावसथ्ययोर्विहरण इति ॥ आहवनीयादेवैनौ विहरेदिति बौधायनो ॥ ग्रामाग्नेरिति शालीकि॥र्निर्मन्थ्यौ स्यातामित्यौपमन्यवो ॥ ऽन्यो ह स्माहौपमन्यवीपुत्रः सभायामेव सभ्यं व्यपदिशेदावसथ आवसथीयं पर्वणि[५] चैनयो स्थालीपाकौ श्रपयित्वा ब्रह्मणे जुहुयादित्ये॥तदपि न कुर्यादित्याञ्जीगविः । ॥

---

१ Thus G (sec. m.) D G; °वृतेन the other MSS.

२ Found only in Be and U (sec. m.).

३ अश्वं given only by Bu and G (sec. m.).

४ एवं instead of एतं Bu; the other MSS. are defective, leaving out एतं ब्रह्मणे ।

५ पर्वणिपर्वणि U (sec. m.).

I. 63. 14. रथचक्रस्य करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिरथो ह स्माहौपमन्यवो रथमेवैतꣳ संयुक्तं[1] प्राञ्चं प्रवर्तयेत्तमृत्विग्भ्यो दद्यादित्येतदपि न कुर्यादित्याञ्जीगविः ॥

I. 64. 9. तनूनामनुदेश[2] इति ॥ प्रत्यधीत्यानुदिशेदिति[3] बौधायनो या ते अग्ने घोरास्तनुवस्ताभिरमुं[4] गच्छेत्येव ब्रूयादिति शालीकिः ॥

I. 64. 11. विराजक्रमेष्विति ॥ सूत्रं बौधायनस्य नर्य प्रजां मे गोपायेत्येव ब्रूयादिति शालीकिः ॥

I. 65. 2. पूर्णाहुत्यै हवन इति ॥ सूत्रं बौधायनस्य परिश्रित एव पूर्णाहुतिं जुहुयादिति शालीकिः ॥ १७ ॥

I. 65. 3. पूर्णाहुतौ तूष्णीमग्निहोत्र इति ॥ सूत्रꣳ राथीतराणामथो ह स्माह बौधायनः पूर्णाहुतिमेव जुहुयान्न तूष्णीमग्निहोत्रमिति तूष्णीमग्निहोत्रमेव जुहुयान्न पूर्णाहुतिमिति शालीकिः ॥

I. 66. 3. दशहोतुर्व्याख्यान इति ॥ स ह स्माह बौधायनो यत्र क्व च हविर्निर्वप्स्यन्स्यात्सामिधेनीर्वानुवक्ष्यन्स्याच्चातैव तत्र दश-

---

१ Thus Bu Be G (sec. m.) and Keś.; संप्रयुक्तं U H Ben C D G (pr. m.).

२ Thus Bu Ben H G C D; ०देशने the vivaraṇa; ०देशेन Be.

३ Thus Bu U (pr. m.); प्रत्याधो० H Ben Be C D U (sec. m.).

४ Thus Be Bu U (sec. m.); पाप्मानं instead of अमुं Ben G C D U (pr. m.) H.

होतारमित्येष्वेवैतदाग्न्याधेयिकेषु[1] तन्त्रेषु दृष्टं भवतीति शालीकिरस्मिन्नेवैतदाग्नेये ऽष्टाकपाले दृष्टं भवतीत्यौपमन्यवः ॥

I. 66. 4. तन्त्रकरण इति ॥ स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः स्युर्वार्त्रघ्नावाज्यभागावुच्चैर्देवता इत्यथो ह स्माह शालीकिः सप्तदशसामिधेनीकाः स्युर्वृधन्वन्तावाज्यभागावुपांशुदेवता इत्यथो ह स्माहौपमन्यव आग्नेये ऽष्टाकपाले वार्त्रघ्नावाज्यभागौ स्यातां वृधन्वन्तावैन्द्राग्नादित्ययो[2] रयिमन्तौ[2] पुष्टिमन्तौ पवमानहविःषु वीतवन्तावन्वारम्भ्यामिति[3] ॥

याजमानस्य करण इति ॥ अभीनाम[4] याजमानं कुर्यादिति बौधायनः ॥ कुर्याद्यथावकाशं याजमानमिति शालीकिः ॥

---

१ Thus Bu G U (sec. m.); एष्वेवैतद° H; एष्वेतद° Ben U (pr. m.); एतेष्वेतद° Be; तेष्वेवैतद° D C.— आग्न्याधे° H Ben Be U D G (sec. m.); अग्न्याधे° Bu G (pr. m.).

२ °योरयिमंतौ C D U (pr. m.) Ben; °योरविमंतौ H; °योरपिमंतौ Be; योरतिथिमंतौ Bu U (sec. m.). I am uncertain whether रयिमन्तौ or अतिथिमन्तौ is the right reading.

३ Thus Be Ben H C D G and U (pr. m.); पीतवंताव° Bu; वृधन्वंताव° G and U (sec. m.).

४ अभीनमं Be. The word seems to be absol. to अभिनमति ('to change accordingly'). Vivaraṇa: अभिनाममोद्दित्वा, correct perhaps °मभूद्दित्वा ।

I. 66. 6. दक्षिणानां दान इति ॥ सूत्रꣳ शालीकेर॥न्नो ह स्माह बौधायनः सर्वा एवैता इष्टीर्दक्षिणावतीः कुर्या।त्तिस्रस्तिस्र एकैकस्यां दद्यान्मिथुनावुत्तमायामिति । ॥

I. 66. 9. तन्त्रसमास इति ॥ नास्ति तन्त्रसमास आचार्ययोर॥न्नो ह स्माहौपमन्यव आग्नेयो ऽष्टाकपालो ऽग्नये पवमानाय तत्प्रथमं तन्त्रꣳ स्याद।थाग्नये पावकायाग्नये शुचये तद्द्वितीयम।थैन्द्राग्नश्चादित्यस्य[१] चरुरन्त्यं[१] परीयातामिति । ॥

I. 67. 15. दक्षिणानां दान इति ॥ सूत्रꣳ शालीके॥राख्यातं बौधायनस्त्व।न्नो ह स्माहौपमन्यवः सर्वा एवैता इष्टीर्दक्षिणावतीः कुर्यान्नतस्रस्तस्र एकैकस्यां दद्यान्मिथुनावुत्तमायामिति । ॥

अनन्वारब्धदर्शपूर्णमासस्य प्रायश्चित्तकरण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

I. 67. 18. अन्वारम्भेष्यामिति ॥ चतुर्होतारꣳ सारस्वतौ होमावन्वारम्भेष्टिमित्येतदुपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादिति बौधायनश्च॥तुर्होतारꣳ सारस्वतौ होमावित्येतदुपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादिति शालीकिश्च॥तुर्होतारमेवोपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादित्यौपमन्यवः ॥ सर्वमेवैतदिष्ट्यहनि कुर्यादित्यौपमन्यवीपुत्रः । ॥ १८ ॥ षष्ठः ॥

---

१ Emended; °श्चादित्यस्यचरंतं परीयातामिति U (sec. m.); °श्चादित्यस्यचरुरंतचपरियादिति G (sec. m.); °श्चादित्यस्यचतुरंतं परीयादिति Bu; °श्चादित्यस्य (or स्थ) संत्व (or च) परीयातामिति (or परियादिति) the other MSS.

I. 69. 1. अथातः पुनराधेयं[1] व्याख्यास्यामः ॥

I. 69. 16. सर्पराज्ञीष्विति ॥ सूत्रꣳ शालीकेर् ॥ नो ह स्माह बौधायनः सर्पराज्ञिया त्वग्निर्गार्हपत्यमादधातीति तꣳ षड्भिराधाय सप्तम्योपतिष्ठेतेति । ॥

I. 70. 1. पूर्णाहुत्यै करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

I. 70. 3. तन्त्रकरण इति ॥ सूत्रꣳ शालीकेर् ॥ नो ह स्माह बौधायन उभयानि तन्त्राणि कारयेत्पौनराधेयिकानि चान्याधेयिकानि चाग्नेयमष्टाकपालं निर्वपेत्तस्यासमुदिते ऽन्याधेयदक्षिणा[2] दद्याद् । अथाग्नेयं पञ्चकपालं । तस्यासमुदिते पुनराधेयदक्षिणा[3] दद्याद् । अथैन्द्राग्नं चादित्यं[4] च[4] चरुमथाग्निवारुणं । पारे[5] द्वादशाहस्य तन्त्रं[6] इति[6] । ॥

I. 70. 17. विभक्तीनां धान इति ॥ सूत्रꣳ शालीकेर् ॥ नो ह स्माह बौधायनः सर्वाꣳसर्वास्वृचमुक्त्वा[7] यजेतेत्य । आग्नेयीर्द्व्युचरा[8] विभक्तीर्दध्यादित्यौपमन्यवः । ॥

---

१ पुनराधानं Bu.

२ °क्षिणां Bu D C.

३ °क्षिणां Bu U Ben D C.

४ Emended; च is missing both times in B G (sec. m.), the second च is missing in Be D C Ben H U G (pr. m.).

५ परे H Bu Ben D C U G (pr. m.); पारे Be G (sec. m.).

६ इति is missing in all the MSS., which read तन्त्रो; the vivaraṇa runs: द्वादशाहे गते तनु हवीꣳषीति ।

७ Thus Bu G (sec. m.); सर्वास्वृचसु° the other MSS.

८ Thus Be only; °ग्नेयीद्युच° the other MSS.

I. 70. 12. पुरोडाशस्य परिहोम इति ॥ दैवतं परिजुहुयादिति बौधायनः । सस्विष्टकृत्कमिति शालीकिः ॥

I. 70. 14. स्विष्टकृतो निर्वचन इति ॥ स्वे स्थाने निर्ब्रूयादिति बौधायनः । स्वे स्थाने निरुप्य कामं तत ऊर्ध्वं निर्ब्रूयादिति शालीकिरथो ह स्माहौपमन्यवः पञ्चैतानि स्विष्टकृत्स्थानानि भवन्तीति[1] । तेषु[2] सर्वेषु निर्ब्रूयादिति ॥

I. 71. 17. अथापाहृताग्नेर्नष्टारणीकस्य चेति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनः कामं नष्टेषु वापहृतेषु वाग्निषु नाद्रियेताग्न्याधेयमाधानप्रभृति यजमान एवाग्नयो भवन्ति । तस्य प्राणो गार्हपत्योऽपानोऽन्वाहार्यपचनो व्यान आहवनीयः । काममुपावरोह्य जुहुयादिति ॥

I. 72. 3. अग्नीनां विहरण इति ॥ सूत्रं बौधायनस्याधानप्रभृत्येवैतेऽजस्राः स्युरिति शालीकिः ॥

I. 72. 17. पात्राणाꣳ सादन इति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनः कूर्चे वा तृणेषु वा पात्राणि सादयेदपसव्यं[3] दारुणा[3] दारु[3] संलीयमानं[3] भवतीति ॥

---

१ G. om. इति ।

२ ज्येष्ठः (meaning? ) ins. Bu.

३ Uncertain reading. Bu reads as given in the text; ०सव्यं दारुणा दारु सल्लीय० G (sec. m.); ०सव्यं दारुणा दारु (sec. m. दारुणा) संधीय० U; ०सव्यां दारुणा दारुराधीय० Ben H; ०सव्या दारुणा दारुणा संधीय० Be; ०पसव्या दारुणां दारुराधीय० D C; ०पसव्यां दारुणां दारु सधीय० G (pr. m.).

द्वयोर्होम इति ॥ स ह स्माह बौधायनो यदि पूर्वां[1] प्रैषं नीयादुत्तरया[2] प्रायश्चित्तं कुर्वीताथ यद्युत्तरा[3] प्रैषं नीयादुभयं[4] प्रैषकृतं[5] स्यादन्यथा प्रायश्चित्तं कुर्वीतेत्यथो ह स्माह शालीकिर्यतरा कतरा चिद् प्रैषं नीयादुभयं[6] प्रैषकृतं स्यादन्ययैव ततः प्रायश्चित्तं कुर्वीतेति । ॥ १९ ॥

I. 73. 10. अभिज्वलन इति ॥ सूत्रं बौधायनस्य । गार्हपत्यादङ्गारेणाभिज्वाल्य त्रिः पर्यग्नि कुर्यादिति शालीकिः । ॥

I. 73. 13. वर्त्म कुर्वन्नुदगुद्वासयतीति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनस्तत्रैव[7] त्रिः प्रतिष्ठापयन्निवोद्वासयेत्त्रय इमे लोका । एष्वेव लोकेषु प्रतितिष्ठतीति[8] । ॥

I. 73. 18. उन्नयन इति ॥ पूर्णान्वानूचो वेति । पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

---

१ पूर्वां G (sec. m.); पूर्वी Be; पूर्वया H Ben U C D; पूर्वद्या Bu.

२ Emended; नेयादु॰ H Ben U D C; न्येयादु॰ Be G (sec. m.).

३ ॰त्तरा Be G (sec. m.); ॰त्तरया H Ben U C D G (pr. m.); ॰त्तरद्या Bu.

४ नेयादु॰ H Ben Bu U C D G (pr. m.); न्येयादु॰ Be G (sec. m.). — Thus G (sec. m.); ॰दुभयच Bu; ॰दुभयचै Be; ॰दुभये the other MSS.

५ घोर (घोरं, घेरि) क्षतं Ben H U G (pr. m.) C D.

६ नेयादु॰ Bu U C D G (pr. m.); नेयदु॰ Ben H; न्ययादु॰ G (sec. m.) Be. — ॰दुभय (instead of ॰दुभयं) H Ben U D C.

७ Thus Bu Be; तत्रतचैव Ben G U D C; तत्रतत्र H.

८ Thus (and cp. XX. 22) Bu G and U (sec. m.); ॰ष्ठानोति H Ben C Be, G and U (pr. m.); ॰ष्ठानीति D.

20. संमर्श[१] इति ॥ स ह स्माह बौधायन उभयꣳ संमृशेच्च स्थाल्याꣳ स्रुग्गतं चेति ॥ स्रुग्गतमेवेति शालीकिः । ॥

4. 4. अथ जघनेन गार्हपत्यमुपसादयतीति ॥ स्रुचं बौधायनस्त्वग्रेणातिहारयेति[२] शालीकिः । ॥

20. हवन इति ॥ स्वयं व्यवेत्य जुहुयादिति बौधायनो । यद्यस्य पुत्रो वान्तेवासी वालंकर्मीणः[३] स्यात्स दक्षिणत आसीनो जुहुयादिति शालीकिः । ॥

?. आकूत्योर्होम इति ॥ पूर्वापरे जुहुयादिति बौधायनः ॥ प्रष्टी[४] इति शालीकिः । ॥

.8. द्विरुपमृज्य द्विर्निमृजेदिति बौधायनः ॥ सकृदुपमृज्य द्विर्निमृजेदिति शालीकिः । ॥

5. 2. द्विरङ्गुल्या प्राश्योदङ् पर्यावृत्य प्राचीनदण्डया स्रुचा भक्षयतीति ॥ स्रुचं बौधायनस्तूदीचीनदण्डया भक्षयेदिति शालीकिः । ॥

---

१ Thus Bu Be and the vivaraṇa; संमर्शन H Ben G U D C.

२ Thus (and cp. XX. 8: 21. 4) Bu G and U (sec. m.) ०तिहरयेति Be; ०भिहारयेति Ben G (pr. m.); ०भिमार्येति H U (pr. m D C corrupt.

३ Thus G U (sec. m.); वालंकमीनः Ben; वालंकर्मिणः H; वालंकर्मणः Bu; वालंचर्माण Be; cp. XX. 2: 6. 12.

४ Thus G (sec. m.) and the vivaraṇa; प्राची H Ben Be U D C; प्राचोष्टी Bu; cp. XX. 13: 29. 11.

76. 9-13. निर्णिज्य स्रुचं निष्ठ्याद्भिः पूरयित्वोदगुद्दिशतीति[1] जघनेन गार्हपत्यमपो निनयतीदमहमग्नौ वैश्वानरे ऽमृतं जुहोमि स्वाहेत्यचित्यामचिताकृतिमिति वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

I. 76. 18. आग्निपावमानीभिरुपस्थान इति ॥ स ह स्माह बौधायनः संवत्सरं यथोपस्थितमाहवनीयमुपस्थाय तत आग्निपावमानीभिर्गार्हपत्यमुपतिष्ठेताथ गायत्रीभिरथ द्विपदाभिरथ श्वो भूते यथायथमित्य॥न्नो ह स्माह शालीकिर्यत्वाक् चोर्ध्वं चाग्निपावमानीभ्यस्तेन संवत्सरं यथोपस्थितमाहवनीयमुपस्थाय तत आग्निपावमानीभिर्गार्हपत्यमुपतिष्ठेताथ गायत्रीभिरथ द्विपदाभिरथ श्वो भूते यथायथमित्ये॥वमौपमन्यवो[2] न चास्यात ऊर्ध्वमाग्निपावमान्य आहवनीयमागच्छेयुर्न गार्हपत्यं । स्वाध्यायार्था एवास्यात ऊर्ध्वं स्युरिति[3] ॥ व्याहृतीभिरुपस्थाय भर्तुं वः[4] शकेयं श्रद्धा मे मा विगादित्येव ब्रूयादित्याञ्जीगविः । ॥

I. 79. 4. आग्निःश्विति[5] ॥ स ह स्माह बौधायन आत्मने प्रथम-

---

१ उदगुद्दिशतीति found only in Bu and G (sec. m.). Be and U (sec. m.) have instead बहिर्. About the constitution of the text of this dvaidham and its meaning I am uncertain.

२ All the MSS. exc. G (sec. m.) om. एवम्।

३ All the MSS. ins. शालीकिर्, which in G is effaced.

४ Effaced in G.

५ आग्नीध्विति MSS.

माम्नाम्नीताय जातेभ्यो ऽथ तन्तव इत्य॥चो ह स्माह शालीकिर्जातेभ्यः प्रथममाम्नाम्नीतायात्मने ऽथ तन्तव इत्य॥चो ह स्माहौपमन्यवो ऽजातेष्वेवात्मने[1] च तन्तवे चेति ॥ काममपि सायंप्रातराम्नाम्नीतेत्यौपमन्यवीपुत्रः । ॥ २० ॥

I. 79. 10. पिण्डपितृयज्ञस्य करण इति ॥ स ह स्माह बौधायन आदित एव प्राचीनावीतं कुर्वीत । स प्राचीनावीत्येव स्यादाकृतीनाꣳ होमादाकृतीर्होष्यन्यज्ञोपवीतं कुर्वीत । स यज्ञोपवीत्येव स्यादा सकृदाच्छिन्नस्य स्तरणात्सकृदाच्छिन्नꣳ स्तरिष्यन्प्राचीनावीतं[2] कुर्वीत । स प्राचीनावीत्येव स्यादा प्राजापत्यायै । यज्ञोपवीत्येव प्राजापत्ययर्चा गार्हपत्यमुपतिष्ठेतेत्य॥चो ह स्माह शालीकिरादित एव प्राचीनावीतं कुर्वीत । स प्राचीनावीत्येव स्यादा प्राजापत्यायै । यज्ञोपवीत्येव प्राजापत्ययर्चोदङ्ङियादिति[3] । ॥

तूष्णीꣳ[4] सकृदुत्पूय सकृत्प्रोक्ष्य सकृद्धविष्कृद्रूपं कुर्यादिति बौधायनः ॥ सकृदेवैनान्सुफलीकृतान्कृत्वा पवित्रवत्याꣳ स्थाल्यामोप्य स्थालीपाकꣳ श्रपयित्वाभिघार्योदञ्चमुद्वासयेदिति शालीकिः । ॥

---

१ The avagraha given only by G (sec. m.); to the reading ऽजातेषु the vivaraṇa also seems to point.

२ स्तरीष्य° H Be.

३ Thus G (sec. m.); °र्चौदियादिति Ben H C D G and U (sec. m.); र्चौदङ्ङियादिति Bu; °र्चादश्येयादिति Be U (pr. m.).

४ Effaced in G.

I. 80. 5. आहुतीनाꣳ होम इति ॥ सूत्रं बौधायनस्य ॥ नात्र मध्यमामाहुतिं जुहुयान्मेक्षणमेव तृतीयꣳ स्यादिति शालीकिः । ॥

I. 80. 9. सकृदाच्छिन्नस्य स्तरण इति ॥ उपनिष्क्रम्याग्न्यगाराद्दक्षिणे पूर्वे ऽवान्तरदेशे सकृदाच्छिन्नꣳ स्तृणीयाद्दक्षिणतश्चोल्मुकमुपनिदध्यादिति बौधायनो ॥ ऽन्तरेवैतां दिशमिति शालीकिर्न चात्रोल्मुकमुपनिदध्यादिति । ॥

I. 80. 11. पिण्डानां दान इति ॥ सूत्रꣳ शालीकेर् ॥ नो ह स्माह बौधायनः परस्तादेवामुतो ऽर्वाचो ऽपसलैः पिण्डान्दद्यादिति[1] । ॥

I. 80. 20. आञ्जनाभ्यञ्जने मनसो निह्नव[2] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥[3]

I. 81. 18. पिण्डानामनुप्रहरण इति ॥ सूत्रꣳ शालीकेर् ॥ नो ह स्माह बौधायनो ऽत्रैवैते पिण्डाः परिशयीरन्नुच्छिष्टा ह्येते भवन्ति पितृभिर्भक्षंकृता इति[4] । ॥

अतिशिष्टस्य प्राशन इति ॥ स्वयं यजमानः प्राश्नीयादिति बौधायनः ॥ पुत्राय वान्तेवासिने वा दद्यादिति

१ पिंडंदद्या॰ MSS. exc. G (sec. m.).

२ निह्नवन G.

३ No vikalpa is found in the text proper of Baudh.

४ Thus H Ben C D G (pr. m.); भक्षंकृत इति Be; भक्षंकृतस्येति G (sec. m.), भक्षकृतस्येति Bu.

शालीकिः ॥ पत्नीं प्राशयेत्प्रजाह्येषा[१] भवतीत्यौपमन्यवो ॥ ऽङ्गुल्या यावन्मात्रमवघ्रायाथेतरदग्नावनुप्रहरेदित्यौपमन्यवीपुत्रो ॥ भस्मोत्कर उद्वास्य संप्रच्छादयेदित्याञ्जीगविर॥पो[२] ऽभ्यवहरेदिति मौद्गल्यः । ॥ २१ ॥

I. 82. 4. आग्रयणस्य तन्त्रसमास इति ॥ नास्ति तन्त्रसमास[३] ५
आचार्ययोर॥न्यो ह स्माहौपमन्यवः सौम्यं[४] निरुप्याथेतराणि हवींषि निर्वपेदेवमस्य चरुमुखानि[५] हवींषि भवन्तीत्य॥न्यो ह स्माहौपमन्यवीपुत्रो ऽतिपातादावापिक एव सौम्यः स्यादन्तरेण वैश्वदेवं चैककपालं च निर्वपेदित्य॥न्यो[६] ह स्माहाञ्जीगविस्त्री-
ण्येतानि[७] हवींषि भवन्ति । त्रय इमे लोका । एष्वेव लोकेषु १४
प्रतितिष्ठति । श्यामाकेनैवास्य प्रस्तरेणैतदाप्तं भवतीति । ॥

I. 82. 6. अज्यानीनां होम इति ॥ सूत्रं बौधायनस्य ॥ पुरस्तात्स्विष्टकृतो ऽज्यानीरुपजुहुयादिति शालीकिः । ॥

ib. आग्रयणहविषां श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो ॥ ऽप्स्विति शालीकिः । ॥

---

१ Thus Ben Be G U D C; प्राजाह्येषा Bu; प्रजाह्येष H.

२ सं (before प्रच्छाद॰) om. H Ben D C U G (pr. m.).

३ इति ins. G and U (sec. m.); but cp. XX. 18: 40. 4.

४ चरुं ins. H Ben U C D G (pr. m.).

५ ॰मुख्यानि Bu D G (sec. m.).

६ Thus (निर्वपेद्) Ben H Be U D C; श्रापयेद् Bu; effaced in G.

७ Thus without एव, U C D Ben D G (pr. m.) and Keś.; त्रीण्येवैतानि Be Bu G (sec. m.).

आग्रयण एककपालस्य[1] करण[1] इति ॥ कुर्यादिति बौधायनो॥ न कुर्यादिति शालीकिः । ॥

तन्त्रकरण इति ॥ स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः स्युर्वार्त्रघ्नावाज्यभागावुच्चैर्देवताः । कुर्याद्याजमानमित्य॥थो[2] ह स्माह शालीकिः सप्तदशसामिधेनीकाः स्युर्वृधन्वन्तावाज्यभागावुपांशुदेवताः । कुर्याद्याजमानमिति[2] । ॥ २२ ॥ सप्तमः ॥

83.13, 20. विपरिधान[3] इति ॥ स ह स्माह बौधायन आहवनीयेनैकेन विपरिधाय[3] प्रव्रजेत्।प्रोष्य पुनरागम्य[4] सर्वैर्मन्त्रैराहवनीयं प्रत्युपतिष्ठेतेत्य॥थो ह स्माह शालीकिर्यथोपपन्नमेवाग्निभिर्विपरिधाय[3] प्रव्रजेत्।प्रोष्य पुनरागम्य[5] सर्वैर्मन्त्रैरेकैकं प्रत्युपतिष्ठेतेति । ॥

अनुपस्थाय प्रव्रजितश्चेति ॥ यत्र स्मरेत्परोक्षं तत एनं नित्येनोपतिष्ठेतेति बौधायनो॥ न[6] चेत्स्मरेत्प्रोष्य[6] पुनरागम्य[7] नित्येनैवेति शालीकिः । ॥

---

1 कपालकरण H Ben U D C G (pr. m.).

2 Thus U Be G (sec. m.); the other MSS. या (or य)जमान इति ।

3 ॰परिदान and ॰परिदाय D C.

4 ॰गत्य Bu Ben H U G D C; ॰चम्य Be.

5 ॰गम्य Bu and the vivaraṇa; ॰चम्य Be; ॰गत्य Ben H G U C; D defective.

6 न चेतत्म॰ Be Bu G and U (sec. m.); न चेत्स्म॰ D C.

7 ॰गत्य U H Ben G D C.

I. 84. 9. प्रवसथाहुताविति[1] ॥ स ह स्माह बौधायनो यदि कृतं प्रायश्चित्तꣳ स्यान्नाद्रियेत तत्र होतुमथ यद्यकृतꣳ स्यात्तत्रैनां[2] जुहुयादित्यथो ह स्माह शालीकिर्ये प्रत्याम्नातप्रायश्चित्ता ह्येषाः[3] स्युस्तान्येव तत्र प्रायश्चित्तानि स्युरथ येऽप्रत्याम्नातप्रायश्चित्ता ह्येषाः[3] स्युर्नैवैनामाद्रियेतेत्यथो[4] ह स्माहौपमन्यवो यदि चैव कृतं प्रायश्चित्तꣳ स्याद्यदि चाकृतं जुहुयादेव तत्र प्रवसथाहुतिमिति ॥

I. 84. 15. विराजक्रमेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 85. 6. अपामाचमन इति ॥ द्विर्मन्त्रेणाप आचामेत्सकृत्तूष्णीमिति बौधायनः सकृन्मन्त्रेणाप आचामेद्विस्तूष्णीमिति शालीकिः ॥

I. 85. 8. साक्षीकरण इति[5] ॥ स ह स्माह बौधायनः सर्वा एवैता देवताः साक्षिणीः कुर्वीताग्ने व्रतपते व्रतं चरिष्यामीत्यग्निर्वै देवानां व्रतपतिरित्येतदेव[6] नातिमन्येतेति[6] शालीकिः ॥

---

१ Thus emended; प्रवसथाहुति (तौ)ष्विति D C Ben H U (pr. m.); प्रवासादाहुताविति U (sec. m.); प्रवसदाहुताविति G (sec. m.); प्रवसतोहुताविति Bu.

२ ०त्रैता MSS.

३ ह्येषा MSS.

४ Thus C H Ben G U (pr. m.) D (sec. m.); नैवैनाना० Be; नैमैनामा Bu D (pr. m.); नैवैनानामा० U (sec. m.).

५ साक्षी० Bu H and the vivaraṇa (one copy); साक्षि० Ben Be C D G U and the vivaraṇa (another copy).

६ Thus Bu Ben U G D C; ०देवानातीममन्येतेति H; ०देवानामि० Be.

I. 85. 17; 86. 5. कपाले नष्टे भिन्ने वेति ॥ सूत्रमाचार्ययोर्॥न्यो ह स्माहौपमन्यवो मनो ज्योतिर्जुषतां त्रयस्त्रिꣳशत्तन्तव इत्येते स्रुवाहुती हुत्वाथान्यदपि सृजेद्दर्मा देवाꣳ अप्येत्विति । स एष मन्त्रो भवति सं त्वा सिञ्चामि यजुषेति । पयो वाज्यं वासिक्तमेतेनैव मन्त्रेण सꣳसिञ्चेदिति । ॥

I. 87. 3. आज्यग्रहाणां ग्रहण इति ॥ स ह स्माह बौधायनोऽध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च । याजमानैर्यजमानोऽनुमन्त्रयेतेत्य॥न्यो ह स्माह शालीकिरध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च । न याजमानैर्यजमानोऽनुमन्त्रयेतेत्य॥न्यो ह स्माहौपमन्यवो यथापि पौरोडाशिका मन्त्रा नाभिवर्तन्त[1] एवमेवापि याजमाना मन्त्रा नाभिवर्तेरन्निति[1] । ॥

I. 87. 14. परिधीनां परिधान इति ॥ स ह स्माह बौधायनोऽध्वर्युरेवोभयैर्मन्त्रैः परिदध्यात्पौरोडाशिकैश्च याजमानैश्च । याजमानैर्यजमानोऽनुमन्त्रयेतेत्य॥न्यो ह स्माह शालीकिरध्वर्युरेवोभयैर्मन्त्रैः परिदध्यात्पौरोडाशिकैश्च याजमानैश्च न याजमानैर्यजमानोऽनुमन्त्रयेतेत्य॥न्यो ह स्माहौपमन्यवो यथापि पौरोडाशिका मन्त्रा नाभिवर्तन्त[1] एवमेवापि याजमाना मन्त्रा नाभिवर्तेरन्निति[1] । ॥

I. 88. 2. समिधोरभ्याधीयमानयोर्जपतीति ॥ सूत्रं बौधायनस्य ॥ सर्व एवैषोऽग्नियोजनो मन्त्रः स्यादिति शालीकिः । ॥ २३ ॥

---

१ G and U (sec. m.) each time नाभिनिव॰, Bu the second time.

I. 88. 8. अथ भूर्भुवः सुवरित्यग्निहोत्रमेताभिर्व्याहृतीभिरुपसादयेदिति ॥ स एवमेव संवत्सरेसंवत्सर इति सूत्रꣳ शालीकेर॥ त्रो ह स्माह बौधायनो यस्याꣳ रात्र्यामादित उपसादयेत्संवत्सरे पर्यवेते तस्यामुपसाद्य न तत ऊर्ध्वमाद्रियेतेत्य॥ त्रो ह स्माहौपमन्यवो ऽभ्यारूढः खल्वस्यैव[1] संवत्सरो भवति । यस्याꣳ रात्र्यामादित उपसादयेत्संवत्सरे पर्यवेते या ततः पूर्वा रात्रिः स्यात्तस्यामुपसाद्य न तत ऊर्ध्वमाद्रियेतेति । ॥

I. 88. 11. दर्शपूर्णमासावालभमान एताभिर्व्याहृतीभिर्हवीꣳष्यासादयेदिति ॥ स एवमेव संवत्सरेसंवत्सर इति सूत्रꣳ शालीकेर॥ त्रो ह स्माह बौधायनो यस्यां पौर्णमास्यामादित आसादयेत्संवत्सरे पर्यवेते तस्यामासाद्य न तत ऊर्ध्वमाद्रियेतेत्य॥ त्रो ह स्माहौपमन्यवो ऽभ्यारूढः खल्वस्यैव[2] संवत्सरो भवति । यस्यां पौर्णमास्यामादित आसादयेत्संवत्सरे पर्यवेते या ततः पूर्वा पौर्णमासी स्यात्तस्यामासाद्य न तत ऊर्ध्वमाद्रियेतेति । ॥

I. 88. 15. चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवीꣳष्यासादयेदिति ॥ स एवमेव संवत्सरेसंवत्सर इति सूत्रꣳ शालीकेर॥ त्रो ह स्माह बौधायनो यस्यां पौर्णमास्यां वैश्वदेवहवीꣳष्यासादये-

---

१ एवं (एवꣳ) instead of एव Be G U C D Bu; the passage is missing in H Ben.

२ एव Be H Ben U; एवं Bu D G C.

त्संवत्सरे[1] पर्यवेते तस्यां[1] वैश्वदेवहवीꣳष्यासाद्य[1] न तत ऊर्ध्वमाद्रियेतेत्यन्यो ह स्माहौपमन्यवो ऽभ्यारूढः खल्वस्यैव[2] संवत्सरो भवति । यस्यां पौर्णमास्यां वैश्वदेवहवीꣳष्यासादये-त्संवत्सरे पर्यवेते या ततः पूर्वा पौर्णमासी स्यात्तस्याꣳ शुना-सीरीयहवीꣳष्यासाद्य न तत ऊर्ध्वमाद्रियेतेति ।

88. 21. व्याहृतीनां धान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

90. 15. प्राशित्रे ऽवदीयमाने जपतीति ॥ सूत्रं[3] मैत्रेयस्याचार्ययोः[3] प्राशित्रे ऽवदीयमाने जपत्यग्निर्मा दुरिष्टात्पातु सविताघशꣳसादिति ॥

90. 17. यजमानभागे यो मे ऽन्ति दूरे ऽरातीयति तमेतेन जेषमिति ॥ सर्व एवैष स्विष्टकृदनुमन्त्रणो मन्त्रः स्यादित्यौपमन्यवः ॥

I. 92. 6. वेदे यजमानं वाचयतीति ॥ सूत्रꣳ शालीकेरन्यो ह स्माह बौधायनो वेदे यजमानं वाचयति वेदो ऽसि वित्ति-

---

१ In G this passage has been changed in the following way: °सादयेदिति स संवत्सरे पर्यवेतै तस्यां शुनासीरीयहवींष्यासाद्य; in U it runs: °सादयेत्संवत्सरे पर्यवेते तस्यां पौर्णमास्यां शुनासीरीयहवींष्यासाद्य; possibly G and U are right in reading (l. 1) शुनासीरीय° instead of वैश्वदेव°।

२ स्वं Ben G.

३ Thus Bu G (sec. m.); सूत्रमाचेयस्याय° the other MSS.

रमि विदेयेति । यद्यज्ञातव्यस्याभिध्यायेत्तस्य[1] नाम गृह्णीया-त्तदेवास्य सर्वं वृङ्क्त इति । ॥

अथ यदि यजमानः सुरापो वा भवति प्रवसति वेति ॥ स ह स्माह बौधायनः प्रवसतः प्रस्तरेणैवास्य सह यजमान-भागमनुप्रहरेद्ध्रुवायै वाज्येन पर्युपस्तीर्य जुह्वामवधाय जुहु-यात्प्रस्तरभूयं[2] यजमानभागो गच्छतीत्य ॥ नो[3] ह स्माह शालीकिराहित एव न सुरापेण संसृज्येताथ चेत्संसृज्येत मन्त्रानु हैनं वाचयेत्किमु भक्षान्न[4] भक्षयेदिति[4] ॥ भक्षयेन्नैव भक्षानित्यौपमन्यवः । ॥

I. 93. 7. आदित्यस्योपस्थान इति ॥ उपनिष्क्रम्याग्न्यगारादादित्य-मुपतिष्ठेतेति बौधायनो ॥ ऽत्रैव तिष्ठन्निति शालीकिः । ॥

पौर्णमास्यामुपवेषस्य करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

I. 94. 9. व्रतविसर्ग इति ॥ मन्त्रेणाप आचम्य मन्त्रेण व्रतं विसृजे-तेति[5] बौधायनस्तूष्णीमप आचम्य मन्त्रेण व्रतं विसृजेतेति शालीकिरु ॥ पवेषेण चरित्वा व्रतं विसृजेतेत्यौपमन्यवः । ॥

---

१ यद्य twice in Bu G (sec. m.), once in the other MSS.

२ ०भूयं U Bu G (sec. m.); भागं Ben H C D G (pr. m.); Be uncertain.

३ नुगच्छती G (sec. m.).

४ भक्षानभक्ष० Bu, भक्षान्भक्ष० Be.

५ Here and *infra* only Be has the medium, the other MSS. have the active.

94. 12. यज्ञस्य पुनरालम्भं जपतीति ॥ सूत्रं बौधायनस्याहवनीयमेवैतेन यजुषोपतिष्ठेतेति शालीकिः । ॥ २४ ॥ अष्टमः ॥

107. 1. अथातः पशुबन्धं व्याख्यास्यामः ॥

स ह स्माह बौधायनः सोपवसथा इष्टिपशुबन्धा इति ॥ सोपवसथा[1] वा[1] सद्योयज्ञा[1] वेति[1] शालीकिः । ॥

इष्टिकरण इति ॥ पशौपशावेवाग्नेयेनाष्टाकपालेन यजेतेति बौधायनो ॥ बभ्रुकर्णौ चैवैतद्‌जवशायां[2] च दृष्टं भवतीति शालीकिः । ॥

स्फ्यो यूपो भवतीति ॥ स्फ्यप्रकार[3] एवायं चषालवान्यूपो भवतीति बौधायनो[4] ॥ ऽस्फ्य[4] एवायमन्यगारिको ऽचषालो यूपः स्यादिति शालीकिः । ॥

विशाखो यूपो भवतीति ॥ ऊर्ध्वꣳ रशनाकालाद्वे[5] शाखे चतुरश्रे चतुरश्रचषाले[6] स्यातामथेतरो ऽष्टाश्रिर्यूपः स्यादिति

---

१ Thus G (sec. m.) and Bu (the last MS. reading, however, °यज्ञौ); सोपवसथासद्योज्ञाश्चेति Ben U D C; सोपवसथायोवासद्योयज्ञाश्चेति H; सौपवसथौः सद्योयज्ञाश्चेति Be; cp. Rudradatta on Āp. VII. 6. 3.

२ °द्‌जवशा° Bu G (pr. m.); °द्‌जावशा° Ben U C D G (sec. m.); °द्प्रवशा° Be; °द्‌डावशा° H.

३ स्फ्याकार G D, स्फ्यकार C.

४ Thus Be (without, however, the avagraha); °धायन (or नः) स्फ्य the other MSS.

५ °कालादे MSS.

६ Thus Be; चतुरश्रेरचषाले H; चतुरश्रे(श्रे)चषाले the other MSS.

बौधायनः ॥ शाखैवेयमचषाला स्याद्येतरो ऽष्टाश्रिर्यूपः स्यादिति शालीकिः । ॥

I. 107. 6. सक्तुकरण इति ॥ सूत्रं बौधायनस्य ॥ व्रीहीणामपि कुर्यादिति शालीकिः । ॥

I. 107. 8. षड्ढोतुर्होम इति ॥ सूत्रं बौधायनस्यौपवसथ्य एव षड्ढोतारं जुहुयादिति शालीकिः । ॥

I. 107. 10. यूपाहुत्यै हवन इति ॥ सूत्रꣳ शालीकेर ॥ त्रो ह स्माह बौधायन आज्यं चारणी चादाय यूपस्यान्तिके ऽग्निं मथित्वा यूपाहुतिं जुहुयादिति । ॥

I. 108. 4. आव्रश्चनस्याभिहोम इति ॥ सूत्रꣳ शालीकेर ॥ त्रो ह स्माह बौधायन एवमेव जुह्वामन्तर्धाय हिरण्यमभिजुहुयाद्वनस्पते शतवल्शो विरोह स्वाहेति । सहस्रवल्शा वि वयꣳ रुहे-मेत्यात्मानं प्रत्यभिमृशेताथोदकꣳ[1] स्पृशेदिति । ॥

I. 108. 12. यूपस्यावाहन इति ॥ यः प्राङ् वोदङ् वा पद्येत तमावा-हयेदिति बौधायनो ॥ यां[2] कां[2] चिद्दिशमभि पद्येताव्यापन्न-स्तस्यादावाहयेदेवेति शालीकिः । ॥

I. 108. 13. वेद्यै करण इति । सूत्रमौपमन्यवीपुत्रस्यात्रो ह स्माह बौधायनो रथसंमिता स्याद्रथाक्षेण पश्चात्तिरश्ची रथेषया

---

१ Thus (and cp. Vol. I, p. 108, 7, medium !) Bu G (sec. m.); °मृशती° Be; °मृशेद्° the other MSS.

२ यांकांचिद्दिशम° G (sec. m.).

प्राची रथयुगेन[1] पुरस्तात्तिरश्चुत्तरयुगेनोत्तरनाभिरिति[2] ॥ चतुर्निमिता वा स्यात्सर्वतो वा दशपदा विराट्संपन्नेति[3] शालीकिः ॥ २५ ॥

109. 3. चात्वालस्य परिलेखन इति ॥ सूत्रꣳ शालीकेर्न्नो ह स्माह बौधायन एवमेव परिलिखन्बाह्यतः[4] पुरस्ताच्चोत्तरतश्चालिखेदिति । ॥

लोकाग्नीनाꣳ हरण इति ॥ सूत्रꣳ शालीकेर्न्नो ह स्माह बौधायन उत्तरवेद्यामाग्नीध्रमुपवेश्य[5] ततो लोकाग्नीन्हरेदित्युद्देशादेव लोकाग्नीन्हरेदित्यौपमन्यवः ॥

110. 1. उत्तरवेद्यै परिमाण इति ॥ सूत्रꣳ शालीकेर्न्नो ह स्माह बौधायनो रथसंमितायामेव धौरेयशम्यया परिमिमीत[6] नात्र मध्यमा वेदिर्भवतीति ॥

110. 4; M. 7. 13. आख्यातं यूपावटस्य परिलेखनम् ॥

---

१ ॰युगेण Bu.

२ उत्तरयुगेण all the MSS. (exc. U sec. m.) and the vivaraṇa.

३ Thus G; विराट्संमितेति U (sec. m.); विराट्संपन्नेति H Ben D Be CU (pr. m.); विराट्सन्नेति Bu.

४ Thus Be DC; ॰लिखचाह्यतः H; ॰लिखवाह्यतः Ben; ॰लिखेवाबाह्यतः Bu; ॰लिखेत्बाह्यतः G (sec. m.) U.

५ Thus Bu and a bhāṣya in the Bombay MS. class I B 5; ॰ध्रमुपविश्य Be; ॰ध्र उपविश्य Ben HUDC; ॰ध्रं उपविश्य G.

६ Thus Bu G (pr. m.); ॰मिमीते the other MSS.

I. 110. 1. उत्तरवेद्या अलंकरण[१] इति ॥ सूत्रं बौधायनस्य ॥ पूर्वं-धुरेवोत्तरनाभिं परिनिस्तिष्ठेदिति शालीकिः । ॥

I. 110. 13. स्फ्येनाग्नीध्रो निघ्नन्त्विति होतुः पदानीति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनः पदात्पदं पांसूननुपसंहृत्य[२] तानुत्तरेणोत्तरनाभिमतिकिरेदिति । ॥

I. 110. 16. उत्तरवेद्यै प्रोक्षण इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनो मन्त्रानुदिशं चैनां प्रोक्षेन्मन्त्रानुलोकं चेति । ॥

I. 110. 20. अतिशिष्टानां निनयन इति ॥ वेद्यै दक्षिणेंऽसे निनयेदिति बौधायन ॥ उत्तरवेद्या इति शालीकी ॥ रथसंमितायामेव दक्षिणमंसमुपनिनयेदित्यौपमन्यवः । ॥

I. 111. 1. उत्तरवेद्यै व्याघारण इति ॥ सूत्रं बौधायनस्य ॥ प्रत्यनीकेष्वेनां[३] व्याघारयेदिति शालीकिर्लक्षणयैव व्याघारयन्मध्ये हुत्वोत्तरमंसमभिजुहुयादित्यौपमन्यवः । ॥

I. 111. 11. इध्मस्य निधान इति ॥ सूत्रं बौधायनस्य ॥ तूष्णीमेवेध्मं निदध्यादिति शालीकिः । ॥

I. 111. 14. अध्वराहुतीनां होम इति ॥ सूत्रं बौधायनस्य ॥ चत्वारि चतुर्गृहीतानि जुहुयादिति शालीकिः । ॥

I. 112. 11. पृषदाज्यग्रहणे संमार्जनसादन इति ॥ सूत्रं बौधायनस्य ॥

---

१ °कार Bu. Be.

२ °ननुपसंहृत्य Be; °नुपहृत्य GU (sec. m.); °नुपसंहृत्य Bu H Ben U (pr. m.) DC.

३ पृष्वनीके° Bu Ben HC; पृध्वनीके° Be; पश्वनीके° D; प्रत्यनीके° GU, the vivaraṇa and the bhāṣya.

लभेतौपभृते[1] संमार्जनसादने इति शालीकिर्न संमृजेदित्यौपमन्यवः । ॥

I. 112. 13. पृषदाज्यस्य ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ हृदयान्तेन गृह्णीयादिति शालीकिः ॥ संहृत्याज्यं च दधि चैतैः पञ्चभिर्गृह्णीयादित्यौपमन्यवो ॥ ऽत्रो ह स्माहौपमन्यवीपुत्रस्तूष्णीं द्विरुपस्तीर्य सर्वैर्मन्त्रैर्दध्यानीय तूष्णीं द्विरभिघारयेदिति । ॥

पृषदाज्यस्य प्रायश्चित्तकरण इति ॥ ग्रहणादग्रा[2]चरणादच्चैवास्य[2] प्रायश्चित्तं कुर्वीतेति बौधायनः ॥ सादनादग्रा[2]चरणादच्चैवेति[3] शालीकिर्न तु दूषितमात्र[4] इत्यौपमन्यवः[4] । ॥

I. 113. 7. यूपस्य प्रक्षालन इति ॥ सूत्रं बौधायनस्य ॥ तूष्णीमेव यूपं प्रक्षालयेदिति शालीकिः । ॥

I. 113. 10. यूपस्य प्रोक्षण इति ॥ स ह स्माह बौधायनः स्वरुमग्रं मैत्रावरुणदण्डं यूपशकलꣳ हिरण्यमुदपात्रमित्येतत्संनिधाय यूपं प्रोक्षेदित्येवं यूपेन यूपसंयोजनानि प्रोक्षेत्पशुना पशुसंयोजनानीति शालीकिः । ॥

---

१ Thus the vivaraṇa; ॰तौपभृते Bu; तौपभृतः the other MSS.; cp. Kāty. V. 4. 28.

२ Or are we to write ॰दग्राचरणा॰? The meaning of this passage is not clear to me.

३ च्च effaced in G.

४ Meaning and reading uncertain; दृषतिमात्र इ॰ G (sec. m.) and the bhāṣya; दूषितमात्रे the vivaraṇa; दृषतपात्र इ॰ Bu; दृषतिमात्र इ॰ Be; पषितमात्रमि॰ Ben HCDG (pr. m.); पतितमात्र॰ U.

113. 18. यूपस्य परिक्रमण[1] इति ॥ दक्षिणेनेति बौधायन ॥ उत्तरेणेति शालीकिः । ॥

I. 114. 2. यूपस्याञ्जन इति ॥ सूत्रं बौधायनस्याग्निष्ठामेवेति शालीकिः । ॥

उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो ॥ यथोपपादमिति शालीकिः । ॥

114. 16. यूपस्य परिव्ययण इति ॥ त्रिरेव मन्त्रं ब्रूयात्त्रिः कर्मावर्तयेदिति बौधायनः ॥ सकृदेव मन्त्रं ब्रूयात्सकृत्कर्मेति[2] शालीकिः । ॥

ib. नाभिदघ्ने परिव्ययतीति ॥ सूत्रं बौधायनस्य ॥ मध्यदेश इति शालीकिः । ॥ २६ ॥

I. 114. 21. स्वरोरवगूहन इति ॥ सूत्रं बौधायनस्याग्निष्ठां प्रतीति शालीकिः । ॥

I. 115. 2. पशोरुपाकरण इति ॥ सूत्रमौपमन्यवीपुत्रस्यातो ह स्माह बौधायन एवमेवोपाकुर्यान्न तु जोषयेदिति ॥ जोषयेत्त्वेव जुहुयाच्चोपाकरणायेति शालीकिरतो ह स्माहौपमन्यव एवमेवैनं पुरस्तात्प्रत्यगावृत्तं[3] बर्हिर्भ्यां च प्लक्षशाखया चाभिसेधेदेतस्यां[4] च प्लक्षशाखायाᳪ हृदयं निधायावद्येदिति । ॥

---

१ Thus Ben HDCUG (pr. m.) and the vivaraṇa; ॰क्राम G (sec. m.); ॰क्रम Bu Be.

२ ब्रूयात्त्रिः कर्मेति G (sec. m.)

३ Thus DGU; ॰वर्तं Bu; ॰वृतं the other MSS.

४ Thus H Ben DCBe G (pr. m.) and the vivaraṇa; ॰भिषेधेदे॰ G (sec. m.); ॰भिसधेदे॰ U; B has a lacuna.

I. 115. 9. अरण्योः समञ्जन इति ॥ सूत्रꣳ शालीकेर″चो ह स्माह बौधायनो ऽग्नेर्जनित्रमसीति शकलमाददीत ′ वृषणौ स्थ इति ऊर्वं[1] वा शकले वा [2]निदध्या′दुर्वश्यसीत्यधरारणिमाददीत ′ पुरूरवा इत्युत्तरारणि′मथैने आज्यस्थाल्याꣳ समज्य[3] घृतेनाक्ते वृषणं दधातामिति समवदध्यादिति ′ ॥

I. 115. 15. पशुरशनाया आदान इति ॥ मन्त्रेणाददीतेति बौधायनस्″तूष्णीमिति शालीकिः ′ ॥

I. 115. 16. पशोरभिधान इति ॥ सूत्रं बौधायनस्य ″ ग्रीवायामेवाभिदध्यादिति[4] शालीकिः ′ ॥

I. 115. 19. पशोर्नियोजन इति ॥ सूत्रं बौधायनस्य ″ यूप एव पशुं नियुञ्ज्यादिति शालीकिः ′ ॥

ib. पशोः प्रोक्षण इति ॥ तूष्णीꣳ संस्कृताभिरद्भिः प्रोक्षेदिति बौधायनः ″ कमण्डलुभिरिति[5] शालीकिः ′ ॥

I. 116. 7. पशोः समञ्जन इति ॥ सूत्रꣳ शालीकेर″चो ह स्माह बौधायनो ललाटे स्रुचं प्रतिष्ठाप्यानुच्छिन्दन्कर्षेदा दक्षिणायै श्रोणेरिति ′ ॥

---

१ पूर्वं Be Ben U (pr. m.).

२ वानुनिदध्या° Be U (sec. m.).

३ Thus HD; समंज्य U Ben; समज्य C; समंज्याद्‌ Be; समनक्ति Bu G (sec. m.).

४ Thus G and U (sec. m.) and the vivaraṇa; ग्रीवायामेनमभि° the other MSS.

५ Thus D Bu; कमंडलभि° GUC (sec. m.); कामंडलभि° the other MSS.

स्वरुग्रहणस्योत्पादन इति ॥ यूपः स्वरुग्रहणमुत्पादयेदिति बौधायनः'' पशुरिति शालीकिस्'' तन्त्रमित्यौपमन्यवो'' देवतेत्यौपमन्यवीपुत्रः ॥ २७ ॥ नवमः ॥

I. 116. 13. अत्याश्रावण इति ॥ सूत्रं बौधायनस्य'' सोम एवात्याश्रावयेदिति शालीकिः' ॥

I. 117. 2. पशोः समञ्जन इति ॥ स ह स्माह बौधायनो यथा[1] समञ्ज्यान्[2] तथा[1] विशस्यान्[3] ल्लितया[1] घृतस्यावद्येदिति'' यथोपपादमिति शालीकिः' ॥

I. 117. 4. पशोः पर्यग्निकरण इति ॥ सहशामित्रं पर्यग्नि कुर्यादिति बौधायनो'' यदन्यच्छामित्रादिति शालीकिः'' पशुं चाज्यानि चेति राथीतरः'' पशुमेवेत्यौपमन्यवः' ॥

I. 117. 6. अपाव्यानाꣳ होम इति ॥ स ह स्माह बौधायन एकं प्रथमे पर्याये जुहुयाद्द्वे मध्यमे द्वे उत्तम इति'' यथोपपादमिति शालीकिः' ॥

I. 117. 12. उपप्रैषाश्रावण इति ॥ सूत्रं बौधायनस्य'' नाश्रावयेदिति शालीकिः' ॥

I. 117. 17. पशोर्निहनन इति ॥ प्रतीचीनशिरसमुदीचीनपादमिति

---

१ यथा and तथा (instead of यथा and तथा) some of the MSS.

२ समंज्यातया Bu.

३ विशंस्या॰ all; विशसनं न कुर्यात् the vivaraṇa; cp. Āp. VII. 14. 13 and Bhāradvāja VI. 11: या अक्ता धारा तया पशुꣳ समनक्ति तयैव हविषः घृतस्यावद्यतीत्यया विशस्ति यथाकामी विशसन इत्यपरम् ।

बौधायन " उदीचीनशिरसं प्रतीचीनपादमिति शालीकिः " प्राचीनशिरसमुदीचीनपादमित्यौपमन्यव: ' ॥

118. 5. पशुरशनाया उदसन इति ॥ चात्वाले रशनामुदस्येदिति बौधायनो " ऽद्भिरभ्युक्ष्यासंचर[1] इति शालीकिः ' ॥

118. 9. पत्न्या उदानयन इति ॥ सूत्रꣳ शालीकेर्"नो ह स्माह बौधायनो ऽनवां प्रेहीत्येनां प्रणयेदथैनामादित्यमुदीच्यानवां प्रेहीत्येव प्रणयेदिति ' ॥

118. 10. अपामवेक्षण इति ॥ उपरिष्टाच्चात्वालस्यावेक्षयेदिति बौधायनः ' पार्श्वतः पशोरिति शालीकिः ' ॥

119. 6 बर्हिषः समञ्जन इति ॥ सूत्रꣳ शालीकेर्"नो ह स्माह बौधायनस्तथाक्तमेवेतरत्स्यादितरत एवैनदक्त्वा निरस्येद्रक्षसां भागो ऽसीत्यथोदकꣳ स्पृशेदिति ' ॥ २८ ॥

वपायाः प्रदान इति ॥ आज्यस्रुवा वा स्रुर्हिरण्यं वा[2] द्वितीये चतुर्थे चेति " पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

121. 4. पशुपुरोडाशस्य निर्वपण इति ॥ सूत्रं बौधायनस्य " पशुमालभ्य पुरोडाशं निर्वपेदिति शालीकिः ' ॥

121. 5. पशोः प्रच्यावन इति ॥ हृदयजिह्वे[3] प्रच्यावयेदिति बौधायनो " हृदयमेवेति शालीकिः ' ॥

---

१ द्विरभ्युक्ष्य H Ben DCG (pr. m.).

२ Found only in G and U (sec. m.) and the vivaraṇa; cp. also Rudradatta on Âp. VII. 20. 9.

३ हृदयं जिह्वां Bu G and U (sec. m.) Keś.; हृदयं जिह्वे U (pr. m.); हृदयजिह्वा D.

121. 10. हृदयस्य श्रपण इति ॥ सूत्रं शालीकेर्॥नो ह स्माह बौधायनः शूलपाक्यमेवैनच्छ्रपयेद्।नैव हृदयशूलं परिनिस्तिष्ठे-।दुपरिष्टाच्च मन्त्रेणोपस्पृशेदिति[1] । ॥

121. 13. पशुपुरोडाशस्येडाया अवदान इति ॥ सूत्रं शालीकेर्॥नो ह स्माह बौधायनो निरवदायैवास्य स्विष्टकृतमिडामवद्येदेवं सवनीयानामिति । ॥

122. 2. इडसूनस्य करण इति ॥ सूत्रं बौधायनस्य ॥ बर्हिष्येव प्लक्षशाखायां हृदयं निधायावद्येदिति शालीकिः । ॥

122. 3. पशोः संवदन इति ॥ सूत्रं । शालीकेर्॥नो ह स्माह बौधायनः[2] पृष्ठाभिक्रामेत्पूषा[3] मा पशुपाः पात्विति । द्वितीयं पृष्ठाभिक्रामेत्पूषा[3] मा प्रपथे पात्विति । तृतीयं पृष्ठाभिक्रामेत्पूषा[3] माधिपतिः पात्विति । ॥

122. 9. पशोरभिघारण इति ॥ सूत्रं बौधायनस्य ॥ पृषदाज्येन हृदयमभिघार्याज्येनेतराण्यभिघारयेदिति शालीकिः । ॥

पशोरासादन इति ॥ पञ्चहोत्रासादयेदिति बौधायन॥स्तूष्णीमिति शालीकिः । ॥

122. 17. पशोरवदान इति ॥ स ह स्माह बौधायनो हृदयस्य

---

१ मंत्रेणोपः स्पृ॰ G (sec. m.) U Bu; मंत्रेणाप (पः) स्पृ॰ Be G (pr. m.) DC Ben H (मन्त्रेणोपस्पर्शनम् the vivaraṇa).

२ प्रथमं ins. DC.

३ Thus Bu G (sec. m.); ॰तिक्रामे॰ U Be Ben H; ॰निष्क्रामे॰ DC, but cp. Āp. VII. 23. 6 अभिप्रव्रजति with Rudradatta's remark.

जिह्वाया वक्षस इत्येतेषामेवानुपूर्वमवद्येत्तृतीयं[१] चात्रावदानं पञ्चावत्तिनां कुर्यादित्य ॥ न्यो ह स्माह शालीकिः सर्वेषामेवानुपूर्वमवद्येन्न चात्र तृतीयमवदानं पञ्चावत्तिनां कुर्यादिति । ॥ २९ ॥

123. 9. पशोः संमर्शन इति ॥ स ह स्माह बौधायन उभयानि[२] संमृश्येद्येभ्यस्त्रावद्येत्स्रुग्गतानि चेति ॥ स्रुग्गतान्येवेति शालीकिः । ॥

123. 13. कुम्भतः श्रीणातीति ॥ सूत्रं बौधायनस्य ॥ समस्तेनैवास्य पार्श्वेन वसाहोमꣳ श्रीणीयादिति[३] शालीकिः । ॥

123. 16. पशोः प्रतिपरिहरण इति ॥ प्रतिपरिहरेदिति[४] बौधायनो ॥ न प्रतिपरिहरेदिति शालीकिः । ॥

123. 17. अत्याक्रमण इति[४] ॥ सूत्रं बौधायनस्य ॥ जघनेनोत्तरवेदिं परिक्रम्याश्रावयेदिति शालीकिः । ॥

124. 4. दिशां प्रतीज्याया इति ॥ सूत्रꣳ शालीकेर ॥ न्यो ह स्माह बौधायनः पुरस्ताद्वनस्पतेः समान्यो दिशः प्रतियजेद्दिग्भ्यः स्वाहेति । हुत्वोपतिष्ठेत[५] स्वाहा दिग्भ्यो नमो दिग्भ्य इति । ॥

---

१ एतेषाम् Bu G (sec. m.); एषाम् the other MSS.

२ Thus Bu G (sec. m.); सर्वाणि the other MSS.

३ श्रिणीयादिति Bu; श्रीणातीति the other MSS.

४—४ The words प्रतिपरि० ... ०क्रमण इति left out by all the MSS. exc. Bu and G and U (sec. m.).

५ ०तिष्ठते MSS.

I. 124. 7. वनस्पतेश्चर्यीया इति ॥ सूत्रं बौधायनस्य ॥ पृषदाज्याच्चतुर्गृहीतेन चरेदिति शालीकिः । ॥

I. 124. 13. वनिष्ठोराधान इति ॥ षडवत्तꣳ संपादयेदिति बौधायनः ॥ सकलमेवेति शालीकिः । ॥

I. 124. 18. औपयजेष्विति ॥ सूत्रꣳ शालीकेर्॥ चो ह स्माह बौधायन आहवनीयादेवोदीचो ऽङ्गारान्निर्वर्त्य तेषूपयष्टोपयजेदिति । ॥

I. 125. 2. गुदतृतीय इति ॥ एकादशधा कृत्वोपयष्टोपयजेदिति बौधायनो ॥ ऽपच्छेदमिति[1] शालीकिः ॥ समस्तमेवैनमनुप्रहृत्य[2] सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः । ॥

I. 125. 4. अथ बर्हिषि हस्तौ निमार्ष्टीति ॥ सूत्रं बौधायनस्यापो ऽप्यस्मा[3] अचानयेयुरिति[3] शालीकिः । ॥ ३० ॥

I. 125. 6. स्वरोर्होम इति ॥ सूत्रं बौधायनस्य ॥ चतुर्गृहीते ऽवधाय जुहुयादिति शालीकिः । ॥

I. 125. 10. पत्नीनाꣳ संयाजन इति ॥ सूत्रं बौधायनस्याज्येनैव[4] पत्नीः संयाजयेदिति शालीकिः[4] । ॥

---

१ °वच्छेदमिति Ben, with प the other MSS. and the vivaraṇa cp. XX. 12: 26. 12, XXII. 15 s. f.

२ °मेवैतमनु Bu G (sec. m.); °मेवैतदनु° H Ben Be CDUG (pr. m.)

३ चास्मा अचानये° G (sec. m.) Ben; प्यास्मा अचानये° CD; ह्यप्यस्मा अचानये° Bu; यस्मा अचानुनये° H; लचांनये° Be; चस्मा अचानये° U.

४ आचार्ययोः instead of बौधायनस्य and औपमन्यवः instead of शालीकिः G (sec. m.)

I. 125. 11. उत्तानायै जाघन्यै देवानां पत्नीर्यजति नीच्या अग्निं गृहपतिमिति ॥ सूत्रं बौधायनस्य ″ सर्वमेवैतदुत्तानायै जाघन्यै कुर्यादिति शालीकिः ′ ॥

125. 12. उत्तानायै जाघन्यै होत्र इडामवद्यति[१] नीच्या[२] अग्नीधे[२] षडवत्तमिति ॥ सूत्रं बौधायनस्य ″ सर्वमेवैतदुत्तानायै जाघन्यै कुर्यादिति शालीकिः ′ ॥

I. 125. 15. फलीकरणहोमस्य करण इति ॥ कुर्यादिति बौधायनो ″ न कुर्यादिति शालीकिः ′ ॥

I. 125. 16. ध्रुवाया आप्यायन इति ॥ स ह स्माह बौधायन उभावेव ध्रुवामाप्याययेतामध्वर्युश्च यजमानश्चेत्यध्वर्युरेव ध्रुवामाप्याय्य समिष्टयजूꣳषि जुहुयादिति शालीकिः ′ ॥

*ib.* समिष्टयजुषाꣳ होम इति ॥ सूत्रं बौधायनस्य ″ त्रीणि चतुर्गृहीतानि जुहुयादिति शालीकिः ′ ॥

I. 126. 6. हृदयशूलस्योद्वासन इति ॥ कुर्वीतात्र सुमित्रास्य दुर्मित्रास्येति बौधायनो ″ न कुर्वीतेति शालीकिः ′ ॥

126. 10. समिधां करण इति ॥ सर्वा एवार्द्राः सपलाशाः कुर्वीरन्निति बौधायनो ″ यजमानस्यैव पत्नी चेति शालीकिः ′ ॥

I. 126. 14. बर्हिषः पर्युपोषण इति ॥ वेद्यै दक्षिणेऽꣳसे पर्युपोषेदिति बौधायन ″ उत्तरवेद्या इति शालीकिः ′ ॥

---

१ Thus G (sec. m.); इडां समवद्यति the other MSS.

२ [illegible]

I. 126. 16. सक्तुहोमस्य करण इति ॥ त्रीन्सक्तुहोमान्कुर्यादिति बौधायन ॥ एकमेवेति शालीकिः ॥ प्रदाव्य एव सक्तुहोमेन चरेदित्यौपमन्यवः । ॥

I. 127. 6. III. 54. 10. आख्यातं देवतानामुपस्थानम् ॥

I. 127. 8. यूपस्योपस्थान इति ॥ सूत्रं बौधायनस्याहवनीयमेवैतेन यजुषोपतिष्ठेतेति शालीकिः । ॥

I. 127. 10. समन्वानयन[1] इति ॥ सूत्रं बौधायनस्य ॥ नाद्रियेतेति शालीकिः । ॥

I. 127. 13. पूर्णाहुत्यै करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

I. 127. 14. दक्षिणायै दान इति ॥ धेनुं वानड्वाहं वा दद्यादिति बौधायनो ॥ ऽन्यद्वैकधनमिति शालीकिरन्यद्वैकधनमिति शालीकिः । ॥ ३१ ॥ दशमः ॥

॥ इति विंशः[2] प्रश्नः ॥

---

१ Thus B.n HGUC and the vivaraṇa; समन्वायन Bu; समन्वानयन Be; समन्यान D.

२ On the [illegible]

I. 128. 1. अथातश्चातुर्मास्यानि व्याख्यास्यामः ॥

स ह स्माह बौधायनो यावज्जीवप्रयुक्तान्येव चातुर्मास्यानि स्युरन्तर्मिथुनानि । प्रथमे त्वेव संवत्सरे व्रतं चरेदित्य॥थो ह स्माह शालीकिः सांवत्सरिकाण्येव खलु[1] चातुर्मास्यानि ब्रह्मचर्यवन्ति भवन्तीति ॥ यथाप्रयोगमित्यौपमन्यवः । ॥

I. 128. 5. पयसां मन्त्रामन्त्र इति ॥ उभये सायंप्रातर्दोहा मन्त्रवन्तः स्युरिति बौधायनस्तू।ष्णीका इति शालीकिर॥थो ह स्माहौपमन्यवो यत्प्राक्सोमेज्यायै चातुर्मासिकानि पयांसि तूष्णीकानि स्युरथोर्ध्वं[2] सोमेज्यायै मन्त्रात्त्वभेरन्नित्य॥थो[3] ह स्माहाश्मीगविः पञ्चैवैतानि पयांसि मन्त्रवन्ति भवन्ति[4] दर्शपूर्णमासयोर्मैत्रावरुण्यामिक्षायां दाक्षायणयज्ञे कौण्डपायिन्ये सौत्रामण्यामिति । ॥

I. 128. 8. वैश्वानरपार्जन्ययोः[5] करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

I. 128. 9. फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्तीति ॥ सूत्रं बौधायनस्योदगयन आपूर्यमाणपक्षस्य पुण्याह इति शालीकिः । ॥

---

१ Om. H Be.

२ Thus H Ben Be G (pr. m.) U DC Keś.; स्युरत ऊर्ध्वं Bu; अथ effaced in G.

३ Thus Bu; मंत्रां G; मंत्रा the other MSS.

४ भवंतीति Bu Be G (sec. m.).

प्रस्तूमयं[१] प्रस्तरमिति[१]॥ सूत्रं बौधायनस्य सर्वमेवैतद्बर्हिः
प्रस्तूमयꣳ स्यादिति शालीकिः ॥

पञ्चहोतुर्होम इति॥ सूत्रं बौधायनस्योपवसथ एव पञ्च-
होतारं जुहुयादिति शालीकिः ॥

प्रयाजानामनुमन्त्रण इति॥ चतुरश्चतुर्भिरनुमन्त्र्य[२] पञ्चमे-
नेतराननुसमियादिति[३] बौधायनश्चतुरश्चतुर्भिरनुमन्त्र्य सर्वेषां
I. 133 पारे पञ्चमेनानुमन्त्रयेतेति[४] शालीकिः ॥

एककपालानां मन्त्रामन्त्र इति॥ मन्त्रवन्तः स्युरिति
I. 137. बौधायनस्तूष्णीका इति शालीकिः ॥

एककपालानामवदान इति॥ स ह स्माह बौधायन-
I. 138 श्चातुर्मास्यिकानामेव नावद्येदथेतरेषामवद्येदित्यथो ह स्माह
शालीकिस्त्र्यम्बकहराणामेवावद्येदथेतरेषां[५] नावद्येदित्यथो ह
स्माहौपमन्यवो य एव वैश्वदेवपक्षोषि तस्य नावद्येदथेतरेषा-
मवद्येदिति ॥

138. 4

---

१ ०मयः प्रस्तर इति MSS. exc. Bu U (pr. m.) and the vivaraṇa; the accusative as XXIII. 18: माषैः पूर्णं कमण्डलुमिति।

२ Thus Be; चतुर्भिश्चतुरो G (sec. m.); चतुरश्चतुर्भिश्चतुरो G (pr. m.) चतुर्भिश्चतुर्भिश्चतुर्भिरन् D; चतुर्भिश्चतुर्भिरनु० Ben C.

३ ०नुसमीयादिति Bu G (sec. m.); समीयादिति (without अनु) Ben HDC; पंचमीयदिति Be.

४ ०मंचयेदिति MSS.

५ ०हराणामेवा० Be U (sec. m.); ०हराणमेवा० Ben; ०हरणानामेव G (sec. m.); ०हरेणमेवा० Bu; ०करणमेवा० HU (pr. m.); ०हरणमेवा० C (pr. m.), ०हराणमेवा० C (sec. m.)

एककपालानामभिहोम इति ॥ यः स्रुचि संस्रावः स्यात्तेनाभिजुहुयादिति बौधायनश्च॥तुर्भिश्चतुर्भिर्ऋतुनामभिरेकैकमिति शालीकिः । ॥ १ ॥

एककपालानामाग्रयणस्यानुसंहरण इति ॥ अनुसंहरेदिति बौधायनो ॥ नानुसंहरेदिति शालीकिः । ॥

I. 132. 4. वाजिनस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन ॥ उच्चैरिति शालीकिः । ॥

I. 132. 6. वाजिनस्य भक्षण इति ॥ सूत्रं शालीकेर॥न्नो ह स्माह बौधायनोऽवघ्रभक्षणेनैवेतरे[1] भक्षयेयुर्यजमान एव प्रत्यक्षं भक्षयेदिति । ॥

I. 132. 17. निवर्तन इति ॥ निवर्तनेनोपवाप्योभयं[2] केशश्मश्रु वापयीतेति बौधायनो ॥ निवर्तनेनोपवाप्य[2] श्मश्रूण्येव वापयीत न केशानिति शालीकि॥र्निवर्तनेनोपवाप्य[2] नैव श्मश्रूणि वापयीत न केशानित्यौपमन्यवः । ॥

I. 133. 6. वरुणप्रघासेषु दक्षिणस्य विहारस्य पात्राणां करण इति ॥ सूत्रं बौधायनस्य ॥ सौवर्णानि वा राजतानि वा स्युरिति शालीकिः ॥ अश्मोमयानीत्यौपमन्यवः ॥

---

१ °भक्षणेनै° Bu G and U (sec. m.); °भक्षेणै° DHC Ben Be G and U (pr. m.).

२ Uncertain reading; °नोपवाप्य each time H Ben Be UDG (pr. m.) C, °नोवाप्य G (sec. m.), thus also (besides °नोपाव) Bu; the vivaraṇa seems to have read also °नो वाप्यः; it runs: निवर्त(ने)नो

स्तम्बयजुषोर्हरण इति ॥ व्यतिचारꣳ स्तम्बयजुषी हरेयातामिति[1] बौधायनः ॥ सहेति शालीकिः । ॥

आज्यस्यावेक्षण इति ॥ दार्शपौर्णमासिकायै दक्षिणत उपविश्य दक्षिणमवेक्ष्योत्तरमवेक्षेतेति बौधायनो ॥ वेदिसंधावुपविश्य दक्षिणमवेक्ष्योत्तरमवेक्षेतेति शालीकिर्॥ मध्यत[2] इत्यौपमन्यवः । ॥

I. 133. 8. ऐषीकꣳ शूर्पमिति ॥ सूत्रं बौधायनस्य ॥ दर्भमयं वा कुशमयं वेति शालीकिः ॥ प्रत्यक्षमित्यौपमन्यवः । ॥

I. 137. 12. शूर्पस्यानुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो ॥ नानुप्रहरेदिति शालीकिर्॥ अद्भिरभ्युक्ष्य भुञ्जीतेत्यौपमन्यवः । ॥

I. 138. 8. आमिक्षयोरवदान इति ॥ सूत्रꣳ शालीकेर्॥ अथो ह स्माह बौधायन आमिक्षयोरवदाय मेषीमवदध्यान्[3] शमीपर्णकरीरसक्तूनामवद्येद् घासोका ह्येते भवन्तीत्य्॥ उत्तमेनावदानेन सर्वं विस्रलोपꣳ[4] समवदध्यादित्यौपमन्यवः[4] । ॥ २ ॥

I. 138. 4 (?) मारुत्यै चर्याया इति ॥ सूत्रं बौधायनस्योत्तर एवाग्नौ मारुत्या चरेदिति शालीकिः । ॥

---

१ Thus (and cp. XXV. 1. s. f.) Bu Ben HGU; हरियामिति DC; हरेतामिति Be.

२ मध्य Bu G (sec. m.).

३ Thus H Ben DC; मेषमुपद॰ Bu; मेषावुपद॰ Be G and U (sec. m.).

४ Thus Bu Be U (sec. m.); ॰लोपमवदध्या॰ H Ben. G; ॰लोप-

I. 139. 4. माहत्यै केचणस्यानुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो नानुप्रहरेदिति शालीकिः ॥

I. 140. 10. अवभृथ इति ॥ सूत्रमाचार्ययोर्द्वौ ह स्माहौपमन्यवस्तुवैश्य निष्कारेण चावभृथमवेयादिति ॥

आख्यातमुदकान्तस्य प्रत्यसनम्[1] ॥

आख्यातमाप्लवनम्[1] ॥

I. 140. 14. III. 67. 16. आख्यातꣳ समिधां करणम् ॥

I. 141. 15. आनीकवतस्य निर्वपण इति ॥ पाणिसंमर्शनेनादित्यस्योदयमाकाङ्क्षेतेत्याचार्ययोर्मुष्टिमेव गृह्णीयन्नित्यौपमन्यवः ॥ साकꣳ रश्मिभिः प्रचरेदित्यौपमन्यवीपुत्रः ॥ एष एवापि सांतपनस्य प्रदेश एष कैडिनस्य ॥

I. 141. 18. गृहमेधीयस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति[2] बौधायनस्तूष्णीक इति शालीकिः ॥

गृहमेधीयस्य निर्वपण इति ॥ पवित्रवता पात्रेण मन्त्रवन्तमिति[3] बौधायनो ऽपवित्रेण तूष्णीकमिति शालीकिः ॥

---

१ Of these two dvaidhas the first seems to refer to Vol. I. 261. 17; the second, according to the vivarana, to III. 67. 16: आप्लवनं स्नानम् । उभयं (sc. द्वैधं) समिधां करणेन व्याख्यातं सर्वे वा पत्नीयजमानौ वेति नान्यदिहाख्यातमस्ति कल्पवित्त्या सर्वमिहाख्यातं तत्रावशेषवचनमनर्थकं स्यात् ।

२ मन्त्रवत्स्यादिति DC; मन्त्रवस्स्यादिति H.

३ [illegible]

I. 141. 20. गृहमेधीयस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो " ऽप्स्विति शालीकिः ' ॥

शाकलानां करण इति ॥ कुर्यादिति बौधायनो " न कुर्यादिति शालीकिः ' ॥

I. 141. 22. गृहमेधीयस्यासादन इति ॥ दात[1] एव बर्हिष्यासादयेदिति बौधायनो " ये ऽन्ये ऽनुपयुक्ताः कुशाः स्युस्तेष्विति शालीकिः ' ॥

I. 142. 1. गृहमेधीयस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन " उच्चैरिति शालीकिः ' ॥

शाकलानामनुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो " नानुप्रहरेदिति शालीकिः ' ॥

I. 142. 5. प्रतिवेशस्य श्रपण इति ॥ अन्वाहार्यपचने श्रपयेदिति बौधायनो " ग्रामाग्नाविति शालीकिः ' ॥

I. 142. 10. पूर्णदर्व्यस्य[2] होम इति ॥ सूत्रमाचार्ययो"र्व्याहृतीरुक्त्वा ब्रह्मणो हिंकारे[3] जुहुयादिति गौतमः ॥ ३ ॥ प्रथमः ॥

I. 143. 19. महापितृयज्ञस्य बर्हिषीति ॥ समूलमेतद्बर्हिर्भवतीति बौधायनस्तत्र नास्ति प्रत्यभिमर्शन इति " सातिशेषं[4] भव-

---

१ दात Ben H (as partic. from द्यति); दप Be; C D om. दात एव; विशय G and U (sec. m.), thus (var. विषय) the vivaraṇa.

२ °दर्व्यस्य Bu, the vivaraṇa; °दर्वस्य H Ben Be G U D C.

३ °कारेण H G D C U (pr. m.); °कारेणाभिजु° U (sec. m.).

४ Thus H Ben G U D C; Be defect.; सशेषं Bu.

तीति शालीकिस्तत्र सिद्धः प्रत्यभिमर्शन इति ॥ निर्मूल-
लूनमेवैतल्लुनुयादित्यौपमन्यवः[1] । ॥

I. 144. 16. अथैतदभिवान्यायै दुग्धमर्धपात्रमिति ॥ सूत्रं बौधायन-
स्याथ यदि कनीयः स्याददद्भिरभ्युन्नयेति[2] शालीकिः । ॥

I. 144. 9. तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोद्यच्छन्ते यवा-
नीति ॥ सूत्रं शालीकेरन्नो ह स्माह बौधायन आवपन-
प्रभृति यज्ञेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृत्[3]
स्यादिति । ॥

I. 145. 1. आप्यनिनयन इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनये-
दिति बौधायनो ॥ ऽग्रेणातिहायेति शालीकिरग्रेण वा जघ-
नेन वेत्यौपमन्यवः । ॥

I. 145. 2. वेद्ये करण इति ॥ उपनिष्क्रम्याग्न्यगाराद्दक्षिणे[4] पूर्वे
ऽवान्तरदेशे कुर्यादिति बौधायनो ॥ ऽन्तरेवैतां दिशमिति
शालीकिरन्वाहार्यपचनमेवाभित इत्यौपमन्यवः । ॥

I. 145. 3. अन्वाहार्यपचनस्योपसमिन्धन इति ॥ स्वे स्थान उपसमि-
न्धीरन्निति बौधायन ॥ इध्ममेवातिप्रणयेयुरिति शालीकिः । ॥

---

१ लुनुया॰ Be G and U (sec. m.); लुनीया॰ Ben H Bu C D G and U (pr. m.).

२ Thus G U D H C; without अभि Be; ॰भ्युन्नयेतेति Ben Bu.

३ ॰ष्कृत स्यादिति G U C D H Ben; ष्कृत स्यादिति Be; ॰ष्कृतं स्यादिति Bu; cp. XXI. 16, XXII. 11.

४ दक्षिणे Bu G; दक्षिण Ben Be U D C.

I. 145. 12. आज्यग्रहाणां ग्रहण इति ॥ पञ्चगृहीतानि वा षड्गृहीतानि वा स्युरिति बौधायनः ॥ षड्गृहीतान्येवेति शालीकिः । ॥

प्रस्तरस्य मन्त्रामन्त्र इति ॥ ग्रहणं चैवास्य न्यसनं च तूष्णीकꣳ स्यादथेतरन्मन्त्रवत्स्यादिति बौधायनः ॥ संभरणं[1] चैवास्य न्यसनं च तूष्णीकꣳ स्यादथेतरन्मन्त्रवत्स्यादिति शालीकिः ॥ यावन्न्यसनमेव[2] तूष्णीकꣳ स्यादथेतरन्मन्त्रवत्स्यादित्यौपमन्यवः । ॥

I. 145. 15. त्रिरपसलैः परिस्तृणन्पर्येतीति ॥ सूत्रं बौधायनस्य ॥ यथोत्पन्नेनैव सꣳस्तृणीयादिति शालीकिः । ॥

वेद्यै स्तरण इति ॥ सूत्रं बौधायनस्योर्णाम्रदसं त्वा स्तृणामीत्येव ब्रूयादिति शालीकिः । ॥ ४ ॥

I. 145. 17. परिधीनां परिधान इति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनः सर्वान्परिधीन्परिदध्यात्पितृकर्मणि क्रियमाणे दक्षिणतश्चोत्तरमुपनिदध्यादिति[3] । ॥

I. 146. 2. हविषामुद्वासन इति ॥ सूत्रं बौधायनस्य ॥ यथाश्रुतमेव[4] हवींꣳष्युद्वासयेदिति शालीकिः । ॥

हविषाꣳ संचरो[5] ऽध्वर्योश्चेति ॥ दक्षिणेनेति बौधायन ॥ उत्तरेणेति शालीकिः । ॥

---

१ संहरणं Bu.

२ Thus G (sec. m.); यावन्न्यसन॰ the other MSS.

३ Thus all exc. Bu (दक्षिणश्चोत्तरमु॰).

४ Thus G and U (sec. m.), D; यथाहृत॰ the other MSS.

५ संचरो all the MSS. exc. Be (संचरे); the vivaraṇa has also the nominative.

I. 147. 3. विपरिक्रामन्त्येत ऋत्विजो विपरिहरन्ति हवींꣳषीति ॥ सूत्रं बौधायनस्य ॥ नात्र हवींꣳषि विपरिहरेयातामिति[१] शालीकि॥ र्नात्र हवींꣳषि विपरिहरेयातामध्वर्युश्चैवाग्नीध्रश्च[१] विपरिक्रामेतामित्यौपमन्यवः[२] । ॥

. 147. 13. आश्रावण इति ॥ ओ स्वधेति बौधायन ॥ आ स्वधेति शालीकिः । स्वधेत्यौपमन्यवः । ॥

. 146. 13. प्रवर इति ॥ सूत्रमात्रार्येयाविद्वाꣳश्चिकित्वानित्यौपमन्यवः । ॥

I. 149. 7. III. 87. 8. आख्यातं पिण्डानां दानम् ॥

I. 150. 8; [illegible] 87 11. आख्यातमाञ्जनाभ्यञ्जनयोः ॥

[illegible] 150. 12; II. 87. 13. आख्यातं पिण्डानामनुप्रहरणम् ॥

I. 151. 6. त्रैयम्बकाणां मन्त्रा मन्त्र इति ॥ मन्त्रवन्तः स्युरिति बौधायन॥ स्तूष्णीका इति शालीकि॥ र्येनानेककपाल एव श्रपयेदित्यौपमन्यवः ॥

I. 151. 8. एकोल्मुकस्य हरण इति ॥ अन्वाहार्यपचनाद्धरेदिति बौधायनो ॥ ग्रामाग्नेरिति शालीकिः । ॥

I. 151. 9. एतत्समादाय गार्हपत्यमुपतिष्ठन्त इति ॥ स ह स्माह बौधायन उभय[३] एष[३] मन्त्रो भवत्याध्वर्यवश्च याजमानश्चेति ॥ याजमान एवेति शालीकिः । ॥

---

१ Thus all; read probably विपरिहरेतामिति ।

२ Thus Be; °क्रामेयाता मि° the other MSS.

३ Thus G D C H Be U (pr. m.); उभयस्य एव U (sec. m.); उभयस्य य एव Be; उभयेव Bu.

I. 152. 5. त्रैयम्बकाणामुत्खेदन[1] इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनस्त्रिरेवाव्यतिषजन्परीत्य[2] त्रिरुत्खिदेद्भगाय त्वा भगाय[3] त्वेति ॥ ५ ॥

I. 152. 10. अथैनान्यजमानस्याञ्जलावावपतीति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनो यजमानस्यैवैकस्य मन्त्रेणावपेत्तूष्णीं पत्न्यै च[4] भगकामायै चेति ॥

I. 153. 1. अथैनान्मूत ओप्य नीललोहिताभ्याꣳ सूत्राभ्यां विग्रथ्य वृक्षे वा स्थाणौ विशाखायां[5] वा बध्नातीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 153. 5. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः ॥

I. 153. 20. शुनासीरीयपरुष इज्याया[6] इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनो य एवात ऊर्ध्वमापूर्यमाणपक्ष आगच्छे-

---

१ ॰मुत्खिदन G (sec. m.) Be and the vivaraṇa; ॰मुत्खिदमन Bu.

२ Thus G and U (sec. m.) and the vivaraṇa (॰व्यतिषजन्नुत्खिदन्); ॰स्त्रिरेवव्यतिष॰ the other MSS.

३ Thus Be G and U (sec. m.); भगेन Ben H D C G and U (pr. m.).

४ चे (sic) Be, all the other MSS. om. the word.

५ Thus Ben H U D C; विशाख्यां Be Bu G (sec. m.).

६ ॰परुष इज्याया Ben C; परुषा इज्याया U D; पुरुषा इत्याज्याया H; परुषेज्याया Be G (sec. m.) and the vivaraṇa.

त्तस्मिञ्छुनासीरीयपरुषा यजेत । त्रयोदशस्यैवैतन्मासस्यापौज्यार्थं[1] दृष्टं भवतीति । ॥

वेद्यै करण इति ॥ दार्शपौर्णमासिकी स्यादिति बौधायनः । पाशुबन्धिकीति शालीकिः । ॥

दक्षिणानां दान इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनो हिरण्यं वैश्वानरे दद्याद्धेनुं पार्जन्ये द्वादश वैश्वदेवे द्वादश वरुणप्रघासहविःषु तिस्र आनीकवते तिस्रः सांतपने चतस्रो गृहमेधीय ऋषभं पूर्णदर्व्ये[2] तिस्रः क्रैडिने द्वादश महाहविःषु तिस्र आदित्ये द्वादश शुनासीरीयहविःष्वित्यन्नो ह स्माहौपमन्यवस्ततःषष्टिश्चातुर्मास्यदक्षिणाः समाम्नाता भवन्ति । तास्त्वेनाधिगच्छेद्यासांस्त्वेतावन्ति मन्थान्वोदनान्वैतावतो[3] दद्यान्नो हैवैतं काममवाप्नोतीति[4] । ॥

चातुर्मास्यानामन्त इति ॥ सोमान्तानि स्युरिति बौधायनः ॥ पश्वन्तानीति शालीकिः ॥ सवनेष्ट्या यजेतेत्यौपमन्यवः । ॥ ६ ॥ द्वितीयः ॥

---

१ त्रयोदशस्यैवैतन्मा॰ Be H G U (pr. m.); त्रयोदशस्य ह्येवैतन्मा॰ U (sec. m.); त्रयोदशाद्य -- यैतान्मा॰ Bu; त्रयोदशस्य वैतन्मा॰ Ben C U.—॰पौज्यार्थं Ben G U D C; ॰मौज्यार्थं Be; ॰भोज्यार्थं Bu; ॰पौद्मार्थं H.

२ Thus G; ॰दर्वे the other MSS.

३ Thus G U D C and Keś.; मंथान्वोदनान्वेतावतो Ben; मत्य.न्वोदनान्वैतावतो Bu; मंथान्योदनान्वेतावतो H; मथ.न्वेतावतो Be (cp. Vol. I. 44, 15).

४ इति is not found in my copies.

I. 156. 1. अथातो ऽग्निष्टोमं व्याख्यास्यामः ॥

स ह स्माह बौधायनो नादृष्ट्वा राजानं चर्त्विजश्च[1] दीक्षयेदित्य॥थो ह स्माह शालीकिर्यदि दीक्षा दीर्घाः स्युरास्वासिका[2] आहर्तारस्तथोद्गीथः[3] कामं दीक्षयेदिति ॥

I. 167. 2. शालाया[4] अध्वरमान[4] इति ॥ स ह स्माह बौधायनो मध्यंदिने शालामध्वर्य्वेदापः पूर्वा गच्छेयुरन्वग्यजमानो राजा चारणिभ्यां चेत्य॥थो ह स्माह शालीकिः कामं पूर्वाह्णे वापराह्णे वा शालामध्वर्य्वेत्प्राक्त्वेवास्तमयाद्दीक्षणीयाꣳ संतिष्ठापयिषेदिति[5] ॥

I. 156. 16. अग्नीनाꣳ हरण इति ॥ अजस्रान्हरेदिति बौधायनो॥ ऽरण्योः समारोह्येति शालीकिः ॥

---

१ °क्षेति H Be Bu.

२ Uncertain; °रास्व सिका आह° H G (pr. m.) C, the vivaraṇa (one copy); °रास्वासिकां U; °रास्वा सिकामाह° Be; °रास्वासिकाहर्षतार° D; °राव सिवा आह° Bu; °रस्वासितार आह G (sec. m.) and the vivaraṇa (another copy). The vivaraṇa periphrases आस्वासिका (or आस्वासितारः) by प्रत्येतारः (one copy), प्रत्यथैतारः (var. प्रत्य ध यि) त रः. Read perhaps आस्वासकामा आहर्तारः sc. सोमस्य).

३ °गीथाः G (sec. m.). The vivaraṇa: उद्गीथग्रहणशब्देन र्त्विजो लक्ष्यन्ते ... इत्य आह उद्गीथ उद्गातारो गृह्यन्ते।

४ Thus Be H G U D C; in Bu these words are missing; शालायामध्य° the vivaraṇa.

५ Thus G Be U; संतिष्ठापयिषे° Bu; संनि° H; C D corrupt.

I. 157. 1. सप्तहोतुर्होम इति ॥ सूत्रं बौधायनस्य ॥ षड्ढोतारꣳ हुत्वा सप्तहोतारं जुहुयादिति शालीकिः । ॥

I. 157. 3. यूपाहुत्यै हवन इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

वाससामुपकल्पन इति ॥ अष्टाविति बौधायनः ॥ सप्तेति शालीकिः । ॥

कृष्णाजिनानामुपकल्पन इति ॥ पञ्चेति[1] बौधायनः ॥ षडिति[1] शालीकिः । ॥

कृष्णविषाणाया उपकल्पन इति ॥ त्रिवलिरिति बौधायनः ॥ पञ्चवलिरिति शालीकिः ॥ सकलैवैषा स्यादित्यौपमन्यवः । ॥

I. 157. 5. व्रतप्रदान इति ॥ कꣳस इति बौधायनश्चमस इति शालीकिः । ॥

प्रवर्ग्यस्य करण इति ॥ स ह स्माह बौधायनो न प्रथमसोमे प्रवृञ्ज्यादुपनामुको हैनमुत्तरो यज्ञो भवतीति ॥ न प्रवर्ग्यं गच्छेच्चनेति शालीकिः । ॥ ७ ॥

I. 157. 6. तीर्थगमन इति ॥ स ह स्माह बौधायनः प्रदक्षिणमावृत्यैतत्तीर्थं गच्छेदथामुतोऽपसलैरावर्ततेत्यथो ह स्माह शालीकिरपसलैरावृत्यैतत्तीर्थं गच्छेदथामुतः प्रदक्षिणमावर्ततेति । ॥

---

1 In G पञ्च obtains (sec. m.) the place of षड्।

I. 157. 7. अथास्य प्राङ्मुखस्य दक्षिणं गोदानमद्भिरुनत्तीति ॥ सूत्रं बौधायनस्योभयमेवाप्यस्य मन्त्रेण कुर्यादिति शालीकिः । ॥

I. 158. 1. अभ्यञ्जन इति ॥ सूत्रꣳ शालीकेर॥त्वो ह स्माह बौधायनो महीनां पयो ऽसीत्यादाय वर्चोधा असि वर्चो मयि धेहीत्यभ्यञ्जीतेति । ॥

I. 158. 4. आञ्जन इति ॥ सूत्रꣳ शालीकेर॥त्वो ह स्माह बौधायनो वृत्रस्य कनीनिकासीत्यादाय चक्षुष्पा असि चक्षुर्मे पाहीत्याञ्जीतेति[१] । ॥

I. 158. 5. त्रिरनिधावं द्विरुत्तरमप्सु पञ्च कृत्व आङ्क्त इति ब्राह्मणं पञ्च कृत्व एव दक्षिणं पञ्च कृत्व उत्तरमिति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 158. 7. पवन इति ॥ स ह स्माह बौधायनस्त्रीन्सप्तवर्गान्कृत्वा तेषामेकेन प्राणदेशे पवयेदथेतरेण नाभिदेशे ऽथेतरेण गुल्फदेशे । ऽथैनान्यद्भिरभ्युक्ष्योदञ्चुत्क्षिदेदित्य॥त्वो[२] ह स्माह शालीकिर्द्वाभ्यां पवयति त्रिभिः पवयतीत्येतैरेनमेकविंशत्यावग्राहशः[३] पवयित्वाथैनान्यद्भिरभ्युक्ष्योदञ्चुत्क्षिदेदित्य॥त्वो ह

---

१ Thus Keś. only; पाहीत्यञ्ज्ञ इति G U, ॰त्यांञ्ज इति D C; the other MSS. corrupt. An optative is required.

२ Instead of उत्क्षिदेत्, the reading of Be (and once उत्क्षिते॰ Bu), here and infra, the MSS. have उत्क्षिपेत् ।

३ Uncertain; G (sec. m.) as given in the text; पवयतीत्येत्रमेकं चिंशत्या॰ Bu; पवयतीत्युत्तरैरेवमेकविंशत्या॰ U; पवयतीत्युत्तरैरेकमेवविंशत्या॰ H; पवयतीत्युत्तरैकविंशत्या॰ C D; Be wholly corrupt.

स्माहौपमन्यवः समस्तैरेवैनं [1]प्राणदेशे पवयेच्चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति । देवतायां देवतायामतिवाच्याद्भिरभ्युक्ष्योदश्रुत्त्विदेदिति[2] । ॥

158. 11. अथैनꣳ सव्ये पाणावभिपात्येति ॥ दक्षिण[3] इति प्रोक्तं ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

158. 14. अथैनमग्रेणाहवनीयं पर्याणीयेति ॥ जघनेनेति प्रोक्तं ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

I. 159. 5. पत्न्या उदानयन इति ॥ सूत्रꣳ शालीकेर् ॥ न्यो ह स्माह बौधायनः शुचिमेवैनां पवयित्वा सर्वयर्चोदानीय जघनेन गार्हपत्यमुपवेशयेदिति । ॥

158. 17. पत्न्या दीक्षण इति ॥ सूत्रमाचार्ययोर् ॥ न्यो ह स्माहौपमन्यवः प्रायणीये हविष्कृदन्ते पत्नीं दीक्षयेदिति । ॥

159. 10. न यजमानं व्रतमुपनयतीति ॥ सूत्रꣳ शालीकेर् ॥ न्यो ह स्माह बौधायनः सौमिके तन्त्रे पौरोडाशिकं याजमानमभ्यावर्तेतान्यत्र यज्ञस्य पुनरालम्भादिति । ॥

159. 11. न पत्नीꣳ संनह्यतीति ॥ सूत्रꣳ शालीकेर् ॥ न्यो ह स्माह बौधायनो दीक्षणीयायामेनाꣳ [4]संनह्य सꣳस्थितायां विमु-

---

१ Thus Be; **एव** not found in G (pr. m.) Bu H U D C; **एनं** not in G (sec. m.).

२ **देवतायां** once in Bu D H C.

३ **॰क्षिणत** Bu and one copy of the vivaraṇa.

च्चाध्वरिकेण सह याजमानेन[1] तन्त्रेतन्त्रे वात[2] ऊर्ध्वं पौरोडाशिकेन कर्मणाभिसंनह्येदिति । ॥

159. 15. ध्रुवाया आप्यायन इति ॥ स ह स्माह बौधायन उभावेव ध्रुवामाप्याययेतामध्वर्युश्च यजमानश्चेत्य॥ध्वर्युरेव ध्रुवामाप्याय्य दीक्षाहुतीर्जुहुयादिति शालीकिः । ॥

159. 16. दीक्षाहुतीनां होम इति ॥ सूत्रं बौधायनस्य ॥ चतुर्थी[3] पञ्चमीमनुद्रुत्य जुहुयादिति शालीकिरन्यो ह स्माहौपमन्यव आकूत्यै प्रयुज इति तिस्रो ऽनन्तरा हुत्वा सरस्वत्यै पूष्णे ऽग्नय इत्युपातीत्यापो देवीर्बृहतीर्विश्वशम्भुव इत्येतां जुहुयाद्यथोद्गृहणमिति । ॥ ८ ॥ तृतीयः ॥

160. 10. कृष्णाजिनयोरिति ॥ द्वाभ्यां समुञ्जिताभ्यां[4] दीक्षयेदिति बौधायनो । ऽथ[5] यद्यन्यतरत्स्याद्दक्षिणमीर्मं प्रतिषीव्येदित्य॥कमेव[6] कृष्णाजिनं स्यादिति शालीकिः । ॥

160. 11. शुक्लकृष्णयोः संमर्शन इति ॥ शुक्ले ऽङ्गुष्ठो भवति कृष्णे ऽङ्गुलिरित्येवं शुक्लकृष्णे संमृशेदिति बौधायनः ॥

---

१ याजमा॰ G and U (sec. m.) and the vivaraṇa; यजमा॰ the other MSS.

२ वात G (sec. m.) U Be, the vivaraṇa.

३ चतुर्थ्यां G (sec. m.) D.

४ Thus G (sec. m.) only; समुञ्चिताभ्यां the other MSS.

५ Effaced in G.

६ इति before एकमेव found in G only (sec. m.).

पृथेनैवैतꣳ[१] संधिꣳ संमृशेदिति शालीकिर्॥ एनमेकाङ्गुल्यैव संमृशेदित्यौपमन्यवः । ॥

I. 160. 13. कृष्णाजिनस्याभिसर्पण इति ॥ सूत्रꣳ शालीकेर्॥ त्रो ह स्माह बौधायनः पूर्वं वोत्तरं वार्धर्चं विगृह्णीयात्तृतीयेन मध्यदेशं गच्छेदिति । ॥

I. 160. 17, III. 23. 5. आख्यातं ग्रन्थिकरणम् । ॥

I. 160. 22. अथास्य प्रदक्षिणमुष्णीषेण शिरो वेष्टयतीति ॥ सूत्रं बौधायनस्य॥ वाससैव संप्रच्छन्नः स्यादिति शालीकिः । ॥

I. 161. 4. कृष्णविषाणायाः प्रदान इति ॥ सूत्रꣳ शालीकेर्॥ त्रो ह स्माह बौधायनः समस्तेनैवास्मै मन्त्रेण कृष्णविषाणां प्रयच्छेत्तूष्णीं वेद्यन्तमुद्धन्यात्तूष्णीं केशान्तमुपस्पृशेदिति । ॥

I. 161. 9. दण्डस्य प्रदान इति ॥ सूत्रमाचार्ययोर्॥ त्रो ह स्माहौपमन्यवः समस्तेनैवास्मै मन्त्रेण दण्डं प्रयच्छेत्सूपस्था देवः वनस्पतिरूर्ध्वो[२] मा पाह्योदृच इति[३] । ॥

I. 161. 11. अथैनं यज्ञस्यान्वारम्भं वाचयतीति ॥ सूत्रꣳ शालीकेर्॥ त्रो ह स्माह बौधायनो मष्टिकरणाः खल्वेते मन्त्रा दृष्टा भवन्ति

---

१ Thus corrected in accordance with the vivaraṇa, which runs प्रथमेन (*sic*) हस्ततलेन ; प्रथमेनैवैतं G. (sec. m.) ; पृथेनैवैतं Bu ; पृथगेवैन U H D C.

२ Thus Be ; before ऊर्ध्वो H ins. इति ; D U G C abbreviate the mantra, giving only the first and the last words.

३ Thus Be ; C D U G H Bu add यजमानः प्रतिगृह्णाति, apparently a reminiscence of the text proper (Vol. I., 161, 12).

स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इति ' ॥

I. 161. 13. मुष्टिकरण इति ॥ वाचोयमसंयुक्तं[1] मुष्टिकरणꣳ स्यादिति बौधायन '' आवान्तरदीक्षायै विसर्गादिति शालीकिः ' ॥

I. 161. 14. आवेदन इति ॥ यथावर्णमावेदयेदिति बौधायनो '' ऽदीक्षिष्टायं ब्राह्मण इत्येव ब्रूयादिति शालीकिः ' ॥

I. 162. 14. व्रतदोहन इति ॥ सूत्रं बौधायनस्यौपरदारिकमेव[2] यजमानव्रतꣳ स्यादिति शालीकिः ' ॥ ९ ॥

I. 163. 8. यजुषोरनुषङ्ग इति ॥ आ कृष्णाजिनप्राशनादनुषज्जेतामिति[3] बौधायन '' आवान्तरदीक्षायै विसर्गादिति शालीकिर् '' दक्षिणानयनादित्यौपमन्यवः[4] ' ॥

I. 163. 11. संवेशनयजुषीति[5] ॥ सूत्रꣳ शालीकेर् '' नो ह स्माह बौधायनो ऽग्ने त्वꣳ सु जागृहीत्येव संविशेद्व्रतयिष्यन्नप आचामेद्देवीं धियं मनामह इति ' ॥

I. 164. 12. अथ सनीहाराग्प्रहिणोतीति[6] ॥ अन्यत्रोग्रशूद्रयोरिति

---

१ Thus G (sec. m.) and the vivaraṇa; वाचोयमसं॰ Be H U G (pr. m.); वाचंयमसं॰ D C; वाचोयम्यसं॰ Bu.

२ ॰पराद्दा U D H Be C; cp. XXI. 19 init.

३ ॰षजेतामिति H Bu G U D C; ॰षजेदिति Be.

४ Thus Be, the vivaraṇa and Keś.; दक्षिणादानादि॰ H Bu G (sec. m.) U D C; दक्षिणावदनादि॰ G (pr. m.).

५ यजुषोरिति H, यजुषी इति U D C.

बौधायनो ॥ ऽन्यत्रोग्रैरिति[१] शालीकिः । सर्वान्यज्ञसिद्धय इत्यौपमन्यवः । ॥

I. 163. 11. संवेशनयजुःप्रबुद्धयजुःप्रयाणयजुःपर्याणयजुरिति[२] ॥ अनुषङ्गीण्येतानि[३] भवन्तीति बौधायनः ॥ सकृत्कृतान्येवैतान्यह्ने[४] वा रात्रियै वा स्युरिति शालीकिः । ॥

I. 164. 16. दक्षिणानां प्रतिग्रह[५] इति ॥ स ह स्माह बौधायनो यस्य कस्य च जातस्य मन्त्रेण प्रतिगृह्णीयात्पुनरभ्यागतं[६] मन्त्रेणैव प्रतिगृह्णीयादित्यं ॥ नो ह स्माह शालीकिर्यस्य कस्य च जातस्य मन्त्रेण प्रतिगृह्णीयात्प्रतिगृहीतमेव तस्य स्यादागन्त्वेवास्यात[७] ऊर्ध्वं मन्त्रेणैव प्रतिगृह्णीयादिति । ॥

I. 164. 21. अविज्ञातायै दान[८] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

---

१ न्यचानग्रेरिति U D C H; on the instrumental cp. Speyer Sanskrit Syntax § 107.

२ ॰पर्याण॰ instead of ॰परियाण॰ all.

३ Thus Bu U G (sec. m.) and the vivaraṇa; अनुषंगोद्ध्यतानि H G (pr. m.); अनुषंगाण्येतानि Be; D C corrupt.

४ सकृत् twice U Be.

५ प्रतिग्रह G and U (sec. m.) and the vivaraṇa; ॰ग्रहण G (pr. m.) U (sec. m.) and the other MSS.

६ Thus H G (pr. m.) U D C; ॰यागतं G (sec. m.); ॰यांगतं Bu; ॰स्यागतं Be.

७ Reading, meaning and interpunction doubtful; स्यादागंत्वेवास्यात G (sec. m.); स्यादांगत्वेवास्यात G (pr. m.); स्यादागतेवास्यात्त Be; स्यादंगत्वेवास्यात U; ॰दंगत्वेवास्यात D; स्यादंगाल्॰ C.

८ विदान U D Be C; the passage is missing in H.

165. 10. प्रयाण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

165. 12. अथ यद्येनं यान्तं व्रतनवेलोपाधिगच्छतीति ॥ मथित्वाग्नीन्विहृत्य व्रतयेदिति बौधायन॥ उत्तरतोऽरणी निधाय[1] दक्षिणतः परिश्रित्य व्रतयेदिति शालीकिः। ॥

165. 14. अथ यद्यपर्याणा अप उपाधिगच्छतीति ॥ सूत्रं शालीकेर॥न्नो ह स्माह बौधायनो यत्रैवापर्याणा अप उपाधिगच्छेत्तज्जपेद्देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तान्वो[2] गृह्णामीति। त्रीँल्लोष्टानाददीत। तेषामेकमुदकान्ते निदध्यात्तं वो मावक्रमिषमित्यथान्यं ध्वंसयन्ननुद्रवेदच्छिन्नं तन्तुमित्यथान्यमुदकान्ते निदध्यात्पृथिव्या अनुगेषमिति। सं वा गाहते सं वा तरति। सेतुमेव कृत्वात्येतीति ब्राह्मणम्। ॥ १० ॥ चतुर्थः ॥

166. 11. रोहिते चर्मणीति ॥ सूत्रं बौधायनस्याप्यरोहितं स्यादिति शालीकिः। ॥

166. 12. अंशुग्रहणे हिरण्य इति ॥ कुर्यादिति बौधायनो॥ न कुर्यादिति शालीकिः। ॥

167. 2. देवयजनस्याध्यवसान इति ॥ सूत्रमाचार्ययोर॥न्नो ह स्माहौपमन्यवः पुरस्तादेवैतत्त्रैविध्यगतेषु देवयजनमध्यवसेद्विज्ञायते सा वा इयं सर्वैव वेदिरिति। ॥

167. 4. I. 20. 9. (?). आख्यातं प्रायणीयस्य निर्वपणम्। ॥

---

१ After निधाय U Be ins. तस्या, C D तस्य।

२ तान्वो G D C Be, the vivaraṇa; तंवो H U; Bu defective.

I. 167. 12. प्रायणीयस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो" ऽप्स्विति शालीकिः' ॥

I. 167. 13. प्रायणीयस्यासादन इति ॥ षड्ढोत्रासादयेदिति बौधायन" स्तूष्णीमिति शालीकिः' ॥

I. 167. 14. प्रायणीयस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन" उच्चैरिति शालीकिः' ॥

I. 169. 11. आदित्यस्योदीक्षण इति ॥ हिरण्यमन्तर्धायादित्यमुदीक्षेदिति बौधायनो" ऽनन्तर्धायैवेति शालीकिः' ॥

I. 169. 13. सोमक्रयण्या अतिवित्सन इति ॥ सदसः काले ऽतिवित्सयेदिति बौधायन" उपरवकाल इति शालीकिः' ॥

I. 169. 15. सोमक्रयण्यै पदस्यानुनिक्रमण[1] इति ॥ अतिक्रान्तायै पृष्ठ्याकालं दक्षिणस्य पूर्वपदस्यानुनिक्रामेदिति[1] बौधायनो" महावेदिमेवातिक्रान्तायै यस्यैव[2] कस्य[2] चेति[2] शालीकिः' ॥

I. 169. 21. सोमक्रयण्यै पदस्य परिलेखन इति ॥ सूत्रं शालीकेर्" नो ह स्माह बौधायन स्फ्येन च कृष्णविषाणया च पदं परिलिखेदन्तरतः कृष्णविषाणा स्यादिति' ॥ ११ ॥

I. 170. 10. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो" यथोपपादमिति शालीकिः' ॥

---

१ ॰नुनिक्र॰ all (C D only ॰नुनिष्क्र॰); this reading (given by Tr) is also to be restored VI. 12: 169. 16, see TS. VI. 1. 8. 1.

२ यस्यैव कस्यै वेति Bu G. (sec. m.); यस्यै कस्य चेति Be; यकस्य चेति C H D G (pr. m.).

171. 1. राज्ञ उपस्थान इति ॥ स ह स्माह बौधायन उषसा[1] नामेयमोषधिर्भवति[1] ′ तां दूतीं कुर्वीतैष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतादित्य″त्रो[2] ह स्माह शालीकिः प्रत्यक्षः खल्वयꣳ राजा भवति प्रत्यक्षवदेवोपतिष्ठेतैष ते गायत्रो भाग एष ते त्रैष्टुभो भाग एष ते जागतो भागश्छन्दोमानाꣳ साम्राज्यं गच्छेति ′ ॥

171. 9. राज्ञो मान इति ॥ सूत्रं बौधायनस्य ″ निगदन्नेवैतामृचं पञ्च कृत्वो मिमीतेति[3] शालीकिः ′ ॥

172. 5. राज्ञः पणन[4] इति ॥ सूत्रं बौधायनस्य ″ गवा ते क्रीणानीत्येव ब्रूयादिति शालीकिः ′ ॥

172. 8. अजाया उपनिग्रहण इति ॥ सूत्रं बौधायनस्य″ानुपनिगृह्णन्नेवाजां मन्त्रं जपेदिति शालीकिः ′ ॥

197. 1. मैत्रावरुणस्य दण्डप्रदान इति ॥ सूत्रमाचार्ययोर″त्रो ह

---

१ Instead of **उषसा नामेय॰** H C D U read **उपस्थाना अय॰** ।— **ओषधिर्भ॰** G (sec. m.), **ओषधीर्भ॰** H Bu C D U (pr. m.); **ओषधीभिर्भ॰** Be U (sec. m.).

२ The mantras are given partially abbreviated in the MSS.

३ **मिमीते इति** or **मिमीत इति** MSS.

४ Thus Bu G (sec. m.) and the vivaraṇa; **पण** Be H C D U G (pr. m.).

स्माहौपमन्यवः सोमविक्रयिणमुदकुम्भेनोपहृत्यात्रैव[1] मैत्रावरुणाय दण्डं प्रयच्छेदिति । ॥

I. 173. 11. राज्ञः प्रत्यानहन इति ॥ अन्तर्लोम्ना चर्मणा प्रत्यानह्येदिति बौधायन ॥ ऊर्ध्वग्रीवेण बहिर्लोम्नेति शालीकिः । ॥

I. 173. 21. ईषाया अन्वारम्भ इति ॥ सूत्रं बौधायनस्यानन्वारभ्यैवैषां प्रत्यङ् द्रवन्मन्त्रं जपेदिति शालीकिः । ॥

I. 174. 3. राज्ञः परिवहण इति ॥ प्रदक्षिणं परिवहेदिति बौधायनो ॥ यथोपपादमिति शालीकिः । ॥

I. 174. 7. राज्ञः प्रत्युपस्थान इति ॥ स ह स्माह बौधायनो व्रीहिभिस्तारणीभ्यां च राजासन्द्या च राजानं प्रत्युपतिष्ठेतेत्य॥थो ह स्माह शालीकिरजेन च कर्णगृहीतेनोल्मुकेन[2] च[2] राजासन्द्या च राजानं प्रत्युपतिष्ठेत । सो ऽग्नीषोमीयः पशुः स्याल्लोहः[3] स्यात्तूपरः स्यात्षण्डः स्याच्छ्मश्रुमान्स्यात्पीवान्स्यादिति[4] विज्ञायते । ॥ १२ ॥

---

१ सोमक्रयणम् instead of सोमविक्रयिणम् G (sec. m.); सोमक्रयिणम् U D H C.—०भेनोपहृत्या० Bu G (sec. m.); ०भेनोपप्रहृत्या० C D H (sec. m.). ०भेनोमहृत्या H (pr. m.).

२ ०हीतेन लोमशेन U D H C; ०हीतेन लोम्नकेन G.

३ लोहः Bu G and the vivaraṇa; लोमशः H D U C.

४ श्मश्रुमान् G Bu, viv., fails in H U; D Be are defective.—पीवान् Bu U (pr. m.), viv.; पीनवान् Be U (sec. m.); पीतनवा H; D C defective; fails in G (sec. m., first hand invisible). N. B. nomin. पीवान् as Mahābh., not पीवा ।

आतिथ्यस्य बर्हिषः सꣳस्कार इति ॥ असिदादानप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः ॥ शुल्बप्रभृतीनिति शालीकिः ॥ संभरणप्रभृतीनित्यौपमन्यवः । ॥

174. 12. आतिथ्यस्य निर्वपण इति ॥ सूत्रꣳ शालीकेर् ॥ नो ह स्माह बौधायन उभौ विमुच्य राजानं प्रपाद्यातिथ्यं निर्वपेदिति । ॥

175. 14. राज्ञः परिचर्याया इति ॥ सूत्रꣳ शालिकेर् ॥ नो ह स्माह बौधायन ऋचैव राजानं परिचरेदृचार्घ्यमुपनिगृह्णीयादिति । ॥

175. 17. अर्हण इति ॥ यथागतमर्हयेदिति बौधायनो ॥ राजानमर्हयित्वर्त्विजो[1] ऽर्हयेदिति शालीकिः । ॥

175. 19. आतिथ्यस्य करण इति ॥ पुरोडाशश्च गौश्च स्यातामिति बौधायनः ॥ पुरोडाश एवेति शालीकिः । ॥

176. 10. आज्यग्रहाणां ग्रहण इति ॥ चतुर्गृहीतानि वा पञ्चगृहीतानि वा स्युरिति बौधायनः ॥ पञ्चगृहीतान्येवेति शालीकिः । ॥

176. 18. आतिथ्यस्यासादन इति ॥ चतुर्होत्रासादयेदिति बौधायनस् ॥ तूष्णीमिति शालीकिः । ॥

176. 19. आतिथ्यस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन ॥ उच्चैरिति शालीकिः । ॥

177. 19. तानूनप्त्रस्य भक्षण इति ॥ सूत्रꣳ शालीकेर् ॥ नो ह स्माह

---

१ **यथागतम०** instead of **राजानम०** G U; C D and H are defective.

बौधायनो निगुप्तमेवैनं[1] निधापयित्वा व्रतकाले व्रतेन सह भक्षयेदिति । ॥

I. 178. 19. औपसदस्य बर्हिषः सꣳस्कार इति ॥ असिदादानप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः ॥ शुल्बप्रभृतीनिति शालीकिः ॥ संभरणप्रभृतीनित्यौपमन्यवः । ॥

ib. उपसदां मन्त्रामन्त्र इति ॥ मन्त्रवत्यः स्युरिति बौधायनस्तूष्णीका इति शालीकिर्यत्पर्याज्यं[2] तत्तूष्णीकꣳ[2] स्यादथेतरन्मन्त्रवत्स्यादित्यौपमन्यवः[2] ॥ सर्वमेवैतत्कर्मावृता कुर्यादित्यौपमन्यवीपुत्रः । ॥

I. 180. 2-6. आहुतीनाꣳ होम इति ॥ सूत्रं बौधायनस्य ॥ प्राचीरेवैता आहुतीः सꣳस्थापयेदिति शालीकिः । ॥

I. 180. 18. उपसदाꣳ[3] होम इति ॥ सूत्रं बौधायनस्यानत्याक्रम्यैवोपसदो[4] जुहुयादिति शालीकिः । ॥

स्रुचां परिशायन इति ॥ अहोरात्रं परिशयीरन्निति बौधायनो ॥ ऽहरेवेति शालीकिः ॥ कर्मणःकर्मणः प्रयुञ्जीतेत्यौपमन्यवः । ॥ १३ ॥ पञ्चमः ॥

---

१ निगुप्त° Bu G and U (sec. m.), the viv.; नुगुप्त° Be U (pr. m.) G (pr. m.) H D C.

२ Thus G (sec. m.) only, the vivaraṇa of the text proper, and Keś. (पर्याज्यम् = प्रधानम् Viv.). All the other MSS. are more or less corrupt.

३ Thus Bu H G D C; °सदो Be U.

४ Thus Bu H U G (pr. m.) D C; °सदां G (sec. m.), °सदं Be.

. 182. 13. स्तम्बयजुषो हरण इति ॥ सूत्रं बौधायनस्यौपरवकाला-
दप्याग्नीध्रो हरेदिति शालीकिः' ॥

I. 183. 1; III. 57. 4. आख्यातं चात्वालस्य परिलेखनम् ॥

III. 57. 7. आख्यातं लोकाग्नीनाꣳ हरणम् ॥

I. 215. 5 (?). स्फ्यविघनानामुपस्थान इति ॥ सूत्रꣳ शालीकेरथो ह
स्माह बौधायनोऽग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा
तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा यजमानमुत्करे स्फ्यविघनानुपस्था-
पयेदिति' ॥

अग्नीषोमीयस्य बर्हिषः सꣳस्कार इति ॥ असिदादान-
प्रभृतीन्मन्त्रान्साधयेदिति बौधायनः'' शुल्बप्रभृतीनिति
शालीकिः'' संभरणप्रभृतीनित्यौपमन्यवः' ॥

अग्नीषोमीयस्य पशोरनुसंव्रज्याया इति ॥ अनुसंव्रजेदिति
बौधायनो'' नानुसंव्रजेदिति शालीकिः' ॥

. 183. 18. इध्माबर्हिषोरुपसादन[1] इति ॥ सूत्रमाचार्ययोरथो ह
स्माहौपमन्यवोऽन्वैवास्मा आसीनायेध्माबर्हिराहरेत्तदादाय
प्राङ्ङ्यात्कुशहस्तस्य[2] पृष्ठ्याकालं प्राङ् स्तृणान्गच्छेदिति[3] ' ॥

---

१ °दुपकल्पन the vivaraṇa.

२ Thus G (sec. m.) Be; प्रांद्रीयात्कुश° Bu: प्राङ्ङ्याक्कुश° C′; प्राङ्ङ्यात्कुश° U G (pr. m.); प्राङ्ङ्याकु° H; प्राङ्ङेत्यकुश° D C.

३ Thus G C U C′; स्रोनन्गच्छे° Bu; स्तृणनगच्छे° H; स्तृणनागच्छे° Be, स्तृणांनागच्छे° D.

I. 184. 3. हविर्धानयोरभ्यावर्तन[1] इति ॥ काष्ठानि वा तृणानि वान्तर्धायाभ्यावर्तयेदिति[1] बौधायनो ॥ ऽनन्तर्धायैवेति[2] शालीकिः । ॥

I. 184. 4. हविर्धानयोः प्रोक्षण इति ॥ तूष्णीꣳ संस्कृताभिरद्भिः प्रोक्षेदिति बौधायनः ॥ कमण्डलुभिरिति[3] शालीकिः । ॥

I. 184. 13. वर्त्मनोरभिहोम इति ॥ सूत्रमौपमन्यवीपुत्रस्यान्तो ह स्माह बौधायनो दक्षिणस्य हविर्धानस्य वर्तनिमभिजुहुया-त्सर्वा[4] अक्षधुर उपाञ्ज्यात्सर्वतस्य परिम्नृशेदित्यन्तो ॥ ह स्माह शालीकिः सर्वा एव वर्तनीरभिजुहुयात्सर्वा अक्षधुर उपाञ्ज्या-त्सर्वतस्य परिम्नृशेदिति । ॥

I. 185. 16. मेथ्योर्निहनन इति ॥ स ह स्माह बौधायनो दक्षिणस्य हविर्धानस्य दक्षिणतो मेथीं निहन्यादुत्तरस्य दक्षिणत इति ॥ दक्षिणतश्चोत्तरतश्चेति शालीकि ॥ र्मध्य इत्यौपमन्यवः । ॥

I. 186. 10. द्वाबाह्वनां परिषीवण[5] इति ॥ सर्वान्द्वाबाह्वन्मन्त्रेण परि-षीव्येदिति बौधायनः ॥ पूर्वौपूर्वाविति शालीकि ॥ र्दक्षिणौ-दक्षिणावित्यौपमन्यवः । ॥ १४ ॥

---

१ ॰भ्यववर्तये॰ G (sec. m.) and the vivaraṇa; this might, after all, be the correct reading also VI. 24: 184. 3. (अभ्यववर्तयन्ति).

२ Thus G (sec. m.) C′; नान्तर्धा॰ the other MSS.

३ कमंडलूभि॰ G (sec. m.), cp. Pāṇ. IV. 1. 71.

४ Emended; वर्तन्यामभि॰ H Be G U D C′; वर्तन्या अभि Bu.

५ Thus C D H G (pr. m.); ॰षिव्यण Be C′; ॰व्ययण Bu G (sec. m.) and the vivaraṇa.

. 189. 1. औदुम्बर्या अभिहोम इति ॥ सूत्रमौपमन्यवीपुत्रस्यान्नो ह स्माह बौधायन एवमेव जुहूदन्तर्धाय[1] हिरण्यमभिजुहुयादित्युभयोरेव विशाखयोर्हिरण्ये[2] निधायाभिजुहुयादिति शालीकिः ॥

I. 197. 8. वसतीवरीणां ग्रहण इति ॥ सूत्रᳲ शालीकेरन्नो ह स्माह बौधायन उभयतःशुक्रा आदित्यवतीर्वसतीवरीर्गृह्णीयात्ताः शुक्रास्ताभिराप्याययेत्ताभिरभिषुणुयादिति[3] धिष्ण्याद्भ्युप वसतीवरीर्गृह्णीयादित्यौपमन्यवः ॥

. 190. 18. उपरवाणां परिलेखन इति ॥ त्रिस्त्रिरेकैकं परिलिखेदिति बौधायनः सकृत्सकृदिति शालीकिः ॥

I. 191. 7. उपरवपाᳲसूनाᳲ हरण इति ॥ सूत्रᳲ शालीकेरन्नो ह स्माह बौधायनो यजमानस्याधस्पदमुपोप्योत्करᳲ हत्वोपस्पृशेदिति[4] ॥

I. 192. 1. उपरवाणां प्रोक्षण इति ॥ त्रिस्त्रिरेकैकं प्रोक्षेदिति बौधायनः सकृत्सकृदिति शालीकिस्तस्मिन्नपो ऽवनयेत्तस्मिन्न्यवान्प्रस्कन्दयेदित्येवमेवैतत्त्रिविधं कर्म कुर्यादित्यौपमन्यवः सर्वमेवैतत्कर्मावृता कुर्यादित्यौपमन्यवीपुत्रः ॥

---

१ ०दनन्तर्धाय G (sec. m.); rightly?

२ Thus Bu G, the viv. and Keś; ०ण्यं Be H U D C C′.

३ ०ताभिरेवाप्या० G (sec. m.).

४ Thus Bu C′ U C D G (sec. m.); कृत्वो० H; दृत्वो० Be.

193. 4-14. धिष्ण्यानां निवपन इति ॥ स ह स्माह बौधायनो वेद्यन्त आग्नीध्रीयं निवपेद्वेद्यन्ते मार्जालीयं । धिष्ण्यान्नु-प्योदीचीनसꣳस्थतां[1] कुर्यादित्य॥न्वो[1] ह स्माह शालीकिरन्तर्वे-द्याग्नीध्रीयं निवपेदन्तर्वेदि मार्जालीयं । धिष्ण्यान्नुप्य[2]न[2]-चोदीचीनसꣳस्थतां[2] कुर्यादिति । ॥

I. 194. 10. वेद्यै स्तरण इति ॥ सूत्रꣳ शालीकेर॥न्वो ह स्माह बौधायनस्तयो दक्षिणतस्तय उत्तरतो मध्ये सप्तमः पृष्ठ्या-कालं[3] प्राञ्च स्तृणन्तो गच्छेयुरिति ॥ पुरस्तादेवैनां प्रत्यञ्च स्तृणन्तो ऽभ्यवक्रामेयुरित्यौपमन्यवः । ॥

I. 194. 11. अग्नीषोमीयस्याज्यानां ग्रहणे सादन इति ॥ सूत्रं बौधायनस्य ॥ पत्नीशाल एवाग्नीषोमीयस्याज्यानि गृह्णीया-त्तानि खरे सादयेदिति शालिकिः । ॥

I. 194. 13. समन्वानयन इति ॥ सूत्रं बौधायनस्य ॥ नाद्रियेतेति शालीकिः । ॥

---

१ Thus here and l. 5 G (sec. m.); ०संस्थां Be C′; ०संस्थितां Bu ०संस्थितान्कुर्या० U H D C G (pr. m.).—Instead of धिष्ण्यान् H U D here and l. 4 धिष्ण्यं ।

२ Thus C D C′ G (sec. m.) Bu; न्युप्यानयोचीनसं० Be; न्युप्योदी-चीनसं० H.

३ Between पृष्ठ्या and कालं Bu G and U (sec. m.) ins. ०स्तरण०, Be C D C′ Keś. omit the word; in H this dvaidham is missing.—०कालं U G D Keś. and cp. XXI. 14: 94. 16; ०काले Bu C′, काले Be.

I. 194. 4. अर्धस्तनव्रतप्रदान इति ॥ समन्वानीय[१] वासमन्वानीय[१] वा[१] पुराणगार्हपत्यमर्धस्तनव्रतं प्रयच्छेदिति बौधायनो " नार्धस्तनव्रतं प्रयच्छेदिति शालीकिः ' ॥

I. 195. 1. वैसर्जनानाꣳ होम[२] इति ॥ सूत्रं बौधायनस्य " चत्वारि चतुर्होतानि जुहुयादिति शालीकिः ' ॥

I. 195. 7. वसतीवरीणामनुसꣳहरण इति ॥ अनुसꣳहरेदिति बौधायनो " नानुसꣳहरेदिति शालीकिः ' ॥

वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन " आदितश्चान्ततश्चेति शालीकिः ' ॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः " सर्वान्सहेति शालीकिः ' ॥

I. 198. 3. वसतीवरीणां परिहरण इति ॥ सूत्रꣳ शालीकेर्" नो ह स्माह बौधायन एवमेवैनाः परिहरन्नग्रेण यूपꣳ सादयित्वा जघनेन गार्हपत्यमुपसाद्याग्नीध्रे सन्ना अभिमृशेदग्ने जागृतेति ' ॥ १५ ॥ षष्ठः ॥

I. 200. 5. सवनीयस्याज्यानां ग्रहणे सादन इति ॥ सूत्रं बौधायनस्याग्नीध्र[३] एव सवनीयस्याज्यानि गृह्णीयात्तानि खरे सादयेदिति शालीकिः ' ॥

---

१ In some of the MSS. समन्वानीयवा is found once only, but cp. the vivaraṇa: समन्वानयनात्प्रागूर्ध्वं वा ।

२ परिहोम H Bu D C U G (pr. m.), without परि Be G (sec. m.) and the vivaraṇa ; C′ : वेदसंमार्जनानां होम ।

३ ०ग्नीध्रीय U ; ०ग्नीध्रीये D C (omitting एव ).

I. 200. 17. औदुम्बराणां महापरिधीनां परिधान इति ॥ सूत्रमाचार्ययोर्''न्नो ह स्माहौपमन्यवः सुच्छन्ना एवैते स्युरिति' ॥

I. 201. 4. राज्ञ उपावहरण इति ॥ सूत्रमाचार्ययोर्''न्नो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यो राजानमुपावहरेदिति' ॥

I. 201. 7. पञ्चहोतुर्होम इति ॥ सूत्रं बौधायनस्य'' चतुर्होतारꣳ हुत्वा पञ्चहोतारं जुहुयादिति शालीकिः' ॥

I. 201. 10. प्रातरनुवाकस्योपाकरण इति ॥ सूत्रमाचार्ययोर्''न्नो ह [1]स्माहार्तभागीपुत्रस्तूष्णीकेनैककपालेन[2] प्रातरनुवाकमुपाकुर्यादिति' ॥

I. 201. 16. सवनीयानां निर्वपण इति ॥ सूत्रमाचार्ययोर्''न्नो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यः सवनीयान्निर्वपेदिति' ॥

I. 201. 17. तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोद्यच्छन्ते यवानिति ॥ सूत्रꣳ शालीकेर्''न्नो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृत्[3] स्यादिति' ॥

आप्यनिनयन इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनये-

---

१ ०र्तभागिपुत्र० G (sec. m.).

२ Thus Bu G (sec. m.) the vivaraṇa; ०तूष्णीमेकेनै० C H U D G (pr. m.); ०तूष्णीमेककपा० Be C′.

३ हविष्कृत् G U; हविपूत् D H C; हविष्कृत Bu; हविष्कृतं Be C′; cp. XXI. 4: 75. 7; XXII. 11.

दिति बौधायनो ॥ ऽग्रेणातिहार्येति शालीकिर॥ग्रेण वा जघनेन वेत्यौपमन्यवः । ॥

I. 202. 1. पात्राणाꣳ सादन इति ॥ सूत्रꣳ शालीकेर॥न्नो ह स्माह बौधायनः खरे पात्राणि सादयेत्तेषां यथार्थमाददीतेति । ॥

I. 203. 9. अथैकधनाꣳ गृह्णातीन्द्राय वो जुष्टाꣳ गृह्णामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥ १६ ॥

. 203. 14. अग्नेः प्रस्कन्दन इति ॥ होतृचमसादग्नांशुं प्रस्कन्दयेदिति बौधायनो ॥ वासतीवरात्कलशादिति[१] शालीकिः । ॥

. 203. 21. क्रतुकरण इति ॥ सूत्रं बौधायनस्य ॥ यथाक्रत्वेवास्य क्रतुकरणानि कुर्यादिति शालीकिः । ॥

I. 204. 8. दधिग्रहस्य ग्रहण इति ॥ सूत्रꣳ शालीकेर॥न्नो ह स्माह बौधायन औदुम्बरेणैनं पात्रेण गृह्णीयाद्धुत्वा चैतत्पात्रमत्रै-वानुप्रहरेदिति । ॥

I. 205. 2. दक्षिणायै दान इति ॥ सूत्रं द्वैधमेवैतद्भवति ॥

I. 205. 7. तासु निग्राभ्यासु यजमानं वाचयतीति ॥ सूत्रꣳ शालीकेर॥न्नोह स्माह बौधायन ऊरौ वोरसि वोपनिगृह्य तासु निग्राभ्यासु यजमानं वाचयतीति । ॥

. 205. 17. राज्ञो निर्वपण इति ॥ सूत्रमाचार्ययोर॥न्नो ह स्माहौ-पमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यो राजानं निर्वपेदिति । ॥

---

१ Thus Bu G H; ॰तीवरीकलशा॰ Be C′; ॰तीवरीःक U.

I. 206. 11. सो ऽꣳशौ स्कन्ने वाचयतीति ॥ सूत्रं बौधायनस्यौपाꣳशावेवाꣳशौ स्कन्ने वाचयेदिति शालीकिः ' ॥

I. 208. 16. उपाꣳश्वन्तर्यामयोर्होम इति ॥ सूत्रं बौधायनस्योभावेवोदिते जुहुयादिति शालीकि"रुभावेवानुदिते जुहुयादित्यौपमन्यवः ॥

I. 207. 11; 209. 8. आग्रयणस्य ग्रहण इति ॥ सूत्रꣳ शालीकेर"न्यो ह स्माह बौधायनो द्वयोर्धारयोः प्रातःसवने गृह्णीयात्तिसृणां माध्यंदिने सवने चतसृणां तृतीयसवन इति ' ॥

I. 211. 18. द्रप्सानुमन्त्रणीयास्विति ॥ सूत्रं बौधायनस्य " स्रुवाहुतीरेवैता[1] जुहुयादिति शालीकिः ' ॥ १७ ॥

I. 212. 4. पवमानग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य " सजुष्टान्परिमृज्य सादयेदिति शालीकिः ' ॥

I. 212. 13. संतनीनाꣳ[2]होम इति ॥ सूत्रꣳ शालीकेर"न्यो ह स्माह बौधायनो वसतीवरीरप्येतैर्मन्त्रैरवनयेदिति ' ॥

I. 212. 8. पवमानानामुपाकरण इति ॥ सूत्रं बौधायनस्य " सदस एव बर्हिषी आदायोपाकुर्यादिति शालीकिः ' ॥

I. 212. 14. ब्रह्मण उपवेशन इति ॥ यथा सदस्येवमुपविशेदिति बौधायनो " यथा दर्शपूर्णमासयोरेवमिति शालीकिः ' ॥

---

१ Thus, and cp. XXV. 18, H D C U G; ०रेवैता Bu; ०वैना Be C′.

२ Thus (with न) G (sec. m.) U; संततीनां the other MSS., cp. XXV. 18.

212. 14. यजमानस्योपवेशन इति ॥ यथा सदस्येवमुपविशेदिति बौधायनो ॥ यथा दर्शपूर्णमासयोरेवमिति शालीकिः । ॥

212. 19. अथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

212. 19. ऋक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वेति । पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

213. 5. पञ्चम्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बौधायनस्य ॥ यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः । ॥

213. 16. सप्तहोतुर्होम इति ॥ सूत्रं बौधायनस्यानुसवनमेव सप्तहोतारं जुहुयादिति शालीकिः । ॥

213. 19. धिष्ण्यानां विहरण इति ॥ स ह स्माह बौधायन आग्नीध्रीयादङ्गारानादाय[1] तत आग्नीध्रीये प्रस्कन्दयेद्यथानुपूर्वमितरेषु । धिष्ण्यान्विहृत्योदीचीनसंस्थतां[2] कुर्यादित्यथो ह स्माह शालीकिराग्नीध्रीयादङ्गारानादाय तत आग्नीध्रीये प्रस्कन्दयेद्यथानुपूर्वमितरेषु । धिष्ण्यान्विहृत्य न चोदीचीनसंस्थतां[3] कुर्यादिति । ॥

---

१ °ग्नीध्र° and °ग्नीध्रीय° the MSS. promiscue; the vivaraṇa and Keś. always °ग्नीध्रीय° ।

२ Thus G D C U (pr. m.) संस्थितान् U (sec. m.), °सस्थतां H; °संस्थां Bu; Be C′ defective.

३ Thus U (sec. m.) D C C′; °संस्थातं G (sec. m.); °संस्थानं Bu; संस्थातां H Be U (pr. m.) G (pr. m.).

I. 214. 1. धिष्णियानां व्याघारण इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

खरखनस्योत्पादन इति ॥ यूपः खरखनमुत्पादयेदिति बौधायनः ॥ पशुरिति शालीकिस्त॥न्त्रमित्यौपमन्यवो ॥ देवतेत्यौपमन्यवीपुत्रः । ॥ १८ ॥ सप्तमः ॥

I. 215. 16. सर्पण इति ॥ सूनं बौधायनस्यौपरद्वारिक[1] एव यजमानः स्यादिति शालीकिः । ॥

तार्तीयसवनिकेषूक्थ्यविग्रहेष्विति ॥ स ह स्माह बौधायनः प्रसर्पेदेव तार्तीयसवनिकेभ्य उक्थ्यविग्रहेभ्यः षोडशिने[2] रात्रिपर्यायेभ्यो राथंतराय संधय इत्य॥थो ह स्माह शालीकिस्तृतीयसवनातिवृद्धिरेवैषा[3] भवति । यदेव तृतीयसवने प्रसर्पेत्तत्प्रसृप्तमेव[4] तेषां[4] स्यादिति ॥ प्रातःसवन एव सर्वेभ्यः सवनेभ्यः संप्रसर्पेदित्यौपमन्यवः । ॥

I. 217. 13. आभिचाये मन्त्रामन्त्र इति ॥ मन्त्रवती च स्यात्सर्वाणि च सवनान्यनुसमियादिति[5] बौधायनस्तू॥ष्णीका च स्यात्स-

---

१ ॰पराद्वारि॰ U D C H Be C′; cp. XXI. 9 : 86. 7.

२ ॰शिने G Be; ॰शिनि Bu H U C D C′.

३ ॰नातिवृद्धि॰ Be G (sec. m.); ॰नांतवृद्धि॰ C D U; ॰नंतवृद्धि॰ H G (pr. m.); नाभिवृद्धि॰ Bu C′ and the vivaraṇa.

४ ॰मेवैतेषु G (sec. m.); ॰मेषां H.

५ ॰नुसमीया॰ MSS.

र्वाणि च सवनान्यनुसमियादिति[1] शालीकिर्" मन्त्रवती च स्यात्प्रातःसवने चैवैषा स्यादित्यौपमन्यवः' ॥

I. 217. 11. सवनीयानामुद्वासन इति ॥ सूत्रं बौधायनस्य" नानापात्रीष्वेव[2] सवनीयानुद्वासयेदिति शालीकिः' ॥

I. 217. 16. प्रातः प्रातःसावस्येति ॥ सूत्रं बौधायनस्य" प्रातःसावस्येत्येव ब्रूयादिति शालीकिः' ॥

सवनीयानामनुसंहरण इति ॥ अनुसंहरेदिति बौधायनो" नानुसंहरेदिति शालीकिः' ॥

I. 218. 8. प्रतिनिर्ग्राह्याणां[3] ग्रहण इति ॥ सूत्रं बौधायनस्य" द्विदेवत्येभ्य एव प्रतिनिर्ग्राह्यान्निगृह्णीयादिति[4] शालीकिः' ॥

I. 218. 13. आघार इति ॥ सूत्रं बौधायनस्य" ग्रहादेवैतमाघारमाघारयेदिति शालीकिर्"द्रोणकलशात्परिप्लुना पात्रेणेत्यौपमन्यवो" यजुरेवैतज्जपन्नेतमाघारमाघारयेदित्याज्ञीगविः[5]' ॥

---

१ ॰नुसमीया॰ MSS.

२ Thus Be C′ and the viv., ॰पात्रेषु Bu G U D C Keś. ; ॰पाथेष्वेव H.

३ ॰निर्ग्रा Be C′ H U D C G (pr. m.) ; निग्रा॰ Bu G (sec. m.) and the vivaraṇa.

४ निर्ग्रात्याणिग्टह्णी॰ G (sec. m.) but the r effaced, Be H C D U ; ॰निग्रात्यांनिग्टह्णी॰ Bu ; ॰नर्ग्राह्यानिग्टह्णी॰ C′ ; ॰निग्राह्यान्ग्टह्णी॰ Keś. ; read probably (with Keś.) ॰निर्ग्राह्यान्गृह्णीयादिति ।

५ Thus G (sec. m.) ; ॰न्नेवमाघार॰ Be H U C D; ॰नेनमाघारये॰ C′ ॰न्नैतमाघारये॰ G (pr. m.) Keś. ; ॰रेववदेवैतमाघारमा॰ Bu.

I. 220. 9. सꣳस्रावस्यापिधान इति ॥ सूत्रं बौधायनस्य " यावानेव[1] सꣳस्रावः स्यात्तमपिदध्यादिति शालीकिः ' ॥

I. 220. 14. चमसानामायतन[2] इति ॥ अग्रेण स्रुचः[3] प्राच[3] आयातयेदिति बौधायनो " जघनेन स्रुच उदीच आयातयेदिति शालीकिः ' ॥ १९ ॥

I. 221. 4. ग्रहयोः संधान इति ॥ अरत्नौ च ग्रहौ च संदध्यातामिति बौधायनो " ग्रहावेवेति शालीकिः ' ॥

I. 222. 12. शुक्रवतो मन्थिवत इति ॥ सूत्रं बौधायनस्य " मन्थिवत इत्येव ब्रूयादिति शालीकिः ' ॥

I. 222. 20. मन्थिसꣳस्रावस्य होम इति ॥ सूत्रꣳ शालीकेर्"नो ह स्माह बौधायन आहवनीयादेवोदीचो ऽङ्गारान्निर्वर्त्य तेषु मन्थिनः[4] सꣳस्रावं[4] जुहुयादिति ' ॥

होत्रकचमसानाꣳ[5] होम इति ॥ स ह स्माह बौधायनः शुक्रामन्थिभ्यामेनान्सह सकृज्जुहुयाद्विरभ्युन्नीताननित्य"नो ह स्माह शालीकिर्नैनाञ्छुक्रामन्थिभ्याꣳ सह सकृज्जुहुयाद्विरेवाभ्युन्नीताननिति ' ॥

---

१ यावानच U D C ; यावामेच Be ; याचानच H.

२ ०मायतन MSS. and the vivaraṇa.

३ Thus G (sec. m.) Bu ; स्रुच उदीच H U C ; स्रुच only, Be D C′.

४ मंथिसंस्रा० G (sec. m.).

५ Thus G (sec. m.) and C′ only ; होत्वचमसानां the other MSS. and the vivaraṇa.

I. 223. 17. द्विदेवत्यानां भक्षण इति ॥ सूत्रं बौधायनस्य ॥ प्राणेषूपनिग्राहं द्विदेवत्यान्भक्षयेदिति शालीकि ॥ र्दीर्घभक्षेणैवैनान्भक्षयेदित्यौपमन्यवः[१] । ॥

I. 224. 7. अथैतानि द्विदेवत्यपात्राण्यरिक्तानि करोतीति ॥ सूत्रं बौधायनस्य ॥ सोमेनैवैतान्यरिक्तानि स्युरिति शालीकिः । ॥

I. 224. 10. अथैनानि दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्याꣳ सादयतीति ॥ सूत्रं बौधायनस्य ॥ धस्तादेवैनान्युपहव्यस्य[२] सादयेदिति[२] शालीकिः । ॥

वाचि वाचं दधामीति[३] वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

होत्रकचमसानां प्रतिभक्षण इति ॥ प्रतिभक्षयेदिति बौधायनो ॥ न प्रतिभक्षयेदिति शालीकिः । ॥

I. 229. 6. प्रत्यभिमर्शन इति ॥ सूत्रꣳ शालीके ॥ र्नो ह स्माह बौधायनो भक्षयन्नेव[४] भक्षाणां पारे प्रत्यभिमृशतीति । ॥

---

१ दीर्घभक्षणेनै॰ MSS., only C′ भक्षणैवैना॰ ; cp. XXV. 20.

२ Uncertain; ॰न्युपहव्यस्यासाद॰ G (sec. m.); all the other MSS. ॰न्युपहव्य आसाद॰ The vivaraṇa: अधस्तादेव दक्षिणस्योपहव्यस्य द्रोणकलशसमीपे; could उपहव्यस्य be the correct reading?

३ Thus Bu C D G U C′; ददामीति H Be. In the text proper no vikalpa of the kind here mentioned, is found; neither is the yajus to be traced in any text. Perhaps this dvaidham is to be taken together with the foregoing one.

४ Thus G (sec. m.) and the vivaraṇa; भक्षंनेव Bu; भक्षयेन्नेव H Be U D G (pr. m.) C C′.

I. 233. 1. ऐन्द्राग्नस्य ग्रहण इति ॥ सूत्रमाचार्ययोर् ॥ न्वो ह स्माह दीर्घवात्स्यो मुख्येनैनं पात्रेण गृह्णीयादिति । ॥

I. 229. 1. नाराशꣳसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बौधायनो ॥ नानुप्रकम्पयेरन्निति शालीकिर् ॥ नैनानुपोद्यच्छेरꣳस्तनेत्यौपमन्यवः । ॥ २० ॥ अष्टमः ॥

234. 13. माध्यंदिनीये ऽभिषव इति ॥ नवकृत्वो नवकृत्वो ऽभिषुत्य निग्राभमुपेयुरिति बौधायनो ॥ ऽपरिमितमिति शालीकिः । ॥[1]

I. 235. 9. मरुत्वतीययोर्ग्रहण इति ॥ सूत्रꣳ शालीकेर् ॥ न्वो ह स्माह बौधायन उपरिष्टादेवाग्रयणाद्गृह्णीयादिति । शालीको ह्येष भवतीति । ॥

236. 10. अष्टम्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बौधायनस्य ॥ यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः । ॥

I. 237. 3. दधिघर्मस्य ग्रहण इति ॥ सूत्रं बौधायनस्या ॥ ग्नीध्र एनं गृह्णीयादिति शालीकिः ॥ परिश्रित्योभयतः शान्तिं कृत्वाग्नीध्र एवेत्यौपमन्यवः । ॥

दधिघर्मस्य चर्याया इति ॥ उपाꣳशु चरेदिति बौधायन ॥ उच्चैरिति शालीकिः । ॥

237. 16. दधिघर्मस्य भक्षण इति ॥ सूत्रꣳ शालीकेर् ॥ न्वो ह स्माह

---

१ After this dvaidham G U D H C ins. प्रातःसवन एवैषा स्यादित्यौपमन्यवः सवनीयासुद्वासन इति सूत्रं बौ॰ स्य नानापात्रेष्वेव सवनीयानुद्वासयेदिति शा॰ किः । cp. XXI. 19: 104. 3.

बौधायनो ऽवघ्रभक्षणेनैवेतरे भक्षयेयुर्यजमान एव प्रत्यक्षं भक्षयेदरण्ये[1] ऽनुवाकेन[1] मन्त्रेणेति ' ॥

I. 240. 20. दक्षिणानामत्याकरण[2] इति ॥ सूत्रꣳ शालीकेर''न्नो ह स्माह बौधायन एकामेव दक्षिणां दक्षिणापथेनात्याकुर्याद्येतरा[3] यथावकाशं गच्छेयुरिति ' ॥

संचर[4] इति ॥ नीतासु दक्षिणासु[5] यथार्थꣳ संचरेरन्निति बौधायनो '' नासꣳस्थिते सोमे ऽध्वर्युः प्रत्यङ् सदो ऽतीयादिति शालीकिः ' ॥

I. 259. 7. कृष्णविषाणायाः प्रासन इति ॥ सूत्रं बौधायनस्य '' नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्येदिति शालीकिः ' ॥

I. 241. 9. आग्नेयस्य संवदन[6] इति ॥ सूत्रꣳ शालीकेर''न्नो ह स्माह बौधायनस्त्रिरेवाव्यतिषजन्पृच्छेत्क[7] आग्नेयः क आग्नेय इति ' ॥ २१ ॥

---

१ Thus G U (pr. m.), viv., Keś.; ०णेनानुवा० Be U (sec. m.); ०णेनवा० Bu H D C, ०णेवानुवा० C′.

२ Thus Be C′ Bu and the vivaraṇa (one copy) ०त्याक्रमण U H G D C and the vivaraṇa (another copy).

३ ०कुर्याद्० Be Bu C′; ०क्रामयेद्० U H G D C.

४ संचरण Bu.

५ Between दक्षिणासु and यथार्थꣳ the MSS. exc. Be C′ and Keś; ins. चात्वाले, clearly interpolated from the following dvaidham.

६ Thus Bu C′ G (sec. m.), the vivaraṇa; संवादन Be H C U D G (pr. m.).

७ Thus Bu Be G C′; चिरेवव्यति० H U D C.

I. 241. 13. दक्षिणानां दान इति ॥ स ह स्माह बौधायनो महर्त्विग्भ्य एना[1] दद्यान्न होत्रकाननुसंचरेरन्निति " न च होत्रकाननुसंचरेरन्न च सदस्याय दद्यान्न ह्येतस्यानुख्या विज्ञायत इति शालीकिः ' ॥

I. 242. 8. मरुत्वतीययोर्होम इति ॥ स ह स्माह बौधायनो यमेवाध्वर्युर्जुहुयात्स वषट्कृतानुवषट्कृतः स्यादथेतरोऽननुवषट्कृतः[2] स्यादित्यु'भावेवाननुवषट्कृतौ[3] स्यातामिति शालीकिरु"भावेवानुवषट्कृतौ स्यातामित्यौपमन्यवः ' ॥

I. 242. 13. तृतीयस्य मरुत्वतीयस्य ग्रहण इति ॥ सूत्रमाचार्ययोर"न्यो ह स्माह दीर्घवात्स्यो मुख्येनैनं पात्रेण गृह्णीयादिति " ॥

I. 243. 5. नाराशंसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बौधायनो " नानुप्रकम्पयेरन्निति शालीकि"र्नैनानुपोद्यच्छेरंस्स्रुनेत्यौपमन्यवः ' ॥

I. 244. 2. सौम्यस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तू"ष्णीक इति शालीकिः " सौम्य एव मन्त्रवान्स्यात्तूष्णीक एककपाल इत्यौपमन्यवः ' ॥

I. 245. 11. तार्तीयसवनिकेऽभिषव इति ॥ सूत्रं बौधायनस्य " यदाप्याययति तेनांशुमदित्येव ब्रूयादिति शालीकिः ' ॥

---

१ एना Bu G; एनां H Be C' U D C; एव the vivaraṇa.

२ Emended; नानुव॰ or नानव॰ MSS.

३ Thus Be C' U; ॰भावेवानु॰ H D C; ॰भावेव वषट्कृतानुवषट्कृतौ G (sec. m.).

245. 19. आदित्यग्रहस्य ग्रहण इति ॥ सूत्रꣳ शालीकेर्नो ह स्माह बौधायनः पुरस्तादेनमभिषवाद्गृह्णीयात्तूष्णीꣳ[१] पूतातङ्क्ष्णमवनयेदिति ॥

246. 12. आदित्यग्रहस्योदाहनन इति ॥ अर्धर्चश उदाहन्यादिति बौधायन ऋचर्चेति शालीकिः ॥

247. 11. मैत्रावरुणस्य श्रयण[२] आशिरो[२] ऽवनयन[२] इति ॥ सूत्रꣳ शालीकेर्नो ह स्माह बौधायनः श्रीणीयादेव मैत्रावरुणं पयसाशिरमवनयेदिति ॥

248. 5. नवम्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बौधायनस्य यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः ॥

249. 17, 250. 6. होत्रकाणाꣳ[३] संतर्पण इति ॥ सूत्रꣳ शालीकेर्नो ह स्माह बौधायनोऽनुसवनमेव होत्राः[४] संतर्पयेदिति पञ्च प्रातःसवने षण्माध्यंदिने सवने सप्त तृतीयसवन इत्यौपमन्यवः ॥

251. 1. औपासनेष्विति ॥ स ह स्माह बौधायनोऽनुसंव्रज्यौपासनाननुमन्त्रयेत चमसेभ्यश्च पुरोडाशशकलानुपास्येदत्र चैव

१ पुरस्तादेवाभि॰ G (sec. m.); पुरस्तादेवमभि॰ D C H.

२ Emended; श्रयणाशिरोवनयन Bu G and the vivaraṇa; श्रयणाशिरयोरवनयन H U D C; श्रयणीशिरोवनयन Be C′.

३ होत्रकाणां Be G (sec. m.) C′, the vivaraṇa; होत्राणां Bu; होत्रणां G (pr. m.); होतृणां H U D C.

४ होत्राः Bu G (sec. m.); होत्रकान् Be C′ H U D C G (pr. m.).

षड्ढोतारं व्याचक्षीतेत्य॥थो ह स्माह शालीकिरनुसंव्रज्यैवौपासनाननुमन्त्रयेत पार्श्वतश्चमसेभ्यः[1] पुरोडाशशकलानुपास्येदुपरिष्टाच्च षड्ढोतारं व्याचक्षीतेति । ॥ २२ ॥ नवमः ॥

I. 251. 6. सावित्रस्य ग्रहणे सादन इति ॥ सूत्रं बौधायनस्य । सजुष्टं परिमृज्य सादयेदिति शालीकिः । ॥

I. 252. 5. तदन्यतो-मदं प्रतिगृणातीति ॥ सूत्रं बौधायनस्य ॥ मदा मोद[2] इवेत्येव[2] प्रतिगृणीयादिति शालीकिः । ॥

I. 252. 11. नाराशंसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बौधायनो । नानुप्रकम्पयेरन्निति शालीकि॥र्नैनानुपोद्यच्छेरंश्चनेत्यौपमन्यवः । ॥

सौम्यस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन ॥ उच्चैरिति शालीकिः । ॥

I. 253. 5. सौम्यस्य परीज्याया इति ॥ स ह स्माह बौधायनो यदि चैव[3] समस्तौ यदि च विहृतावग्नाविष्णू उपांश्वेव स्यातामिति ॥ समस्तावुपांशु विहृतावुच्चैरिति शालीकिः । ॥

I. 248. 12. तार्तीयसवनिकानां धिष्णियानां विहरण इति ॥ सूत्रं शालीके॥रथो ह स्माह बौधायनश्चरित्वा वाचरित्वा वा सौम्येनाङ्गारैश्चतुर्धिष्णियान्विहरेदिति । ॥

---

१ पार्श्वतः om. Be C′.

२ मोदेवेत्येव G (sec. m.) only.

३ एव om. Be Bu D U (pr. m.).

254. 6. पात्नीवतस्य श्रयण इति ॥ सूत्रं बौधायनस्य ॥ दध्ना वा पयसा वा पात्नीवतꣳ श्रीणीयादिति शालीकि॥ धिष्णियानां व्याघारणशेषेणाज्येन पात्नीवतꣳ श्रीणीयादित्यौपमन्यवः । ॥

254. 14. पत्न्या उदानयन इति ॥ सूत्रं बौधायनस्य॥ नैवासीतापोहिष्ठीयाभ्य इति शालीकिः । ॥

255. 14. तदुभयतो-मदं[1] प्रतिगृणातीति ॥ सूत्रं बौधायनस्य ॥ मोदा मोद[2] इवेत्येव[2] प्रतिगृणीयादिति शालीकिः । ॥

255. 17. ध्रुवस्य प्रच्यावन इति ॥ सूत्रं बौधायनस्य ॥ सर्व एवैषोऽवनयनमन्त्रः स्यादिति शालीकिः । ॥ २३ ॥

256. 14. चमसानामायातन[3] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

256. 15. तेषु त्रीꣳस्त्रीꣳश्च दूर्वाग्रन्थीन्प्रास्यत्येकैकं च दर्भपुञ्जीलमिति ॥ सूत्रं बौधायनस्याङ्क्रिरेवैते दत्ताः[4] स्युरिति शालीकिः । ॥

256. 21. औपयजेष्विति ॥ सूत्रꣳ शालीकेर॥ न्नो ह स्माह बौधायन आग्नीध्रादग्नीषोमीयस्य[5] च सवनीयस्य चाङ्गारानाहरेच्छामित्रान्मैत्रावरुण्ये वपाया इति । ॥

---

१ °मदं all, against VIII, 15 : 255. 14.

२ मोदेवेत्य° G D C C′.

३ °मायतन all exc. C.

४ ? दत्ता Bu C′, द्रप्साः G (sec. m.), दप्सा Be, H U D C omit the word altogether. The vivaraṇa has: चक्रिरेव साधवो दर्शनीया इति ।

५ Thus, and comp. vol. I l.c., H G U (pr. m.) C D, the vivaraṇa; °ग्नीभीया° Be C′ U (sec. m.) Bu Keś.

I. 258. 8. मिन्द्राकूत्योर्होम इति ॥ सूत्रमाचार्ययोर् ॥ त्रो ह स्माहौपमन्यवः पुरस्तान्मिन्द्राकूती जुहुयान्मिन्द्राकूती हुत्वा हारियोजनं ग्रहं गृह्णीयादिति । ॥

258. 10. शाकल्यैर्यायां इति ॥ सूत्रꣳ शालीकेर् ॥ त्रो ह स्माह बौधायनो यावन्त्येनाꣳसि कृतान्यभिविजानीयात्तेषामवयजनमसीत्यभ्याद्ध्यादिति । ॥

258. 15. आदित्यस्योपस्थान इति ॥ सूत्रं बौधायनस्याहवनीयमेवैतेन यजुषोपतिष्ठेरन्निति शालीकिः । ॥

I. 259. 8. कृष्णविषाणायाः प्रासन इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

259. 12. अवभृथ इति ॥ सूत्रमाचार्ययोर् ॥ त्रो ह स्माहौपमन्यवोऽत्रैवैनꣳ[1] स्थण्डिले कुम्भमिश्रं प्ररोप्य स्थालीभिश्च ग्रावोवायव्येन चावभृथमवेयादिति । ॥

261. 12. ग्रावोवायव्यस्य प्रस्तावन इति ॥ सूत्रं बौधायनस्य ॥ प्रचाल्योदाहरेयुरिति शालीकिः । ॥ प्रचाल्यैवैता स्थालीरुदाहरेयुस्तान्येतानि देविकाहवीꣳषि अपयेयुरिति बौधायनः ॥ प्रस्तावयेयुरेवेति[2] शालीकिः । ॥ २४ ॥

ib. कृष्णाजिनस्य प्रस्तावन इति ॥ सूत्रꣳ शालीकेर् ॥ त्रो ह स्माह बौधायनः कृष्णाजिनमुन्मुच्याद्भिरभ्युक्ष्य पुत्राय वान्ते-

---

१ चैवैतं Bu G D C; चैवैन H U (pr. m.); चैवैतत् U (sec. m.), चैनत् Be C′.

२ एव only in G (sec. m.).

वासिने वा दद्यात्स्रुचोपधानं[१] वैनत्कुर्वीतापि वैनेन पुनर्दीक्षे-
तापि वैनेन पुनर्यजेतेति ' ॥

262. 6. उदयनीयस्य बर्हिषः सꣳस्कार इति ॥ अग्निदादान-
प्रभृतीन्मन्त्रान्साधयेदिति बौधायनः " शुल्बप्रभृतीनिति
शालीकिः " संभरणप्रभृतीनित्यौपमन्यवः ' ॥

ib. उदयनीयस्य निर्वपण इति ॥ स्रुचि वावधाय[२] चाम-
काषꣳ स्थाल्यां[३] वा सचामकाषायां[४] निर्वपेदिति[४] ॥ पूर्वः
कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

262. 9. उदयनीयस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधा-
यनो " ऽप्स्विति शालीकिः ' ॥

चरोरनुपरिहरण इति ॥ अनुपरिहरेदिति बौधायनो "
नानुपरिहरेदिति शालीकिः ' ॥

उदयनीयस्यासादन इति ॥ षड्ढोत्रासादयेदिति बौधा-
यनस्तूष्णीमिति शालीकिः ' ॥

उदयनीयस्य चर्याया इति ॥ सूत्रं बौधायनस्याहवनीय
एवोदयनीयेन चरेदिति शालीकिः ' ॥

. 2, 5. अनूबन्ध्यस्य[५] करण इति ॥ सूत्रं बौधायनस्य " मैत्रावरु-

---

१ स्रुचोपधानं all the MSS.; स्रुवोप॰ Keś.; स्रुचां निधानार्थं स्तृतिः the vivaraṇa.

२ वांतर्धाय H D G U C C′.

३ स्थाल्या G (sec. m.) Be C′.

४ ॰काषयेति G (sec. m.); ॰काषयेदिति C′.

५ अनू॰ G (sec. m.) C′ and the vivaraṇa; अनु॰ the other MSS.

ण्यामिक्षया[1] यजेतेति शालीकिर्॥ नो ह स्माहौपमन्यवो ऽजं[2] पशुमप्यालभेतै।कादशप्रयाजं त्वेव तन्त्रꣳ संतिष्ठापयिषेदिति । ॥

वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन ॥ आदितश्चान्ततश्चेति शालीकिः । ॥

हृदयशूलानामुदासन इति ॥ एकैकश उद्वासयेदिति बौधायनः ॥ सर्वान्सहेति[3] शालीकिः । ॥ २५ ॥

उखण[4] इति ॥ सर्वान्गोपशूनुखयेदिति बौधायनो ॥ ऽन्यत्रर्षभाच्च वशायै चेति शालीकिः । ॥

I. 263. 5. आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्तू॥ष्णीकेति शालीकिः । ॥

I. 263. 6. मैत्रावरुण्ये परिधिष्विति ॥ सूत्रꣳ शालीकेर्॥नो ह स्माह बौधायनः पूर्वं स्थूणे सदसो वा हविर्धानयोर्वा भित्त्वा वैदलकान्परिधीन्मैत्रावरुण्ये[5] कुर्यादिति । ॥

---

१ वा ins. G.

२ ज Bu.

३ सर्वाणि instead of सर्वान् some of the MSS.; some omit सह ।

४ Thus G (sec. m.) and the vivaraṇa of our passage, उखिण a copy of the vivaraṇa of the text proper; उश्रण Bu; उखकरण Be C′ U (sec. m.); उखयण C D H U (pr. m.) G (pr. m.) and a copy of the vivaraṇa of the text proper.

५ वै(बै)दलकान् all (and thus also the Karmānta, XXV. 26), exc. G (sec. m.), which has वैदलान् ।

263. 8. उदवसान इति ॥ सूत्रं बौधायनस्य " पूर्णाहुत्यैवोदवस्ये-
दिति शालीकिः ' ॥

263. 12. दक्षिणायै दान इति ॥ सूत्रं बौधायनस्य " नात्राकाम-
नियतं[1] देयमिति शालीकिः ' ॥

263. 13. देविकाहविषां करण इति ॥ सूत्रमौपमन्यवीपुत्रस्यात्रो ह
स्माह बौधायनस्त्रीण्यनूबन्ध्यस्य पशुपुरोडाशमनुवर्तरंस्त्री-
ण्युदवसानीयामिति " सर्वाण्येवानूबन्ध्यस्य पशुपुरोडाशमनु-
वर्तरन्निति शालीकिरात्र्येनैव देविका यजेतेत्यात्रौगविः ' ॥

264. 5. अग्निभिः प्रत्यवसान इति ॥ अजस्रैः प्रत्यवस्येदिति बौधा-
यनो " ऽरण्योः समारोह्येति शालीकिः ' ॥

264. 7. अग्निहोत्रयोः प्रतिहोम इति ॥ प्रतिजुहुयादिति बौधा-
यनो " न प्रतिजुहुयादिति शालीकिर्न प्रतिजुहुयादिति
शालीकिः[2] ' ॥ २६ ॥ दशमः ॥

॥ इत्येकविंशः[3] प्रश्नः ॥

---

१ Uncertain reading; नात्राकामयतो G (sec. m.); नात्राकामन्वितं Be C′ (but न्व corrected into व); नाचकामनियतं U; नाचकामनियतं H; नाचकामनिधनं D; नात्रकामनिध्नं C′; नाचकामनियति Bu. The vivaraṇa, although my copy of it is rather bad, seems at least to point to °चकाम° as it runs: इतरोकामस्यानिहतो नियमः ।

२ The repetition of the finishing words not found in the MSS.

३ On the praśna- number cp. Preface to Vol. II, p. II.

II. 1. 1. अथातोऽग्निकल्पं व्याख्यास्यामः ॥

. 1. 11. खरस्य करण इति ॥ उत्तरपूर्वे ऽवान्तरदेशे कुर्यादिति बौधायन॥ उत्तर एवेति शालीकिः।॥

. 1. 20. सावित्राणाꣳ होम इति ॥ सूत्रं बौधायनस्य॥ सम्ह्याप्य च चतुर्गृहीतं जुहुयादिति शालीकिः।॥

II. 2. 6. गर्दभरशनाया आदान इति ॥ मन्त्रेणाददीतेति बौधायनस्य॥ तूष्णीमिति शालीकिः।॥

I. 1. 9. वल्मीकवपायै निधाने वैश्यस्योपवेशन इति ॥ सूत्रꣳ शालीकेर्॥ त्रो ह स्माह बौधायनो वल्मीकवपां निदध्यान्न वैश्यमुपवेशयेद्यत्र खनिः[1] स्यात्तद्गच्छेद्यस्तत्र पृच्छेत्तं प्रतिब्रूयादिति।॥

II. 3. 6. खनन इति ॥ अर्धचश: खनेदिति बौधायन॥ ऋचर्चेति शालीकिः।॥

I. 3. 10. पुष्करपर्णोत्तरदण्डेन सꣳस्तृणातीति ॥ सूत्रं बौधायनस्य॥ यथोत्पन्नेनैव सꣳस्तृणीयादिति शालीकिः।॥

. 3. 14. पिण्डानाꣳ हरण इति ॥ सूत्रꣳ शालीकेर्॥ त्रो ह स्माह बौधायनः सर्वाभिःसर्वाभिश्चतुर्हरेदिति॥ गायत्रीभिर्हरेत्त्रिष्टुग्भिः सादयेदित्यौपमन्यवः।॥

I. 4. 8. अश्वस्यात्यायमन इति ॥ सूत्रꣳ शालीकेर्॥ त्रो ह स्माह बौधायनस्तूष्णीमश्वमत्याययेत्सर्व एवैष गर्दभमन्त्रः स्यादिति।॥

---

1 खनि or खनी the MSS. खनिः भाविता स्रत the Mahāgnisarvasva.

II. 4. 12. द्यावापृथिव्योः समीक्षण इति ॥ उभे षड्कृत्वः समीक्षेतेति बौधायनस्त्रि॥रेवेति शालीकिः॥ प्राच्यां दिशि संधिमीक्षमाण एतं मन्त्रं जपेदित्यौपमन्यवः। ॥

II. 4. 16. अपो ऽशने अभ्यवहरन्त्यपि वाद्भिरभ्युक्ष्य भुञ्जत इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः। ॥ १ ॥

II. 5. 11. उखानां करण इति ॥ स ह स्माह बौधायनो ऽषाढामप्येतस्यै याजुष्यै पादमात्रीं[1] कुर्याद्यावन्मात्रीं चादायेष्टकामृत्तिकायामपिसृजेदेवमस्य[2] सर्वो ऽग्निर्याजुषो भवतीत्यकामेवोखां मन्त्रेण कुर्यात्तूष्णीमितर इति शालीकिः। ॥

सर्वासु भिन्नासु प्रत्यय इति ॥ स ह स्माह बौधायनः ससावित्रं मन्त्रकर्माभ्यावर्तयेदिति[3] ॥ यदन्यत्सावित्रेभ्य इति शालीकिः। ॥

II. 6. 4. अथादत्त एकविंशतिं वृष्णो अश्वस्य शकृत्पिण्डानभिमग्निं पचनमिति ॥ सूत्रं बौधायनस्य॥ यस्यैव कस्य चाश्वस्याददीतेति शालीकिः। ॥

II. 6. 5. उखानां धूपन इति ॥ सूत्रं बौधायनस्यापरिमितैर्मन्त्रैर्धूपयेदिति शालीकिः। ॥

---

१ पाद॰ B U and G (sec. m.) Bu; पद॰ Be C′ U and G (pr. m.).

२ ॰ष्टकायाम्वृत्ति॰ B G (sec. m.); the vivaraṇa: सर्वेष्टकार्थायां (या the Ms.) वृद्धि, the Ms.: सर्वेष्टकार्थायां (या the Ms.) वृत्तिकायाम्।

३ Thus G, U (sec. m.) and the Ms.; मंत्राकर्मा॰ B; मंत्रकर्मश्यावर्त॰ Bu; कर्माभ्यावर्त॰ Be C′.

II. 6. 11. उखानां प्रवृञ्जन इति ॥ सूत्रं बौधायनस्यै॥ कामेवोखां मन्त्रेण प्रवृञ्ज्यात्तूष्णीमितरे इति शालीकिः । ॥

II. 6. 14. ताः प्राचीर्वोदीचीर्वायातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

II. 6. 15. पचन इति ॥ स ह स्माह बौधायन उखा ऋषभान्मण्डलेष्टका बार्हस्पत्यं महावीरं लोकंपृणा इत्येतद्गार्हपत्यात्पचेदथेतरद्ग्रामाग्नेरिति ॥ यत्किं चेष्टकोक्तं ग्रामाग्निना तत्पचेद्दुविदक्तं गार्हपत्यादिति शालीकिः । ॥

II. 8. 7. पशुशीर्षाणां करण इति ॥ प्रत्यक्षाणि वा मार्त्तिकानि वा स्युरिति बौधायनः ॥ प्रत्यक्षाण्येवेति शालीकि॥र्हिरण्मयानीत्यौपमन्यवो ॥ वायव्यग्निरसि वैतान्मन्त्रान्निगदेदित्यौपमन्यवीपुत्रः । ॥

II. 9. 4. त्रिरपसलैः पर्णशाखया परिकर्षतीति ॥ सूत्रं बौधायनस्यानुपरिकीर्यैव माषान्यमगाथाभिः परिगायेदिति शालीकिः । ॥

II. 10. 9. आघार इति ॥ उभाभ्यां मन्त्राभ्यामेतमाघारमाघारयेदिति बौधायनो ॥ हिरण्यगर्भः समवर्तताग्र इत्येतयैवैतमाघारमाघारयेदिति शालीकिः । ॥ २ ॥ **प्रथमः** ॥

अनिष्टप्रथमसोमस्याध्वरदीक्षाहुतीनाꣳ होम इति ॥ अध्वरदीक्षाहुतीर्हुत्वाग्निका जुहुयादिति बौधायन ॥ आग्निका एवेति शालीकिः । ॥

II. 11. 12. वैराजीषु दीक्षास्विति ॥ स ह स्माह बौधायनो नास-

वत्सरꣳ सोव्यन्वैराजीदीक्षाः कुर्वीत । काममꣳ संवत्सरꣳ सोव्यन्वैराजीदीक्षाः कुर्वीत । संवत्सरं वा भूत्वैकाहिकं[१] कुर्वीतैकाहिकस्त्वेवाग्निरिति[२] शालीकिः । ॥

II. 13. 7. काम्यस्यान्ववधान[३] इति ॥ जाते काम्यमन्ववदध्यादिति[४] बौधायनः ॥ पुरस्तादेवेति शालीकिः । ॥

II. 13. 18. औदुम्बरीणाꣳ समिधामभ्याधान इति ॥ सूत्रं शालीके-र्न्नो ह स्माह बौधायन एकामेव समिधं पञ्चर्चेनाभ्याद-ध्यान्तदेव रात्रोघ्नꣳ स्यादिति । ॥

II. 15. 14. अन्नपतीयायै समिधो ऽभ्याधान इति ॥ सूत्रꣳ शालीके-र्न्नो ह स्माह बौधायनो ऽन्नपतीयां प्रतिसमेधनीयां वैष्ण-वीमित्येता अभ्यादध्यादिति । ॥

II. 16. 2. वात्सप्रविष्णुक्रमयोः संनिपात इति ॥ अहरहः संनिपातये-दिति बौधायन ॥ आदितश्चान्ततश्चेति शालीकिः । ॥

उख्य उद्वाते प्रायश्चित्तकरण[५] इति ॥ स ह स्माह बौधा-

---

१ Thus G U C′ and the Ms.; भूत्वैकाह्निकं B Bu ; भूत्वैकाहं Be.

२ According to the vivaraṇa of this dvaidham, given in Ms., the इति, which is missing in all the MSS., ought to be inserted before ऐकाह्निकस्त्वे० ।

३ Thus U (sec. m.) C′; ०स्यान्वाधान the other MSS.

४ Thus B Be C′ Bu G (sec. m.) U (sec. m.); ०न्वादध्या० G (pr. m.) and the Ms.

५ प्रायश्चित्तस्य करण G (sec. m.) U.

यनः प्रवृज्य परिदायाकाङ्क्षतिभिरभिजुहुयादथेतरत्कर्मावृता कुर्यादित्यन्यो ह स्माह शालीकिः प्रवृज्य परिदायाकाङ्क्षतिभिरभिजुहुयान्न चेतरत्कर्मावृता कुर्यादिति ॥

II. 16. 12. प्रयाण इति ॥ स ह स्माह बौधायन उभयेन प्रयायादाध्वरिकेण चाग्निकेन चेत्याग्निकेनैवेति शालीकिः ॥

II. 165. 15. अथ यद्यपर्याणा[१] अप उपाधिगच्छतीति ॥ सूत्रꣳ शालीकेरन्यो ह स्माह बौधायनो यत्रैवापर्याणा अप उपाधिगच्छेत्तद्भस्म प्रवेशयेन्न च विगर्भां तां कुर्याद्यावन्मात्रं वादाय प्रत्यवदध्यात्समुद्य भस्मना योनिमित्यथेतरत्स्थालीषु वा घतेषु वानुनिधापयेदिति ॥

II. 17. 13. देवयजनस्याध्यवसान इति ॥ स ह स्माह बौधायन उभयेनाध्यवस्येदाध्वरिकेण चाग्निकेन चेत्याग्निकेनैवेति शालीकिः ॥ ३ ॥

II. 18. 14. संभाराणां निवपन इति ॥ सूत्रꣳ शालीकेरन्यो ह स्माह बौधायनो भस्म चैवोषाꣳश्च मन्त्रेण निवपेत्तूष्णीमितरौ संभाराविति ॥

II. 19. 4. गार्हपत्यचिताविति ॥ सूत्रꣳ शालीकेरन्यो ह स्माह बौधायनोऽग्निग्रहणꣳ स्वयंचितिꣳ श्वेतकृष्णयोरभिमर्शनमधिद्रवणमवद्रवणमिति[२] सर्वमेवैतत्कर्मावृता कुर्यादिति ॥

---

१ Thus here and infra all.

२ Thus Be C′ and cp. XXIII. 15; ॰धिद्रवणावद्रवण इति B ॰धिद्रवणावद्रवणे इति U (sec. m.) Ms; ॰धिद्रवणमिति Bu G U (pr. m.).

साहस्रं चिन्वीत प्रथमं चिन्वानः पञ्चचितीकं चेति ॥ स ह स्माह बौधायनः समाप्यैताश्चतुर्थं चिन्वानो जानुदघ्नं चात ऊर्ध्वं प्रत्याददीत पञ्चचितीकं चेत्य॥न्यो ह स्माह शालीकिः समाप्यैताश्चतुर्थं चिन्वानो ग्रीवदघ्नं चैवात ऊर्ध्वं प्रत्याददीतैकचितीकं चेति । ॥

वात्सप्रविष्णुक्रमयोः संनिपात इति ॥ स ह स्माह बौधायनो यद्यह[1] वात्सप्रमुपवसथे संपद्येत वात्सप्रेणोपस्थाय संनिवपेताथ यदि विष्णुक्रमा उपवसथे संपद्येरन्विष्णुक्रमैः क्रमित्वा वात्सप्रेणोपस्थाय संनिवापेन प्रक्रामेदित्य॥न्यो ह स्माह शालीकिर्यद्यह[2] वात्सप्रमुपवसथे संपद्येत वात्सप्रेणोपस्थाय श्वो भूते संनिवपेताथ यदि विष्णुक्रमा उपवसथे संपद्येरन्विष्णुक्रमैः क्रमित्वा वात्सप्रेणोपस्थाय श्वो भूते संनिवापेनैव प्रक्रामेदिति । ॥

II. 20. 3. तस्यामन्यत्रावेक्षमाणो दधिद्रप्सान्प्रास्यत्यमुं ते शुचि दधामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधातनस्योत्तरः शालीकेः । ॥

II. 20. 5. अथैनां सिकताभिः पूरयित्वा दध्नोपरिष्टात्संप्रच्छाद्येति ॥ सूत्रं बौधायनस्य ॥ सिकताभिरेवैनां[2] पूरयित्वोत्तरे शाखाखण्डे निदध्यादिति शालीकिः । ॥

---

१ Thus Bu U G (sec. m.) Be C′; यदिह B G (pr. m.); यदि Ms.
२ °रेवैनां Bu Be C′; °रेवैनाः B G U Ms.

II. 20. 7. शिक्यस्यादान इति ॥ मन्त्रेणाददीतेति बौधायनस्तूष्णीमिति शालीकिः ॥

II. 20. 15. नैर्ऋतीनामुपस्थान[१] इति ॥ कुर्वीतात्र तयादेवतसूददोहवे[२] इति[२] बौधायनो न कुर्वीतेति शालीकिः ॥

II. 20. 17.[५] उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः ॥

II. 21. 1. गार्हपत्यस्योपस्थान इति । सूत्रं बौधायनस्याहवनीयमेवैतेन यजुषोपतिष्ठेरन्निति शालीकिः ॥ ४ ॥ द्वितीयः ॥

II. 21. 13' स्तम्बयजुषो हरण इति ॥ सूत्रं बौधायनस्यापरवकाशादप्यत्राग्नीध्रो हरेदिति शालीकिः ॥

III. 57. 4. आख्यातं चात्वालस्य परिलेखनम् ॥

III. 57. 7. आख्यातं लोकाग्नीनाꣳ हरणम् ॥

III. 94. 5. आख्यातꣳ स्फ्यविघनानामुपस्थानम् ॥

II. 21. 17. कार्ष्णाजिनीनामुपमोचन इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 22. 6. वज्रिणीनामुपधान इति ॥ सूत्रꣳ शालीकेरन्नो ह स्माह बौधायनोऽग्रेण यूपावटीयꣳ शङ्कुं तिष्ठन्ननुरथिव्यं कृत्वा प्राञ्चं बाणं प्रविध्येत्तमनुद्रुत्याश्मानमुपदध्यादेवं दक्षिणत एवं पश्चादेवमुत्तरत इति ॥

---

१ ०मुपधान most of the MSS.

२ Thus B G; ०दोहवे इति Bu; ०दोहस इति Be; ०दोहवाविति U (sec. m.), Ms.; C′ uncertain.

II. 23. 2. ऐन्द्रिया[1] उपधान इति ॥ सूत्रं बौधायनस्य " पुच्छ ऐन्द्रीमुपदध्यादिति शालीकिः ' ॥

II. 23. 8. उदपात्रस्योपनिनय इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो " यथोपपादमिति शालीकिः ' ॥

ib. दर्भस्तम्बस्योपधान इति ॥ वाक्का समुद्र उपदधात्विति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

II. 23. 10. दूर्वेष्टकाया उपधान इति ॥ स ह स्माह बौधायनो दूर्वया वा सहोपदध्याद्दूर्वां[1] वैवेति[2] " मन्त्रदूर्वैवैषा स्यादिति शालीकिः ' ॥

II. 23. 13. औदुम्बरं युगलाङ्गलमिति ॥ सूत्रं बौधायनस्य " दार्क्ष्य-वृक्षमेवैनत्कुर्यादिति[3] शालीकिः ॥ पुरुषा एवैतद्युगलाङ्गलं पुरस्तादाददते ऽध्वर्युः पश्चादिति बौधायनः " प्रत्यक्षमेवैतत्संयुज्य कृषेदिति शालीकिः ' ॥

II. 24. 1. कर्षण इति ॥ संप्रत्याहारं[4] कृषेदिति बौधायन " आवाजम[5] इति शालीकिः ॥ ५ ॥

१ Thus Be G (pr. m.); ऐन्द्रा Bu B G (sec. m.); ऐन्द्रियासु॰ Bu.

२ Thus C′; दूर्वांवैवेति B Be G; चैवेति U (sec. m.); वेति U (pr. m.).

३ Thus C′ the Viv. and Ms. ॰वृक्ष॰ the other MSS.— ॰मेवैतत्कु॰ G Ms., ॰मेवैनेकु॰ Be C′.

४ Thus Be C′; संप्रत्यहारं Bu G; संप्रत्यगाहारं U, प्रत्यहारं B. संप्रत्याहृत्याहृत्य the Viv.

५ Thus B G U and the Viv.; चवाजन Bu, चावाज Be C′. Meaning uncertain.

II. 23. 16. गोयुगानामनुमन्त्रण इति ॥ तत्तदेवानुमन्त्रयेदिति बौधायनः ॥ सर्वाणि सहेति शालीकिः । ॥

II. 24. 10. सर्वौषधस्य वपन इति ॥ अर्धर्चशो वपेदिति बौधायन ॥ ऋचर्चेति शालीकिः । ॥

II. 24. 14.5 इतरमितरच्च विपरिहरतीतरमितरच्चेति ॥ सूत्रं बौधायनस्य ॥ आददान एवैतां दिशमभिसंपादयेदिति शालीकि ॥ र्यजुषा यजुर्विपरिहरेदित्यौपमन्यवः । ॥

II. 26. 8. स दर्भपुञ्जीलानि पयःप्रोक्षे ऽवधाय तैः प्रोक्षत्यग्नीन्वो ऽग्निभ्यो जुष्टान्प्रोक्षामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

II. 27. 5. कुम्भेष्टकानामुपधान इति ॥ सूत्रं बौधायनस्य ॥ पञ्चपुञ्जेष्वेवैना[1] उपदध्यादिति[1] शालीकिः । ॥

नानामन्त्रासु दिक्षु भजमानास्विति ॥ तयादेवतेनानुक्रम्य पारे सूददोहसः कुर्वीतेति बौधायनस्तां ॥ तामेवेष्टकां परिनिस्तिष्ठेदिति शालीकिः । ॥

इष्टकागणानामुपधान इति ॥ तयादेवतेनानुक्रम्य पारे सूददोहसः कुर्वीतेति बौधायनस्तं ॥ तमेवेष्टकागणं परिनिस्तिष्ठेदिति शालीकिः । ॥

I. 28. 8-10. अभिमर्शे ऽभिहोम इति ॥ सूत्रमाचार्ययोर् ॥ नो ह स्माहौ-

---

१ Thus B G U (sec. m.); ॰पुञ्जेष्वेतामुप॰ Bu; ॰पुञ्जेष्वका उप॰ Be C.

पमन्यवः पुरस्तादभिमर्शाभिहोमाभ्यां तथादेवतस्तूददोहसः[1] कुर्वीतेति । ॥

II. 28. 15. सर्पशिरस[2] उपधान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 30. 10. औदुम्बरं चोलूखलमुसलमिति ॥ सूत्रं बौधायनस्य ॥ दार्वृत्तमेवैनत्कुर्यादिति[3] शालीकिः । ॥ ६ ॥

II. 30. 11. सर्वौषधस्यावहनन इति ॥ मन्त्रेणावहन्यादिति बौधायनस्॥तूष्णीमिति शालीकिः । ॥

II. 30. 17. उखानामुपधान इति ॥ सूत्रं बौधायनस्य॥ कामेवोखां मन्त्रेणोपदध्यात्तूष्णीमितरे इति शालीकिः । ॥

II. 31. 13. पशुशीर्षाणामुपधान इति ॥ मध्य उपदध्यादिति बौधायनो ॥ ऽन्तेषु तस्य व्युदूह्योपदध्यादिति शालीकिः । ॥

अथर्वशिरस उपधान इति ॥ पुरस्तात्सर्वतोमुखमग्रेण स्वयमातृणामन्त्र नवर्चमथर्वशिर उपदध्यादिति बौधायनो ॥ नाथर्वशिर इति शालीकिः । ॥

II. 33. 12. सर्वतोमुखस्योपधान इति ॥ सूत्रं बौधायनस्यानुदिशमेव[4] गायत्रीरुपदध्यादिति शालीकिः । ॥

---

१ Thus all the MSS.; ०दोहसो Ms.

२ ०शिर MSS. exc. C'.

३ ०दृत्त्यं० MSS. exc. U C' and Ms.; ०मेवैतं MSS. exc. U.

४ Thus Be C' U (sec. m.) and the Viv.; the other MSS. om. एव।

33. 15. अङ्गानामुपधान इति ॥ सूत्रं बौधायनस्य ॥ विज्ञातेष्वेवाङ्गेष्वङ्गान्युपदध्यादिति शालीकिः । ॥

34. 2. ऋषभस्योपधान इति ॥ सूत्रꣳ शालीकेर् ॥ नो ह स्माह बौधायन ईषत्प्रत्यवह्वतशिरसमेनमुपदध्याद्यथर्षभो[1] वाग्नितुमुपतिष्ठतीति[2] । ॥

अतीतानामिष्टकागणानामुपधान इति ॥ आधिमुपदध्यादिति[3] बौधायनस् ॥ त्यन्त इति शालीकिः । ॥

व्रतप्रदान इति ॥ मध्यंदिने व्रतं प्रयच्छेदिति बौधायनस् ॥ त्यन्त इति शालीकिः । ॥ ७ ॥ तृतीयः ॥

35. 1. पुरीषचितेरुपधान इति ॥ सूत्रं बौधायनस्य ॥ पूर्वद्युरेव पुरीषचितिं परिनिष्ठिष्टेदिति शालीकिः । ॥

अश्वावभितस्तिष्ठेतां कृष्ण उत्तरः[4] श्वेतो दक्षिण[5] इति ॥ अत्रैवाभ्यां तिष्ठद्भ्यां घासमाहारयेदिति बौधायनः ॥ कालेकाल एवैनावुदानयेयुरिति शालीकिः । ॥

39. 1. वालखिल्यानामुपधान इति ॥ उपरिष्टाद्वालखिल्या उपदध्यादिति बौधायनः ॥ पार्श्वत इति शालीकिः । ॥

---

१ Thus (प्रत्यवह्वत॰) U G (pr. m.) C′ and Ms.; ॰प्रत्यवह्वत॰ Bu; प्रत्यगवह्वत॰ Be G (sec. m.), प्रत्यगवह्वत॰ B.

२ Thus G and Ms.; वाग्नितमुप॰ or वाग्नितामुप॰ the other MSS.

३ Thus B G U (sec. m.), Ms. and the Viv.; अधि॰ Bu, अदि॰ Be C′ U (pr. m.).

४ उत्तरत G C and the Viv.

५ दक्षिणत B G.

II. 41. 1. स्तृष्टीनामायातन[१] इति ॥ अग्रेण स्वयमातृण्णामुदीचीरेना आयातयेदोत्तरस्मात्पक्षसंधेः सर्वतो[२] वेति[२] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

II. 41. 5. व्युष्टीनामुपधान इति ॥ सूत्र्य शालीकेरन्नो ह स्माह बौधायनः पुरस्तादेनाः प्रतीचीरुपदध्यात्पुरस्ताद्धि प्रतीची रात्रिर्व्युच्छतीति । ॥

II. 42. 18. तासां पुरीषवतीं मध्य उपदधातीति ॥ स ह स्माह बौधायनः पुरीषेण वा सहोपदध्यात्पुरीषं[३] वैवेति[३] । मन्त्र-पुरीषैवैषा स्यादिति शालीकिः । ॥

II. 42. 20. वैराजानामुपधान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

II. 43. 9. याज्ञसेनीनामुपधान इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II. 43. 21. घृतेष्टकानामुपधान इति ॥ स ह स्माह बौधायनो घृतेन वा सहोपदध्याद्घृतेन वाभ्यज्येति ॥ मन्त्रघृता एवैताः स्युरिति शालीकि ॥ घृतपिण्डानेवात्रोपदध्यादित्यौपमन्यवः । ॥

---

१ Thus C′ (sec. m.), Ms., the Viv. (one copy); ॰मायतन the other MSS.

२ Thus Ms. and the Viv.; **सर्वत इति वेति** Bu B G U (pr. m.); **सर्वत एवेति** U (sec. m.) Be C′.

३ Thus G; **॰षंचैवेति** B Be Bu; **षंचेतिवेति** U, **॰षंवैव्यवेति** C′; [illegible] the Ms.

इष्टकानामावापस्थान इति ॥ अन्तरेण ज्योतिष्मतीश्च भूतेष्टकाश्चैतदिष्टकानामावापस्थानं भवतीति ॥ स ह स्माह बौधायनः संवेशनयजुः प्रवृद्धयजुः प्रयाणयजुरपर्याणयजुः सामिधेनीराप्रीरतीताꣳस्त्विष्टकागणानत्रोपदध्यादित्य॥त्रो[1] ह स्माह शालीकिर्नानिष्टकं मन्त्रमिष्टकावदापादयेद।तीतानेवेष्टकागणानत्रोपदध्यादिति[2] । ॥

II. 45. 4. पौर्णमास्या उपधान इति ॥ सूत्रं बौधायनस्योत्तर एवाꣳसे पौर्णमासीमुपदध्यादिति शालीकिः । ॥

II. 45. 6. नक्षत्रेष्टकानामुपधान इति ॥ सूत्रꣳ शालीकेर॥त्रो ह स्माह बौधायनः प्रतितारकं चात्रेष्टका उपदध्यात्तत्रतत्र च रोचयेदिति । ॥

II. 45. 15. सर्वतोमुखस्योपधान इति ॥ सूत्रꣳ शालीकेर॥त्रो ह स्माह बौधायनो व्यवेतं[3] खल्विदं कृष्णस्याभिमर्शनेन[4] भवति । सर्वतोमुखमुपधास्यन्कृतमश्वमभिमृशेदिति । ॥

II. 46. 3. वर्धनेष्विति ॥ सूत्रꣳ शालीकेर॥त्रो ह स्माह बौधायनो

---

१ Before **°त्रोपदध्या°** Bu Be C′ G (pr. m.) U (sec. m.) ins. **एतदेव** or **एतद्** here and l. 6; B G (sec. m.) and the Ms. om. these words.

२ **°पातयेदितिता°** some.

३ **व्यवेतं** Be U (sec. m.) Ms. (= **व्यवहितं**); **व्यपेतं** B G, **व्यवेतं** C′ **व्यपोवेतं** Bu.

४ **°मर्शनं** the Ms.

यावन्ति वर्धनानि समाने ऽहनि संनिपतेयुः सर्वेषां पारे तयादेवतसूददोहसः कुर्वीतेति । ॥ ८ ॥ चतुर्थः ॥

II. 47. 9. अथ प्रोक्षणीषु हिरण्यशल्कान्प्रत्यस्यत्यूर्ध्वं[१] त्रिभ्यो ऽपरिमितानिति सहस्रमिति प्रोक्तं ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

II. 48. 9. शतरुद्रीयस्य होम इति ॥ सूत्रमाचार्ययोः ॥ पूर्वस्मिन्नेवानीके जुहुयादिति गौतमः । ॥

II. 49. 8. नमस्कारैरुपस्थान इति ॥ स ह स्माह बौधायनः सधनुष्क एवोपतिष्ठेतोत्तरस्या एव दिश आवृत्यैतेनैव यथेतमेत्य पश्चात्प्राङ् तिष्ठन्नूर्ध्वामुपतिष्ठेतेत्य॥न्नो[२] ह स्माह शालीकिर्दत्त्वैव धनुरुपतिष्ठेतैतस्यै चैव दिश आवृत्यैतेनैव यथेतमेत्य पश्चात्प्राङ् तिष्ठन्नूर्ध्वामुपतिष्ठेतेति[२] । ॥

I. 49. 15. परिषिच्यमाने यजमानं वाचयतीति ॥ सूत्रं शालीकेर॥न्नो ह स्माह बौधायनः परिषिच्यपरिषिच्यैवाश्मनि कुम्भं निदध्यादश्मंस्ते क्षुदमुं ते शुगृच्छत्वित्यभिनिर्दिशेद्यं द्विष्यादिति । ॥

II. 50. 3 विकर्षण इति ॥ अर्धर्चशो विकर्षेदिति बौधायन ॥ ऋचर्चेति शालीकिः । ॥

---

१ धावयति instead of प्रत्यस्यति Be C'.

२ Thus (ऊर्ध्वाम्) Be C and the Viv.; ऊर्ध्वम् all the other MSS. and the Ms.

II. 52. 3. स्वयमातृण्णायै व्याघारण इति ॥ सूत्रं बौधायनस्याग्निचतुरस्रामेनां व्याघारयेदिति शालीकिः ॥

II. 53. 4. वैश्वानरमारुतानां मन्त्रामन्त्र इति ॥ मन्त्रवन्तः स्युरिति बौधायनस्तूष्णीका इति शालीकिर्वैश्वानर एव मन्त्रवान्स्यात्तूष्णीका मारुता इत्यौपमन्यवः ॥

II. 53. 6. आनीकवतस्य होम इति ॥ सूत्रं बौधायनस्याहवनीय एवानीकवतं जुहुयादिति शालीकिः ॥

II. 54. 4. अथैनꣳ संचितमाज्यप्रोक्षेण प्रोक्षतीति ॥ सूत्रꣳ शालीकेर्वचो ह स्माह बौधायनो मन्त्रानुदिशं चैनं प्रोक्षन्मन्त्रानुलोकं चेति ॥

II. 54. 15. इध्मस्य निधान इति ॥ स ह स्माह बौधायन उभयेनेध्मं निदध्यादाध्वरिकेण चाग्निकेन चेत्याग्निकेनैवेति शालीकिः ॥ ९ ॥

II. 55. 1. शाकलैः परिधान इति ॥ आहवनीयं परिदध्यादिति बौधायनः पुच्छमेवेति शालीकिः ॥

II. 55. 5. स्रुवाहुत्योः करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥

II. 55. 7. पूर्णाहुत्यै[1] करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥

II. 55. 8. अत्र जुह्वन्मनसा दिग्भ्यो ध्यायेदिति[2] ॥ दिग्भ्यो ऽहमग्नि-

---

१ Thus Ms. only; पूर्णाहुत्योः the MSS.; पर्णाहुतिकरण the Viv.

२ इति om. all exc. Ms.

मभि¹षंभराणीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 56. 8. प्रसेकस्यायातन² इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II. 56. 10. तस्मिंश्चतुर उपस्तृणान आहेति ॥ सूत्रं बौधायनस्य ॥ नोपस्तृणीतेति शालीकिः ॥

II. 56. 12. प्रसेकस्यानुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो ॥ नानुप्रहरेदिति शालीकिः ॥

II. 56. 13. ब्रह्मौदनस्य श्रपण इति ॥ अन्याधेयवत्कल्पयेदिति बौधायन ॥ एतस्मिन्नेवेति शालीकिः ॥

II. 56. 14. ब्रह्मौदनस्य प्राशन इति ॥ उत्तरे ओष्ठन्ते प्राश्नीयुरिति बौधायनः ॥ पुच्छमेवाभित इति शालीकिः ॥

II. 57. 4. वातनामानां होम इति ॥ सूत्रं बौधायनस्य ॥ वातमप्यन्नाञ्जलिना जुहुयादिति शालीकिः ॥ कृष्णाजिनपुटेन जुहुयादित्यौपमन्यवः ॥

II. 57. 9. शाकलानामनुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो ॥ नानुप्रहरेदिति शालीकिः ॥ १० ॥ पञ्चमः ॥

II. 57. 12. अग्निधिष्ण्यानामुपधान इति ॥ सूत्रं बौधायनस्य ॥ सर्वा एव याजुषीरुपदध्यादिति शालीकिः ॥

---

१ The two akṣaras षम effaced in G.

२ [illegible] MSS. exc. Be G¹.

II. 58. 2. नानाबीजानां निर्वपण इति ॥ निर्वपणेनानुसमेत्य[1] व्यभिन्द्यादिति[1] बौधायनस्‖तत्तदेव हविः परिनिस्तिष्ठेदिति शालीकिः । ॥

तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोप्यन्ते यवानिति ॥ सूत्रꣳ शालीकेर‖न्यो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृत्[2] स्यादिति । ॥

आप्यनिनयन इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनयेदिति बौधायनो ‖ ऽग्रेणातिहार्येति शालीकिर‖ग्रेण वा जघनेन वेत्यौपमन्यवः । ॥

सचरुपशुपुरोडाशा[3] एवेतरेषाꣳ हविषामिडा अवद्येदभ्यर्धादिति[4] । सपशुपुरोडाशानां वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

I. 58. 7. अत्याक्रमण इति ॥ सूत्रं बौधायनस्य ‖ सह स्विष्टकृतात्याक्रामेदिति[5] शालीकिः । ॥

60. 10. अभिषेक इति ॥ सूत्रमाचार्ययोर‖न्यो ह स्माहौपमन्यवः

---

१ ॰समेत्याभिन्द्यादिति U (sec. m.).

२ Thus G (sec. m.) Bu Be C′ Ms; ॰ष्कृत B G (pr. m.) U; cp. XXI. 4: 75. 7, XXI. 16: 99. 16.

३ ॰पशु॰ om. B G U (pr. m.) the Viv.— ॰डाश B Bu G U (pr. m.) the Viv.; ॰डाशा Be C′ U (sec. m.).

४ Thus (and cp. II. 71. 5) B G B; ॰दत्यर्धादिति Be C′ ॰दम्यर्धादिति Bu.

५ Thus U (pr. m.) C′, the Viv.; स्विष्टकृतमत्या॰ the other MSS.

पुरस्तात्स्विष्टकृतो यावदाम्नातेनाभिषिञ्चेन्नात्र कृष्णाजिनं न रुक्मौ[१] न पार्थानि भवन्ति कुशानेव संस्तीर्य तेष्वेनमभिषिञ्चेदिति । ॥

II. 58. 18; 59. 8. योगे विमोक इति ॥ अहरहर्युञ्ज्यादहरहर्विमुञ्चेदिति बौधायनो ॥ ऽहरहर्युञ्ज्यादन्ते विमुञ्चेदिति शालीकिर ॥ आदित एव युञ्ज्यादन्ते विमुञ्चेदित्यौपमन्यवः । ॥

II. 59. 11. क्रतुकरण इति ॥ सूत्रं बौधायनस्य ॥ यथाक्रत्वेवास्य क्रतुकरणानि कुर्यादिति शालीकिः । ॥

II. 59. 13. ऐकादशिनानां[२] पशूनामुपाकरण इति ॥ सूत्रं बौधायनस्यै ॥ कयूप एवैकादशिनान्पशूनुपाकुर्यादिति शालीकिः । ॥ ११ ॥

II. 59. 17. वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन ॥ आदितश्चान्ततश्चेति शालीकिः । ॥

II. 60. 3. अश्वस्यावघ्रापण इति ॥ सूत्रं बौधायनस्य ॥ माध्यंदिन एव सवने ऽश्वमवघ्रापयेदिति शालीकिः । ॥

पशूनामासादन इति ॥ पशुंपशुं पञ्चहोत्रासादयेदिति बौधायनो ॥ मुख्यमेवेति शालीकिः । ॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः ॥ सर्वान्सहेति शालीकिः । ॥

---

१ Thus Be C′ U (sec. m.); रुक्म the other MSS.

२ C′ and the Viv. ऐका०।

II. 62. 1. आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती च स्यादध्यवदानीया चेति बौधायनस्॥ तूष्णीका च स्यादध्यवदानीया चेति शालीकिर्॥ मन्त्रवती च स्यात्तन्त्रहरया चैनया निरूढया यजेतेत्यौपमन्यवः । ॥

II. 62. 6. देविकाहविषां करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥ १२ ॥ षष्ठः ॥

63. 1. अथातो वाजपेयं व्याख्यास्यामः ॥

चिन्वीत वाजपेयेऽग्निमिति बौधायनो ॥ न चिन्वीतेति शालीकिः । ॥

II. 63. 3. औदुम्बरꣳ रथचक्रꣳ सप्तदशारमिति ॥ सूत्रं बौधायनस्य ॥ दार्व्यहृत्तमेवैनत्कुर्यादिति[1] शालीकिः । ॥

II. 63. 12. खादिरौ विहर्षौं[2] वभ्रैर्व्यूतामुपकल्पयत[3] इति ॥ सूत्रं बौधायनस्य ॥ बस्ताजिनं चैवात्रोपकल्पयीत शतमानं च हिरण्यमिति शालीकिः । ॥

II. 63. 13. स ग्रीष्मस्य जघन्याहःसु पुरस्तादाषाढ्यै पौर्णमास्यै दीक्षेत इति ॥ सूत्रं बौधायनस्य ॥ शरदि वाजपेयेन यजेतेति शालीकिः । ॥

---

१ ॰हृत्य॰ G (sec. m.).— ॰मेवैनत् G (pr. m.) U, ॰मेवैतत् the other MSS.

२ Thus G and the Viv.; विहषि Bu, वितूषौ B, वितूष्णौं U, विकर्णा Be, विकर्णौं C′ (pr. m.), विहर्णौं (sec. m.).

३ Thus G, वध्यैव्यू॰ Be, वभ्रैव्यू॰ C′, वंधैस्तू॰ Bu, वाभ्रैर्व्यू॰ U, दध्युर्व्यू॰ B, वभ्रैर्व्यू॰ the Viv. (one copy), वभ्रैक्त॰ (another).

II. 64. 4; 65. 10. सावित्राणाꣳ होम इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 64. 12. वाजपेयिकायै सुरायै संधान इति ॥ सूत्रमाचार्ययोर् "न्नो ह स्माहौपमन्यवो यत्रैव सुरा स्यात्तत आहारयेदिति ' ॥

II. 65. 4. सो ऽरत्निमात्रेऽरत्निमात्रे वा विग्रथ्नाति धनुर्वेष्टीर्वा प्रवेष्टयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 65. 5. गौधूमं[1] चषालमिति ॥ सूत्रं बौधायनस्य " गोधूमपिष्टानामपि कुर्यादिति शालीकिः ' ॥

II. 66. 2. दुन्दुभीनामास्वञ्जन इति ॥ सूत्रं द्वैधमेवैतद्भवति ॥

II. 66. 14. क्रतुकरण इति ॥ सूत्रꣳ शालीकेर् "न्नो ह स्माह बौधायनो ऽतिरात्रमप्यत्र क्रतुमुपेयात्समानपक्षे चैनꣳ संतिष्ठापयिषेदिति[2] ॥ १३ ॥

II. 66. 16. पञ्चैन्द्रानतिग्राह्यान्गृह्णातीति ॥ सूत्रं बौधायनस्य " सर्व एवैते[3] सोपयामा[4] ग्रहीतव्या[4] भवन्तीति शालीकिः ' ॥

II. 67. 10. सुराग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य " सजुष्टान्परिमृज्य[5] सादयेदिति शालीकिः ' ॥

---

१ Thus G and the Viv. (one copy), गोधमं Bu; गोधूमं the other MSS.

२ Thus Be C′ U (sec. m.); संनिपतिष्येदिति B G; सन्निपधिष्येदिति Bu.

३ Thus G C′; एवैने U, एवैतैः B Be; Bu defective.

४ सोपयामग्रहो॰ U.

५ Thus Be C′; सयजुष्टा॰ Bu U, सयजुष्का॰ B G.

I. 67. 12. द्विश्रेणि[1] वा त्रिश्रेणि[1] वोदीच आयातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 68. 1. षड्रशना आदाय यूपमभिप्रेयादिति बौधायनः ॥ पञ्च रशना आदाय यूपमभिप्रेयादिति शालीकिस्तिस्रो ॥ रशना आदाय यूपमभिप्रेयादित्यौपमन्यव ॥ एकामेव रशनामादाय यूपमभिप्रेयादित्यौपमन्यवीपुत्रो ॥ ऽग्नीषोमीयरशनायामेव नियुञ्ज्यादित्याञ्जीगविः । ॥

II. 68. 2. वाजपेयिकानां पशूनामुपाकरण इति ॥ ऐकादशिनाानुपाकृत्य[2] वाजपेयिकानुपाकुर्यादिति बौधायनो ॥ वाजपेयिकानेव नैवैकादशिनानिति शालीकिः । ॥

ib. 3. प्राजापत्यानामुपाकरण इति ॥ एकैकश उपाकुर्यादिति बौधायनः ॥ सर्वान्सहेति शालीकिः । ॥

I. 70. 3. वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन ॥ आदितश्चान्ततश्चेति शालीकिः । ॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः ॥ सर्वान्सहेति शालीकिः । ॥

72. 15; 5. 15. रथानामभियोजन इति ॥ सूत्रꣳ शालीकेरत्रो ॥ ह स्माह बौधायनो य एवैष समवक्षेपणो मन्त्रस्तं प्रथममभियोजनानां कुर्यादथ तूष्णीमश्वान्समवक्षिपेदिति । ॥

I. 76. 5. काष्ठागमन इति ॥ स ह स्माह बौधायनः प्रदक्षिण-

---

१ द्विःश्रे० and त्रिःश्रे० G (sec. m.).

२ एका० the Viv.

मावृत्यैतां[१] काष्ठां गच्छेयुरथामुतो ऽपसलैरावर्तेरन्नित्य॥न्नो ह स्माह शालीकिरपसलैरावृत्यैतां[१] काष्ठां गच्छेयुरथामुतः प्रदक्षिणमावर्तेरन्निति । ॥ १४ ॥

II. 79. 14. अथ यजमानं तार्प्यं परिधापयतीति ॥ सूत्रं बौधायन-स्यौभे एवैते यजमानं परिधापयेदिति शालीकिः । ॥

II. 80. 2. श्रित्या आयातन[२] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 80. 5. तां दशभिः कल्पै[३] रोहतीति[३] ॥ सूत्रं बौधायनस्य॥ तैरेव मन्त्रैः प्रत्यवरोहेदिति शालीकिः । ॥

II. 81. 2. अथास्मै प्रत्यवरोहणत[४] आसन्दीं निदधातीति[५] ॥ सूत्रं बौधायनस्य॥ बस्ताजिनं चैवास्यात्र[६] प्रत्यवरोहेच्छतमानं[७] च हिरण्यमिति शालीकिः । ॥

---

१ Thus both times C′ only; ०वृत्येतः both times G and B the second time; वृत्येत B the first time; all the MSS. (exc. C′) ०त्य०, not त्यै० ।

२ Thus B G, आयतन the Viv., आतन Bu, आधान Be C′.

३ Thus G U C′ (sec. m.) and the Viv.; ०ल्पोरोह० Bu, ०ल्पैरारोह० B Be.

४ Thus only the Viv., प्रत्यवरोहन the MSS.

५ Thus the Viv., निमिनोतीति Be, मिनोतीति C′, प्रत्यवदधातीति B Bu G U.

६ Thus B U G; वैवास्यच Bu; च only Be C; चास्य seems superfluous.

७ Before शतमानं B Bu U G ins. इति ।

II. 81. 5. अथैनमेतयासन्त्या सह आवहन्त्या वा व्रजतीति[1] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 81. 8. अतिग्राह्याणां भक्षण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II. 83. 10. प्राजापत्यानां भक्षण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II. 84. 2. गुदतृतीयेष्विति ॥ द्वे द्वे अत्र गुदतृतीये उपयष्टोपयजेदिति बौधायनो'' ऽपच्छेदमिति शालीकिः'' समस्तान्येवैतान्यनुप्रहृत्य सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः' ॥ १५ ॥ सप्तमः ॥

II. 85. 1. अथातो राजसूयं व्याख्यास्यामः ॥

चिन्वीत राजसूये ऽग्निमिति बौधायनो'' न चिन्वीतेति शालीकिः' ॥

II. 85. 9. पुनरभ्युष्य पिष्टानि कृत्वाहारयेदिति बौधायनस्तथाभ्युप्तान्येवैतानि[2] स्युरिति शालीकिः' ॥

II. 85. 10. नैर्ऋतस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तूष्णीक इति शालीकिः' ॥

II. 85. 12. एकोल्मुकस्य हरण इति ॥ अन्वाहार्यपचनाद्धरेदिति बौधायनो' ग्रामाग्नेरिति शालीकिः' ॥

II. 86. 1. नैर्ऋतस्य होम इति ॥ सूत्रं बौधायनस्य'' विस्रंसिकाकाण्डाभ्यामेनं परिगृह्य जुहुयादिति शालीकिः' ॥

---

१ व्रजंतीति G B, हजिनीति Bu; U Be C′ corrupt.

२ Thus G; ॰भ्यप्यान्ये॰ U, ॰भ्युपन्ये॰ B, ॰द्यप्तान्ये॰ Be C′.

II. 86. 3. दक्षिणानां दान इति ॥ अहरहर्दद्यादिति बौधायन ॥ आदितश्चान्ततश्चेति शालीकिः । ॥

II. 86. 3. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो ॥ यथोपपादमिति शालीकिः । ॥

II. 86. 5. स्वाहा नमो य इदं चकारेति ॥ सूत्रं बौधायनस्यान्तमप्यत्र स्वाहाकारं परिणयेदिति शालीकिः । ॥

II. 87. 1. संतनीनामनुप्रयोग इति ॥ स ह स्माह बौधायनो यदहरिष्ट्या वा पशुना वा यजेतापि तदहः संतनी[1] प्रयुञ्जीतेत्य॥चो ह स्माह शालीकिरहरहराश्रावणार्थे खल्वेते दृष्टे भवतो । यदहरिष्ट्या वा पशुना वा यजेत न तदहः संतनी प्रयुञ्जीतेति । ॥

ib. चातुर्मास्यानामनुप्रयोग इति ॥ स ह स्माह बौधायनो यदहश्चातुर्मास्यानि प्रयुञ्जीतापि तदहः संतनी प्रयुञ्जीतेत्य॥चो ह स्माह शालीकिरहरहराश्रावणार्थे खल्वेते दृष्टे भवतो । यदहश्चातुर्मास्यानि प्रयुञ्जीत न तदहः संतनी प्रयुञ्जीतेति । ॥

II. 88. 17. आख्यातं पश्चिमीयस्य करणम् । ॥ १६ ॥

II. 89. 3. अथोपवेषेणाङ्गारान्समूहतीति ॥ सूत्रं शालीकेर॥न्यो ह स्माह बौधायनस्तूष्णीमङ्गारान्समूह्यायैनान्स्रुवाहुतिभिरभिजुहुयादग्नये[2] रक्षोघ्ने स्वाहेति पञ्चभिश्च प्रष्टिवाहिनं रथं दद्यादिति । ॥

---

१ Here and infra some of the MSS. read संतनीः (संतती).

२ स्रुवाहुती॰ Be U C'. स्रुवाहुत्या॰ Bu.

II. 89. 11. अपामार्गसक्तूनाꣳ होम इति ॥ सूत्रꣳ शालीके॥र्न्वो ह स्माह बौधायनः समस्तेनैवास्मै मन्त्रेणापामार्गसक्तूञ्जुहुयात्तूष्णीꣳ स्रुवमनुप्रहरे।त्तूष्णीमुपोत्तिष्ठेदिति[1] । ॥

II. 89. 15. देविकाहविषां करण इति ॥ सूत्रं बौधायनस्य ॥ सोमꣳसोममनुवर्तेरन्निति शालीकि॥र्न देविकाहविर्भिर्यजेदित्याश्मीगविः । ॥

II. 91. 3. अग्निभिः प्रत्यवसान इति ॥ अजस्रैः प्रत्यवस्येदिति बौधायनो ॥ ऽरण्योः समारोह्येति शालीकिः । ॥

पयसः समासेचन इति ॥ दृतौ वा विनाडे[2] वा समासिञ्चेदिति बौधायनो ॥ नवायां कुम्भ्यामिति शालीकिः । ॥

II. 92. 14. स्वयंकृतेष्विति ॥ सूत्रꣳ शालीके॥र्न्वो ह स्माह बौधायनो गोन्यासप्रच्छदितानां[3] कुशानां बर्हिः संनह्येत्स्वयंपतितानां काष्ठानामिध्मं । यदेव वेद्यै रूपꣳ सा वेदिर्दृतिं वा विनाडं[4] वा रथ आधाय परिवहे।द्यत्तत्र नवनीतमुत्सीदेत्तदाज्यꣳ स्यादिति । ॥

II. 93. 2. मैत्राबार्हस्पत्यस्य निर्वपण इति ॥ समानचतुर्मुष्टौ स्याता-

---

१ ०मुपोत्तिष्ठेदिति G U C′, ०मुपतिष्ठेदिति B Bu Be; probably II. 89. 12 उपोत्तिष्ठति is the correct reading.

२ विनाले G U C′, विनाळे the other MSS. and the Viv.

३ Thus Be C′ and comp. the Viv.: गवां नियतगमनेन शातितानां कुशानां; योन्यायप्रच्छ० G B Bu, येन्यायप्रच्छ० U.

४ विनालं or विनाळं MSS.

मिति बौधायनो " नानाचतुर्मुष्टी स्यातामिति शालीकिः '

॥ १७ ॥ अष्टमः ॥

II. 94. 2. रोहिते चर्मणीति ॥ सूत्रं बौधायनस्याप्यरोहितꣳ स्यादिति शालीकिः ' ॥

सोमक्रयणेषूपैते¹ नित्याः शते स्युरिति बौधायन " एत एव शततमाः स्युरिति शालीकिः ' ॥

II. 94. 8. वसतीवरीणां ग्रहण इति ॥ सूत्रं बौधायनस्य " सारस्वतीरप्यत्र वसतीवरीर्गृह्णीयादिति शालीकिः ' ॥

II. 94. 18. आग्नेयस्यैन्द्राग्न उपालम्भ्यो भवतीति ॥ सूत्रं बौधायनस्यै"न्द्राग्न एव सवनीयः स्यादिति शालीकिः ' ॥

पात्राणां करण इति ॥ यथानिर्भेदं पात्राणि कारयेदिति बौधायनः " प्राकृतान्येवैतानि स्युरिति शालीकिः ' ॥

II. 98. 1. सारस्वतीनामभिहोम इति ॥ सूत्रꣳ शालीकेर"न्यो ह स्माह बौधायनो याभ्यामेतदृग्भ्यां वहन्तीरभिजुहुयात्ताभ्यां ग्रहेग्रहे जुहुयादथ तूष्णीꣳ सारस्वतीरभिजुहुयादिति ' ॥

II. 98. 7. अभिषेचनीयानां ग्रहाणां ग्रहण इति ॥ सूत्रमाचार्ययोर"न्यो ह स्माहौपमन्यवः पुरस्तात्सदसो ऽभिषेचनीयान्ग्रहान्गृह्णीयादिति ' ॥

II. 99. 16; 102. 9. धनुषः प्रदान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

---

¹ Thus B G II (pr. m.), °क्षयक्रिये Bo C' II (sec. m.), °कयेण Bu.

II. 100. 9. मारुतस्यैकविंशतिकपालस्य कपालोपधान इति ॥ ऐष्टिकैरुपधाय गणैरुपदध्यादिति बौधायनो ॥ गणैरेवेति शालीकिः । ॥

II. 100. 9 आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस् ॥ तूष्णीकेति शालीकिः । ॥ १८ ॥

II. 101. 2. क्लीबस्य स्थान इति ॥ अन्तर्वेदि तिष्ठेदिति बौधायनो ॥ बहिर्वेदीति शालीकिः । ॥

II. 106. 7. मणीनां करण इति ॥ औदुम्बर औदुम्बरेण लोहेन प्रच्छन्नः स्यादिति बौधायन ॥ औदुम्बर एवेति शालीकिः । ॥

II. 107. 4. तस्मिन्सह संग्रहीत्रा रथवाहने रथमादधातीति ॥ सूत्रं बौधायनस्याधात्वणामेवैकः[1] संग्रहीता स्यादिति शालीकिः । ॥

II. 108. 14. स्फ्यस्य प्रदान इति ॥ सूत्रं शालीकेर् ॥ त्रो ह स्माह बौधायनो यजमानस्यैवैकस्य मन्त्रेण संप्रयच्छेत्तूष्णीमितरे संप्रयच्छेरन्निति[2] । ॥

II. 109. 1. अक्षाणां करण इति ॥ सौवर्णाः स्युरिति बौधायनो ॥ राजता इति शालीकि ॥ र्नागदन्ता[3] इत्यौपमन्यवो ॥ वैभीतका इत्यौपमन्यवीपुत्रः । ॥

ib. अथास्मै पञ्चाक्षानपच्छिद्य प्रयच्छतीति ॥ सूत्रं शाली-

---

१ Thus G; ॰स्यधातृणामे C′, ॰स्याथात्वणामे॰ U, ॰स्य यथातणामे॰ B Be; in Bu this dvandva is missing.

२ ॰यच्छेरंनिति G U C′.

३ Thus G B Bu U; ॰दंत्या Be C′.

केर″नो ह स्माह बौधायनो येनास्यानुपपन्नꣳ स्यात्तं तत्रापिसृजेद्दिग्यो ऽभ्ययꣳ राजाभूदिति′ ॥

111.8. अथ विषुवति दर्भस्तम्बे जुहोतीति ॥ सूत्रं बौधायनस्य″ यत्रैव दर्भस्तम्बः स्यात्तद्गच्छेदिति[१] शालीकिः′

॥ १९ ॥ नवमः ॥

111.14. अग्नीनाꣳ हरण इति ॥ अजस्रान्हरेदिति बौधायनो′ ऽरण्योः समारोह्येति शालीकिः′ ॥

ib. वेद्यै करण इति ॥ सूत्रं बौधायनस्य″ पूर्वापूर्वा वेदिर्भवतीति शालीकिः′ ॥

112.10. अथैनं तीर्थादानीय पवयित्वा पुण्डरिस्रजिनमुदानीयेति ॥ स ह स्माह बौधायन उभयानि पुण्डरिकाणि करयेत्सौवर्णानि च नादेयानि चेति″ नादेयान्येवेति शालीकिः′ ॥

112.13. निदधत्यस्मा एतद्धविरुच्छिष्टं व्रतभाजनमिति ॥ सूत्रं बौधायनस्य″ नात्र हविरुच्छिष्टं व्रतभाजनं निदध्यादिति शालीकिः′ ॥

112.17. सोमक्रयणेषूपैते[२] नित्याः स्युरिति बौधायन″ एत एव स्युरिति शालीकिः′ ॥

---

१ तच instead of तत् Be C′.

२ Thus B G U (pr. m.); °षुपैते Bu; °षूपदिते Be C′ U (sec. m.)

औपसदाꣳ[1] हविषां मन्त्रामन्त्र इति ॥ मन्त्रवन्ति[2] स्युरिति बौधायनस्तूष्णीकानीति[3] शालीकिः ॥

113. 14. आग्नेयस्य प्राजापत्यस्तूपर उपालम्भ्यो भवतीति ॥ सूत्रं बौधायनस्य प्राजापत्य एव सवनीयः स्यादिति शालीकिः ॥

114. 11.[5] भार्गवो होता भवतीति ॥ आदित एव भार्गवꣳ होतारं वृणीतेति बौधायनो दशपेय एव भार्गवो होता स्यादिति शालीकिः ॥

शतं ब्राह्मणाः पिबन्तीति[4] ॥ यजमान[5] एकशततमः स्यादिति बौधायनो यजमान एव शततमः स्यादिति शालीकिः ॥

I. 114. 7. दक्षिणानां दान इति ॥ एता एव ब्राह्मणाभिविहिता[6] दक्षिणा दद्यादिति बौधायन एतन्मुखꣳ सहस्रमिति शालीकिः ॥ २० ॥

I. 115. 1. तेषामुत्थानेष्विति ॥ गच्छेयुरावभृथादिति बौधायनो ऽप्सुषोमान्ता इति शालीकिर्ध्रुवान्ता इत्यौपमन्यवः ॥

I. 115. 8. हविषोहविष इष्ट्वा बार्हस्पत्यमभिघारयतीति ॥ बार्ह-

---

१ Thus G B and the Viv.; उपसदि U, औपसदानां C′, औपसद्यौ Bu; Be defective.

२ ०वंत MSS.

३ Thus G and U (pr. m.); तूष्णीका इति B G (sec. m.), तूष्णीकेति C′, तूष्णीकानिति Bu.

४ cp. T Br. I. 8. 2. 2.

५ Before यजमान G B ins. यो, U ये ।

६ ०भिहिता Be C′.

स्पत्यस्यापोह्या[१] बार्हस्पत्यमभिघारयेदिति बौधायन ॥ इतरेषामेव हविषां न बार्हस्पत्यस्येति शालीकिः । ॥

II. 115. 13. उच्चैरादित्याया आश्रावयत्युपांशु[२] मारुत्या इति ॥ आदित्याश्रावणप्रभृत्युपांश्वथेतरदुच्चैरिति[३] बौधायन ॥ आ मारुत्याश्रावणप्रभृत्युपांश्वथेतरदुच्चैरिति शालीकिः ॥ सर्वैर्वोच्चैरादित्या सर्वोपांशु मारुतीत्यौपमन्यवः । ॥

II. 115. 15. मात्यदूतेष्विति ॥ सूत्रं बौधायनस्येमं[४] ते[४] ऽमौ[५] प्राहैषोदित्येव ब्रूयादिति शालीकिः । ॥

II. 117. 14. द्विरात्र इति ॥ सूत्रं बौधायनस्य ॥ यजनीये[५] ऽहन्पूर्वमहर्भवत्युत्तरस्मिन्नुत्तरमिति शालीकिः । ॥

II. 118. 5. देविकाहविषां करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिर्न कुर्यादिति शालीकिः[६] ।

॥ २१ ॥ दशमः ॥

॥ इति द्वाविंशः प्रश्नः ॥

---

१ Thus G and the Viv.; °स्यापोल्वा B, स्यपिह्वा U. C′ Be corrupt. Bu defective.

२ Thus G, all the other MSS. more or less corrupt.

३ Here and infra all the MSS. इतर instead of इतरदु ।

४ Emended; °स्यमांतेसौ Be C′ U (sec. m.), °स्यमंचेसौ Bu, °स्यमंचेऽङ्के G, °स्यमंचस्थे B; cp. XXIII. 2 and T Br. I. 8. 3. 4: दूतान्प्रहिणोति ।

५ Thus all.

६ In the MSS. no repetition of the final words.

119. 1. अथात इष्टिकल्पं व्याख्यास्यामः ॥

स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः स्युर्वार्त्रघ्नावाज्यभागावुच्चैर्देवता इत्यन्यो ह स्माह शालीकिः सप्तदशसामिधेनीकाः स्युर्वृधन्वन्तावाज्यभागावुपांशुदेवता इति ॥

याजमानस्य करण इति ॥ संसिद्धमिष्टिपथे[1] याजमानं कुर्यादिति बौधायनः कुर्याद्यथावकाशं याजमानमिति शालीकिः ॥

121. 3. अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयेदिति ॥ स ह स्माह बौधायनः पाथिकृतं निरुप्य वैश्वानरं द्वादशकपालमनुनिर्वपेदथातिपन्नां प्रतियजेदित्यन्यो ह स्माह शालीकिः पाथिकृतं निरुप्य वैश्वानरं द्वादशकपालं समानतन्त्रमनुनिर्वपेन्न चातिपन्नां प्रतियजेदित्यन्यतरेणैव सहातिपन्नां प्रतियजेदित्यौपमन्यवो ऽन्यो ह स्माहाश्मौगविर्वि वा एतस्य यज्ञश्छिद्यते यस्य तन्त्रे प्रतते ऽन्यत्तन्त्रं[2] प्रतायते य एवैषो[3] ऽच्युत[3] आग्नेयो ऽष्टाकपालस्तमेव पौर्णमास्यां वामावास्यायां वा पाथिकृतं कुर्यान्न चातिपन्नां प्रतियजेदिति ॥

121. 7. अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहि-

---

१ °सिद्धमिष्टिपथे G, °सिद्धमिष्टियथे B, °सिद्धिमिष्टिपथे U, सिद्धिमिष्टयथे Bu, °सिद्धमिष्टयथे Be C′.

२ न्यतंत्रं MSS.

३ Thus C′, एवैषोच्युत U, एवैषोच्यत B G Be, एवैषाच्यूत Bu.

ताग्निः सम्वत्सरमिव चरेदिति ॥ आधानप्रभृत्येवैतदुक्तं भवतीति बौधायनो ॥ ऽन्वाहितेषु चैवोपसमाहितेषु चाग्निष्विति शालीकिः । ॥

121. 9. अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यꣳ रक्षाꣳसि सचेरन्निति ॥ हुत्वाग्निहोत्रमिष्टिꣳ सꣳस्थापयेदिति बौधायनः ॥ सꣳस्थितायामिष्ट्यामग्निहोत्रं जुहुयादिति शालीकिः । ॥

121. 17. अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्निति ॥ स ह स्माह बौधायनो लोहितोष्णीषा लोहितवाससश्चर्त्विजः प्रचरेयुरिति ॥ याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः । ॥

121. 18. अग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेद्यस्य गावो वा पुरुषा वा प्रमीयेरन्यो वा बिभीयादिति ॥ स ह स्माह बौधायनः प्रोक्षणीषु च गन्धानावपेयुर्गन्धवन्तश्चर्त्विजः प्रचरेयुरिति ॥ याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः । ॥

122. 7. अग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेदिति ॥ स ह स्माह बौधायनो या तत्राम्नाता स्यात्तां चेन्निर्वपतः कामो न समृध्येताथैवं[१] कुर्यादित्येषैव सार्वकामिकी स्यादिति शालीकिः ॥ कामेकाम एषा[२] स्यादित्यौपमन्यवः । ॥

124. 1. अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नि-

---

१ ॰थैवं G U Be; थैनं B C′, ॰थैचं Bu.

२ एषा G, एवैषा U; all the other MSS. एव ;

तद्भूतो ऽङ्क्ते ऽग्निहोत्र उद्वायेदिति ॥ सूत्रꣳ शालीकेर॥न्तो ह स्माह बौधायनो मन्थनमधिमन्थनमुपसमिन्धनमित्येतान्मन्त्रान्निगदेदिति। ॥

I. 124. 17. वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इति ॥ स ह स्माह बौधायन उत्थितायां निर्दशायां वैश्वानरं द्वादशकपालं निर्वपेत्सꣳस्थावस्य च कुमारं प्रलेहयेदिति॥ जातमेव विदित्वेति शालीकिर्न च सꣳस्थावस्य कुमारं प्रलेहयेदित्य॥नन्तरे पर्वणीत्यौपमन्यवः[१]। ॥ १ ॥

II. 125. 2. विपर्यस्तहविषीति ॥ मारुतः[२] प्रथमं मन्त्रकर्म[३] लभेतेति बौधायनो॥ ऽवदानत इति शालीकिः॥ प्रदानत इत्यौपमन्यवश्चा।तुष्प्राश्यादित्यौपमन्यवीपुत्रः। ॥

II. 125. 9. वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वेति ॥ यत्रैव यतिष्यमाणः स्यात्तदायतनं। तद्गत्वा वैश्वानरं द्वादशकपालं निर्वपेदिति बौधायनः॥ स्वेष्वानेष्वेवाग्निष्विति शालीकिः। ॥

II. 126. 3. यया रज्ज्वोत्तमां गामाजेदिति ॥ सूत्रं बौधायनस्ये॥मां ते ऽसौ पाहीषोदित्येव[४] ब्रूयादिति शालीकिः। ॥

---

१ The words after प्रलेहयेदिति only in C′ and U (sec. m.); Be has of them only औपमन्यवो; the other MSS. omit the opinion of Aupamanyava.

२ मारुतं Bu.

३ तंत्रं Be C′ (pr. m.).

४ Thus C′ U (sec. m.); प्रह्णौषो॰ the other MSS.; cp. XXII. 21 and XIII. 10; 126. 5.

127. 10. बल्बजानपीभ्मे संनह्येदिति ॥ सूत्रं बौधायनस्य ॥ बल्बजानामप्यत्र बर्हिः संनद्धं भवतीति शालीकिः ॥

128. 7. आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्निति ॥ सूत्रं बौधायनस्य ॥ प्रत्यभिचरन्तमेव विदित्वेति शालीकिः ॥

ib. सारस्वतमाज्यमिति ॥ मन्त्रनिरुप्तमेतद्धृतं[1] स्यादिति बौधायनस्य ॥ लौकिकमिति शालीकिः । कालेकाल एवैनद्ध्रुवाज्यात्कृत्वीयादित्यौपमन्यवः[2] ॥

128. 17. अध्वरकल्पायामिति ॥ स ह स्माह बौधायन इडान्तं प्रथमं तन्त्रं कुर्यादेवं द्वितीयं तृतीयेन सहावग्रेषं वर्तयेदित्यथो ह स्माह शालीकिरा प्रणीतात्प्रथमस्य[3] तन्त्रस्य परिशाययेदेव[4] द्वितीयमेवं[5] तृतीयं[5] । तृतीयेन सहावग्रेषं वर्तयेदिति ॥ सपूर्णपात्रविष्णुक्रमा[6] इत्यौपमन्यवः[6] ॥

129. 7. यो ब्रह्मवर्चसकामः स्यात्तस्मा एतं सौमारौद्रं चरुं

१ तंचनिवप्त॰ B G; तंचेनिवप्त॰ U. तंचंनिरूपत॰ Bu; तंचभिनवप्त॰ Be, तंचनिवप्त॰ C'.

२ ध्रुवाज्यात्तृष्ट॰ G U (sec. m.); ध्रुवाज्यास्यात्तृष्ट॰ B U (pr. m.); ध्रुवाज्यंस्ट॰ Be C'; ध्रवास्ट॰ Bu.

३ Thus Be C' U; प्रणीताप्र॰ B G (pr. m.). प्रणीताः प्र॰ G (sec. m.); Bu defective.

४ Thus G B; कुर्यादेवं U Be C'; Bu defective.

५ एवं तृतीयं om. B G.

६ ॰क्रमादित्यौ॰ C' U (sec. m.).

तिष्यापूर्णमासे निर्वपेदिति ॥ उपवसथीये ऽहन्निर्वपेदिति बौधायनो ॥ यजनीये ऽहन्निति शालीकिः । ॥

129. 11. आज्यं प्रोक्षणमाज्येन मार्जयन्त इति ॥ उदकुम्भ आज्यस्रुवं प्रत्यस्येदिति बौधायनः । प्रोक्षणं चैव मार्जनं चाज्येन[1] कुर्यादथेतरदद्भिः कुर्यादिति शालीकि॥र्यत्किं चाद्भिः कार्यꣳ स्यात्सर्वं तदाज्येन कुर्यादित्यौपमन्यवः । ॥

ib. 16. यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेदिति ॥ विज्ञातेषु रूपेषु निर्वपेदिति बौधायनः ॥ पुरस्तादेव शङ्कमान इति शालीकिः । ॥

130. 7. अर्धेष्विति ॥ सꣳस्थितायामिष्ट्यामर्धानभ्यादध्यादिति बौधायनो ॥ ऽत्रैव परिध्योरन्निति शालीकिः । ॥ २ ॥ **प्रथमः** ॥

130. 15. विपर्यस्तहविषीति ॥ मारुतः प्रथमं मन्त्रकर्म लभेतेति बौधायनो ॥ ऽवदानत इति शालीकिः ॥ प्रदानत इत्यौपमन्यवश्चातुष्प्राश्यादित्यौपमन्यवीपुत्रः । ॥

130. 17. मारुतीभ्याꣳ होता यजतीति ॥ स ह स्माह बौधायन आदित एव होता मरुत आवाहयेदनुवाचनतो ऽध्वर्युरिति ॥ याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः । ॥

131. 19. आदित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूतिकाम इति ॥ सूत्रꣳ शालीके॥र्वो ह स्माह बौधायनः सर्वाः सपदाः सर्वाः सप्रविचाः सर्वाः सप्रमयूखेष्या इति ॥

132. 2. पदपाꣳसूनाꣳ हरण इति ॥ सूत्रꣳ शालीके॥र्वो ह

[1] संयात्येव B Be.

स्माह बौधायनः समस्तेनैवास्य[1] मन्त्रेण पद्पांसूंस्हृत्वोत्तर-वर्ग्यं[2] आवपेदथ तूष्णीमुरस्यनुनिनयेदिति । ॥

33. 16. शतं सुवर्णानि कृष्णलानि भवन्तीति ॥ सूत्रं बौधायनस्यौपशतान्येवैतानि[3] स्युरिति शालीकिः परिहारयेच्चैषामिति[4] । ॥

134. 3. चत्वारिचत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्या इति ॥ स ह स्माह बौधायनो यान्यवत्तानि स्युर्जुहुयादेव तान्यथ यानि भक्षार्थानि स्युस्तद्यवगृहीतान्येव[5] तानि स्युरथेतराणि समावत्को विभजेरन्निति ॥ नो ह स्माह शालीकिर्यान्यवत्तानि स्युर्जुहुयादेव तान्यथ यानि भक्षार्थानि स्युस्तद्यवगृहीतान्येव[5] तानि स्युरथेतराणि प्राशित्रहरण ओप्य ब्रह्मणे परिहारयेदिति । ॥

37. 21. यः पापयक्ष्मगृहीतः स्यात्तस्मा एतमादित्यं चरुममावास्यायां निर्वपेदिति ॥ उपवसथीये ऽहन्निर्वपेदिति[6] बौधायनो ॥ यजनीये ऽहन्निति[6] शालीकिः । ॥

---

१ ०स्य Be C′ U (sec. m.), ०स्मै Bu U (pr. m.), ०स्मिन् G B.

२ Thus (and cp. vol. II, 104. 2) G, ०वर्गं the other MSS.

३ बौधायनस्यौपशता० G U, ०नस्य औपश० B, ०धायनस्येत्यायशान्य० Be, ०धायन्येत्यायसन्येवैतानि C′; but cp. the Viv.: उपशतेन तानि भवन्तीति । शतसमीपे ऊनानि वाधिकानि वेति ।

४ Thus the Viv. (ब्रह्मणे to be understood), प्रतिहार० the MSS.

५ Thus G; स्युस्तव० the other MSS.

६ Instead of ऽहन् (thus B G Bu) the other MSS. ऽहनि ।

I. 140. 9. सांग्रहण्यै परिधिष्विति ॥ ऐष्टिकैः परिधाय पौरोडाशिकैः परिदध्यादिति बौधायन ॥ ऐष्टिकैरेवेति शालीकिः । ॥

I. 140. 11. आकूतीनाꣳ होम इति ॥ सूत्रꣳ शालीकेर॥न्यो ह स्माह बौधायन औदुम्बरैः पात्रैरेता आकूतीर्जुहुयाद्धुत्वा चैतानि पात्राण्यग्नैवानुप्रहरेदिति । ॥

I. 141. 1. आज्यस्यावेक्षण इति ॥ सूत्रं बौधायनस्य ॥ यन्नवमैत्तन्नवनीतमभवदित्येतैरेवाज्यमवेक्षितमुत्पुनुयादिति[1] शालीकिः । ॥ ३ ॥

I. 142. 12. यावतो ऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाꣳश्चतुष्कपालान्निर्वपेदेकातिरिक्तानिति ॥ स ह स्माह बौधायनो वैश्वानरेणैकं[2] प्रतिगृह्णीयादेवं[3] द्वौ[4] । गणं[4] तु प्रतिगृह्य कुर्वीत[5] बहुषु[6] वारुणानेकातिरिक्तानित्य॥न्यो ह स्माह शालीकिर्वैश्वानरेणैकं प्रतिगृह्णीयान्न तु द्वौ[7] । गणं[7] तु प्रतिगृह्य कुर्वीत न[8] तु द्वयोर्बहुषु वा वारुणानेकातिरिक्तानिति । ॥

---

१ पुनुयाद् again all.

२ About the correct reading and the meaning of this dvaidha I am uncertain; °णैकं B U Bu, °णैवैकं Be G, °णैकः C′.

३ एवं C′ U, एव the other MSS.

४ द्वौ गणे Be B G, द्वौगुणं C′, द्वागणे B, द्वौर्गुणं U (sec. m.).

५ MSS. exc. Be C′ ins. तु, U (sec. m.) नतु ।

६ वा ins. Bu.

७ U again द्वौर्गुणं; गणं the other MSS., गुणं C′.

८ न given by Be C′ U (sec. m.), not by B Bu G U (pr. m.).

143. 2. आभिचारे मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्य || अनौकेति शालीकिः | ॥

43. 15. पुनः समूहति समूह्यावद्यतीति ॥ सूत्रं बौधायनस्य || एतैरेव मन्त्रैः प्रतिसमूह्यावद्येदिति शालीकिः | ॥

144. 7. त्रयस्त्रिंशत्कपालं पुरोडाशं निर्वपतीति ॥ सूत्रं बौधायनस्य || संदिग्धपुरोडाश एवैष स्यादिति शालीकिः | ॥

146. 3. (7. 17). वर्षाह्वस्तम्बस्याभिहोम इति ॥ सूत्रं बौधायनस्य || यत्रैव वर्षाह्वस्तम्बः स्यात्तद्गच्छेदिति शालीकिः | ॥

148. 4. कृष्णाजिनस्यावधवन[1] इति ॥ अन्तर्वेदि तिष्ठन्कृष्णाजिनमवधुनुयादिति बौधायनो || बहिर्वेदीति शालीकिः | ॥

148. 6. अङ्गःसवकारीयं करण इति ॥ कुर्यादिति बौधायनो || न कुर्यादिति शालीकिः | ॥

51. 1. संसर्गे[2] प्रायश्चित्तकरण इति ॥ सूत्रमाचार्ययोर् || नो ह स्माहौपमन्यवो यो नु खल्वाहवनीयो ऽत एवैष उद्धृतो भवति | शामयोनिरन्वाहार्यपचनस्तं | तत्र[3] नास्ति प्रायश्चित्तं | प्रशस्तो हि वृथाग्निसंसर्ग इति | ॥

इतीक्वा[4] इमा इष्टयो व्याख्याताः ॥ ४ ॥ द्वितीयः ॥

---

१ Thus G, °स्यावयवन U, °स्यावधान Bu Be C', °स्यायवन B, °स्यायवन the Viv.

२ संवर्गे B Bu G.

३ तत्रवा Be C'.

४ इतीष्वा B C' Be.

154. 5. अभिक्रामं जुहोतीति ॥ कियति नु खल्वेतदुक्तं भवतीति ॥ पञ्च प्रयाजा इति बौधायनो ॥ यत्प्राक् शाखाया इति शालीकिः । ॥

155. 16. यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवद्येदिति ॥ स ह स्माह बौधायनो यदि पशोरवदानं नश्येद्यद्येकं यदि द्वे आज्यस्य[१] प्रत्याख्यायमिष्ट्वा तत्कृत्वा[२] पुनर्यजेतेत्य॥थो ह स्माह शालीकिर्यदि पशोरवदानं नश्येद्यद्येकं यदि द्वे आज्यस्य[१] प्रत्याख्यायमिष्ट्वा तत्कृत्वा[३] कृतमेव मन्येताथ यदि भूयो ऽथैवं कुर्यादिति । ॥

157. 2. सꣳसव इति ॥ यत्र क्व च नाव्या[४] वा[४] नदी[४] स्यादन्तरेणोदयत्स्रवती[५] वासꣳसवस्तत्रेति बौधायनो ॥ यत्र क्वचन शब्दा न सꣳसृज्येरन्नसꣳसवस्तत्रेति शालीकि॥र्यत्र क्वचनान्तरेणेयादसꣳसवस्तत्रेत्यौपमन्यवः[६] ॥ प्रस्थयोरेव जनपदयोरसꣳ-

---

१ Some of the MSS. आज्यस्यैव ।

२ न ins. B.

३ After कृत्वा G B ins. न पुनर्यजेत (or ॰तेति), but cp. infra XXIII. 8.

४ Thus G B (नावा नार्या the Viv.) ; नाव्यावा नदीव Bu U (pr. m.) ; नाव्यवायानदी U (sec. m.) : नाव्यवाथां नदी C′ ; नाव्याषाया नदी Be.

५ Thus G and B (the latter only ॰ति) ; ॰रेणोदपच्चमावति Bu U ; ॰रेणोदःत्यती Be C′ (pr. m.), ॰रेणोदापच्चती C′ (sec. m.). The Vivaraṇa : उदकयच्छस्रो (?) भावः यस्मो प्रावः । उदकप्रावती ।

६ Thus B G Bu U (pr. m.) ; क्वचनोदकमंतरेणयाद॰ U (sec. m.) ; क्वचनोदकमंतबेयाद॰ C′, ॰नोदकमंतबेयाद॰ Be ; but in the Vivaraṇa there is no mention made of water ; परस्परमकटाद्यन्तरा गच्छेदिति ।

मन्त्रस्त्वेत्यौपमन्यवीपुत्रो ॥ नाविद्विषाणयोः सꣳसवो विद्यत इति छागलेयब्राह्मणं[1] भवतीत्याञ्जीगविः । ॥

157. 3. अभिभूतीनाꣳ होम इति ॥ आध्वरा हुत्वा सात्त्रायणिका[2] जुहुयादिति बौधायनः ॥ सात्त्रायणिका[2] एवेति शालीकिः । ॥

162. 18. दीर्णप्रवृक्तेष्विति ॥ सूत्रꣳ शालीकेर॥त्रो ह स्माह बौधायनो याभ्यामेतद्दृग्भ्यां[3] पूतभृदाधवनीययोर्जुहुयात्ताभ्यां[4] ग्रहे-ग्रहे जुहुयादथ तूष्णीꣳ सꣳस्रावमवनयेदिति । ॥

167. 6. नित्ये ग्रहणे वैष्णवीमृचमनुवर्तयतीति ॥ सूत्रं बौधायनस्य ॥ पृषदाज्य एवैषानुवर्तयितव्या भवतीति शालीकिः । ॥

169. 5. स उक्थमुक्थं वैव प्रतिगीर्योक्थशा इत्याह सवनꣳसवनं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

171. 8 (172. 14). पृष्ठ्यग्रहाणां ग्रहण इति ॥ सूत्रꣳ शालीकेर॥त्रो ह स्माह बौधायनो यत्र क्वचैतान्यहानि संगच्छेयुर्गृह्णीयादेव तत्र पृष्ठ्यग्रहानिति ॥ संवत्सर एवैते दृष्टा भवन्ति । संवत्सर एवैनान्गृह्णीयादित्यौपमन्यवः[5] । ॥

---

१ Thus B G Be C′, ॰लयंब्रा॰ Bu, ॰लेयाब्रा॰ U (pr. m.), ॰लब्रा॰ U (sec. m.), ॰लेयिब्रा॰ the Vivaraṇa.

२ साचा॰ the MSS.

३ Thus (and cp. infra p. 157, 8) G Bu U (pr. m.), ॰भ्यामेवब्र॰ Be U (sec. m.), ॰भ्यामेवमह॰ B, यत्रामेवब्र॰ C′.

४ पूतभृताधवनीयेजु॰ U (sec. m.), पूतभृदाधवनीयेजु॰ G B U (pr. m.)

५ एवैनंगृ॰ all.

I. 171. 16. पृष्ठ्यग्रहाणां भक्षण इति ॥ स ह स्माह बौधायनो ऽनुसवनभक्षेण[१] चैवैनान्भक्षयेन्नित्येन चेति ॥ नित्येनैवेति शालीकिः । ॥

II. 173. 7. अंशूनां प्रवृंहण[२] इति ॥ एकैकशः प्रवृहेदिति[३] बौधायनः ॥ सर्वान्सहेति शालीकिः । ॥ ५ ॥

I. 173. 12. आधवन[४] इति ॥ व्यतिचारमाधुनुयादिति बौधायनो ॥ यथाधवित्तमिति शालीकि॥र्भक्षयेदित्यौपमन्यवः । ॥

II. 174. 9. अंशोर्होम इति ॥ सूत्रं शालीकेर॥त्रो ह स्माह बौधायनो याभ्यामेतदृग्भ्यामुपस्पृशेत्ताभ्यामेनं जुहुयादथ तूष्णीमुपस्पृशेदिति । ॥

II. 175. 1. पृश्निग्रहाणां ग्रहण इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 176. 13. तेन कक्षमुपोषतीति ॥ सूत्रं बौधायनस्यापूपेनैवाप्यत्र कक्षमुपोषेदिति शालीकिः । ॥

I. 176. 16. ऋषभो गोषु जीर्यतीति ॥ सूत्रं शालीकेर॥त्रो ह स्माह बौधायनो यमप्यन्यं बहिस्तन्त्रात्पशुमालभेत तत्राप्येतानि कुर्यादुपाकरणीययोर्वपायां देवतास्विति । ॥

---

१ नुसवनंभक्षेण B G U (pr. m.); नुसवनभक्षण Bu, नुसवनभक्षणेनैवैना॰ U (sec. m.) C′; Be corrupt.

२ Thus (cp. XIV. 12: 173. 7) B Bu G and the Viv., प्रवंहण Be, प्रवहण U C′.

३ प्रवहे॰ or प्रवहये॰ the MSS. exc. G.

४ अथायवन Bu.

II. 178. 9. अष्टापद्यै गर्भस्य वसाहोम इति ॥ सूत्रं बौधायनस्य ॥ न गर्भस्य वसाहोमं जुहुयादिति शालीकिर्न च गर्भस्य वसाहोमं जुहुयान्नेडां न स्विष्टकृतमित्यौपमन्यवः । ॥ ६ ॥ तृतीयः ॥

II. 179. 9. अजवशाया उपाकरण इति ॥ सूत्रं बौधायनस्य ॥ वायव्ययैवैनामुपाकुर्यादिति शालीकिरन्नो ह स्माह ज्यायान्कात्यायनो यथाप्युपाकरण उपाकरणं नुदत एवमेवाप्युत्तरे मन्त्रा नुद्येरन्निति । ॥

II. 180. 5. यदालब्धायामभ्रो भवतीति ॥ स ह स्माह बौधायनो यद्यहान्तश्रिता[१] अकृष्णा मेघाः स्युः सꣳस्थापयेदेवाथ चेत्कृष्णाः स्युरथैवं कुर्यादित्यन्नो ह स्माह शालीकिर्यद्यह नादित्यमन्तर्दध्युः[२] सꣳस्थापयेदेवाथ चेदेनमन्तर्दध्युरथैवं[३] कुर्यादिति ॥ नालब्धायामसꣳस्थापनं[४] विद्यत इति गौतमः । ॥

I. 180. 17. जयेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥ ॥

II. 181. 15, 16. अभ्यातानेष्विति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्यान्नो ह स्माहौपमन्यवो ऽभ्यातानाञ्जयान्राष्ट्रभृत इति स्रुवाहुतीरेवैता जुहुयाद्गृह्ण्येयुश्च दर्शपूर्णमासावभ्यातानाञ्जयान्राष्ट्रभृत इति । ॥

---

१ ? यद्यहान्मासिता Be C′, यद्यहांतश्रिता B G U, यदिहांतश्चित्ता Bu.

२ Thus U, यद्यहनादित्य B G Be C′, यद्यहवादित्य॰ Bu.

३ Thus Be C′ U (sec. m.); एनम् om. B Bu G U (pr. m.), ॰थैवंनकुर्य॰ C′.

४ नलब्धा॰ G U.— ॰थांसंस्थापनं Bu, but the Viv. has असमापनम् ।

I. 182. 2. ग्म्यापरिधिष्विति[१] ॥ ग्म्यैव ग्म्यापरिधीन्कुर्यादिति[२] बौधायनः ॥ प्राकृता एवैताः[३] स्युरिति शालीकिः । ॥

I. 182. 7. द्विःस्वाहाकारꣳ राष्ट्रभृतो जुहोतीति ॥ विग्राहं जुहुयादिति बौधायन ॥ द्वे द्वे स्वाहाकृती इति शालीकिः । ॥

II. 182. 11 sqq. अधिदेवने जुहोति रथमुखे जुहोति रथनाभ्यां[४] जुहोतीति ॥ सूत्रं बौधायनस्य ॥ तदग्नीन्येवैतानि[५] स्युरिति शालीकिः । ॥

183. 15. नैयग्रोध औदुम्बर आश्वत्थः प्लाक्ष इतीध्मो भवतीति ॥ सूत्रं बौधायनस्य ॥ पृथगेवैतानीध्मान्यभ्यस्य पृथगभ्यादध्यादिति शालीकिः । ॥

I. 184. 2. १० यद्वाचः क्रूरं तेन वषट्करोतीति ॥ सूत्रꣳ शालीकेर् ॥ चो ह स्माह बौधायन उदश्वित्क्षारमिश्रमर्कपर्णेन[६] सह[७] जुहुयात् । जुहोति वा कडिति वा वषट्कुर्यादिति । ॥

---

१ Thus Bu C′ and the Viv.; ग्म्याः प॰ the other MSS.

२ Conjecturally (Viv.: ग्मौष्ट्रस्य ग्म्याकाराः); ग्म्यायै ग्म्यान्परि॰ B G U, ग्म्ययैव ग्म्यान्परि॰ Bu; ग्म्यायै परि॰ Be C′.

३ एवैता all.

४ नाभ्यां Bu U C′.

५ Thus C′ U (sec. m.); ॰तदग्नित्येव Be; ॰तदन्येवै॰ B Bu G U (pr. m.). The Viv.: एव (r. एत) दग्नौन्वे (r. न्ये) व । एतेष्वेव होमाः । नास्त्यग्निस्तवतचेति ।

६ Emended; उदश्वित्त्वा॰ Be, उदश्विदतत्वा॰ C′, दुदश्वतत्वा॰ B G, दश्वितत्वा॰ Bu, उत्श्विदत्त्वा॰ U.

७ om. Be C′.

II. 187. 8. प्रसव इति ॥ स ह स्माह बौधायन उभयेन प्रसौयादासिष्ठीयाभिश्च सावित्रेण चेति ॥ सावित्रेणैवेति शालीकिः । ॥ ७ ॥

II. 187. 16 sqq. अतिक्रामेष्विति[1] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 188. 10 sqq. अतीमोक्षेष्विति[2] ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II. 191. 2. प्राणग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ संवत्सर एवैते दृष्टा भवन्ति । संवत्सर एवैनान्गृह्णीयादिति शालीकिः । ॥

II. 192. 10. तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यान्नं नाद्यादिति ॥ सूत्रꣳ शालीकेर्॥न्नो ह स्माह बौधायनः प्राक् चेद्विजिज्ञासायै[3] निषीदेदथैवं कुर्यादिति । ॥

II. 195. 3. यस्याहवनीये ऽनुद्वाते गार्हपत्य उद्वायेदिति ॥ सूत्रꣳ शालीकेर्॥न्नो ह स्माह बौधायनः समस्तमेतमग्निꣳ सते समुप्य दक्षिणेन विहारं पर्याहृत्य गार्हपत्यस्यायतनाद्भस्मोद्वाप्य शकृत्पिण्डेन परिलिप्य न्युप्योपसमाधाय ज्वलन्तमाहवनीयमुद्धृत्याहवनीयस्यायतनाद्भस्मोद्वाप्य शकृत्पिण्डेन परिलिप्य न्युप्योपसमाधाय समिद्वत्याहवनीये षट् स्रुवाहुतीर्जुहुयादुद्बुध्यस्वाग्ने

---

१ Thus G (sec. m.) and the Viv.; ॰क्रामे॰ the other MSS. Vol. II. 187. 15 is to be corrected ऽतिक्रामाणा॰ ।

२ ॰अतौ॰ Be C′ and the Viv., ॰अति॰ the other MSS.

३ Thus B G and the Viv., प्राक्चेत्जज्ञासायै Bu, प्राक्चेद्विज्ञासायै C′, प्राक्चजिज्ञासयै U.

त्वमग्ने सप्रथा असि मनो ज्योतिर्जुषतां तन्तुं तन्वन्नुदु त्वं चित्रमिति ' ॥

II. 196. 2 sqq. अतिरिक्तसोमेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 198. 1.५ ध्रुवे परिहीणे प्रायश्चित्तकरण इति ॥ स ह स्माह बौधायनः प्राक् चेदवभृथाच्छन्दोगबर्हिचेषु लभेरन्नभ्यावर्त्तयेयु स्तुतशस्त्राणि स्युस्तत्कृत्वा पुनर्यजेतेत्य'' त्रो ह स्माह शालीकिः प्राक् चेदवभृथाच्छन्दोगबर्हिचेषु लभेरन्नभ्यावर्तयेयु स्तुतशस्त्राणि स्युस्तत्कृत्वा कृतमेव मन्येतेति ' ॥

II. 199. 6.१० अर्क्षां ग्रहण इति ॥ सूत्रं बौधायनस्य '' यदेवानन्तरमहः स्यात्तस्मिन्मैत्रावरुणाग्राण्यहाण्गृह्णीरन्निति शालीकिः ' ॥

II. 200. 3. यूपे विरूढे प्रायश्चित्तकरण इति ॥ सूत्रं बौधायनस्या'-न्तस्तन्त्रमेव यूपे विरूढे प्रायश्चित्तं कुर्यादिति शालीकिः ' ॥

II. 201. 11. यस्य सोम उपदस्येत्सुवर्णं हिरण्यं द्वेधा विच्छिद्यर्जीषेऽन्यदाधुनुयाज्जुहुयादन्यदिति ॥ सूत्रं बौधायनस्य '' सहिरण्या एवास्यात ऊर्ध्वं भुख्याश्चमसा ह्रयेरन्नभ्युन्नीयेरन्निति[1] शालीकिः ' ॥

II. 201. 19. आदारसोमेष्विति ॥ सूत्रं बौधायनस्यादारसोमेनैवाप्यन्यमागमयेरन्निति[2] शालीकिः ' ॥

---

१ Corrected; भ्युन्निरन्निति B G Bu U (pr. m.), ॰भ्युपनीरंनिति or ॰रन्निति Be C′ U (sec. m.).

२ Thus B G; ॰नवाप्यन्यमाग॰ Bu, नैवान्योन्यमाग॰ Be C′ U (sec. m.).

II. 203. 4. आशिःष्विति ॥[1] आशिषो ऽनुवर्तेरन्निति बौधायन ॥ एता[2] एवाशिषः स्युरिति शालीकिः । ॥ ८ ॥ चतुर्थः ॥

II. 245. 1 sqq. अथातो द्वादशाहं व्याख्यास्यामः ॥

II. 247. 4. चिन्वीत द्वादशाहे ऽग्निमिति बौधायनो । न चिन्वीतेति शालीकिः । ॥

अतिग्राह्य[3] इति ॥ स ह स्माह बौधायनो गृहपतिरेवारण्योः[4] समारोपयेदेतदतिग्राह्यस्य रूपं भवतीत्य॥न्यो ह स्माह शालीकिः पृथगेवारणीषु समारोपयेरन्गृहपतेरेव प्रथमस्य मथित्वा ज्वलत्सु ज्वलतो ऽपि[5] विसृजेरन्नित्येतदतिग्राह्यस्य[5] रूपं भवतीति । ॥

II. 245. 7. संनिवाप[6] इति ॥ स ह स्माह बौधायनः संनिवप्स्यन्तो ऽग्नये ब्रह्मण्वते पुरोडाशमष्टाकपालं निर्वपेयुरग्नये क्षत्रवते ऽग्नये क्षत्रभृत इत्य॥न्यो ह स्माह शालीकिरग्निसंयोजनो[7] खल्वेषेष्टिर्भ-

---

१ Before आशिषो U has (rightly?) आशीष्वेव (r? आशिःष्वेव,) C' reads; आशीष्वेवाशीष्वित्याशिषो।

२ Thus B U C', the Viv.; एत the other MSS.

३ Thus U (sec. m.) and C' originally; अतिग्राह the other MSS.

४ Thus G B, गृहपतेरेवा° Bu Be C', गृहपतिना° U.

५ Thus B Bu G, °तोनिसृ° Be, ज्वलत्सुज्वलतोपिनिसृ° U (sec. m.).

६ Thus B G and cp. XXVI. 12; संनिवापन U (sec. m.) C' Be, संनिधाप Bu.

७ Thus B Be; °यजना Bu G U C'.

वति । यत्रैवाग्निं चेष्यमाणः स्यात्तत्रैनां निर्वपेदिति ॥ प्राजापत्यं[1] पशुपुरोडाशमनुवर्तयेतेत्यौपमन्यवः[2] । ॥

245. 11. पवन इति ॥ एकैकश एवैनान्यवयित्वैकैकश उदानयेयुरिति बौधायनः ॥ सकृदेवैनान्यवयित्वैकैकश उदानयेयुरिति शालीकिः ॥ सकृदेवैनान्यवयित्वा सर्वान्सहोदानयेयुरित्यौपमन्यवः । ।

. 246. 6. आर्षेयवरण इति ॥ स ह स्माह बौधायनो ये केचन समानगोत्रा अव्यवेता अन्यथागोत्राः[3] स्युरेकस्यार्षेयस्य[4] वरण[4] एव तेषां वरणं स्यादित्यथो ह स्माह शालीकिर्यदि चैव व्यवेता यदि[5] चाव्यवेताः[5] समानगोत्रा एकस्यार्षेयवरण[6] एव तेषां वरणं स्यादिति । ॥

246 13. व्रतधुक्ष्विति ॥ समातच्च समावच्छो विभजेरन्निति बौधायनः ॥ पृथगेवैषां[7] व्रतदुघः स्युरिति शालीकिः । ॥

---

१ प्राजापत्यस्य the MSS.

२ Thus U (sec. m.), ॰नुवर्तवेत्यौ॰ B G U Be, ॰नुनिर्वेवेत्यौ॰ C′, ॰नुवर्तेतप्यौ॰ Bu.

३ ? अन्यथाह्वोत्रा Be, अन्यथोह्वोत्रा C′, अन्यथाह्वोरात्रा Bu, अन्यथा अह्वोरात्रा U, अन्येय अगोत्रा G B; अन्वायागोत्राः the Viv. (one copy), अन्यथासगोत्राः (another copy).

४ स्युरेक आर्षेयसंवरण C′, स्युरेक आर्षेयताः समानगोत्रा एकार्षेयं वरण Be.

५ Only in C′ B and U (sec. m.).

६ ॰र्षेयंवरण or वरण U Be C′. On the whole difficult passage cp. Āp. XXI. 3. 4.

७ एव om. G and the Viv.

II. 247. 1. षष्ठ्यामुपसद्युत्तरवेदिꣳ संनिवपन्तीति सूत्रमाचार्ययोरपि[१] वैकादश्यामिति विधिः[२] ॥

II. 247. 7. वसतीवरीणामभिग्रहण[३] इति ॥ सूत्रꣳ शालीकेर्नो ह स्माह बौधायनो यदि सातिशेषः कलशः स्यात्तूष्णीमवनयेद्यद्यु वै सर्वश एव लेपः समवनीतः स्यादथैवं[४] कुर्यादिति शालीकिः ॥

II. 247. 12. सो ऽत्र[५] वैव[५] यज्ञस्य पुनरालम्भं जपति यज्ञायज्ञीयस्य वा स्तोत्रे शंयुवाके वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकिः ॥

II. 248. 1. विवर्तयन्ति परिधीननुप्रहरति[६] प्रस्तरमिति ॥ सूत्रं बौधायनस्यानुप्रहरेदेवात्र प्रस्तरपरिधीनिति शालीकिः ॥ ९ ॥

II. 248. 5. निमील्याध्वर्युरुपाꣳशु[७] जुहोतीति । सूत्रं बौधायनस्यानन्वीक्षमाण एव जुहुयादिति शालीकिः ॥

---

१ Before अपि Be ins. यथोहस्माहौपमन्यवो, C' यथो॰ वो, U यथोहस्माह बोधायनो । cp. XXVI. 12.

२ Thus B G; ॰मिति वाधिः Bu; मिति नाभिः U, ॰मिवक्षं Be C'.

३ Thus the Viv. and cp. XXVI. 12; ॰मदिग्रहण Be C', ॰मितिग्रहण the other MSS.

४ Thus Be G, ॰दथैव C', ॰दथवैवं Bu B U.

५ Thus B U G Bu the Viv. (one copy); वैव Be C' the Viv. (another copy).

६ ॰हरति Be G Bu U; ॰हरंति Be C'.

७ Read ॰पाꣳशुं?

I. 248. sqq. शिल्पैरुपाकरण इति ॥ स ह स्माह बौधायन उभयेनोपाकुर्याद्बर्हिर्भ्यां च शिल्पैश्चेति ॥ शिल्पैरेवेति शालीकिः । ॥

I. 248. 15. न्यूङ्खन इति ॥ विराजां[1] वा प्रतिपत्सु न्यूङ्खयति[2] शस्त्रे[3] वेति[3] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 249. 4. निर्मन्थ्यस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस् ॥ तूष्णीक इति शालीकिः । ॥

दाक्षिणानां होम इति ॥ स ह स्माह बौधायनो जुहुयादेवाहुतीर्जपेत्प्रत्ययमन्त्रानित्य॥न्यो ह स्माह शालीकिर्जुहुयादेवाहुतीर्न तु[4] प्रत्ययमन्त्राञ्जपेदिति ॥ ये केच दक्षिणायुक्ता मन्त्राः स्युर्नैवैनानाद्रियेतेत्यौपमन्यवः । ॥ १० ॥

पञ्चमः ॥

I. 252. 6. अविवाक्य इति ॥ अविवाक्यमेतदहर्भवतीति बौधायनो ॥ विब्रूयादेवेति[5] शालीकिः । ॥

I. 252. 11. ऋचामुद्धरण इति ॥ सूत्रं बौधायनस्य ॥ यथाप्रकृतिमेवाध्वर्युः कुर्याच्छन्दोगवदृचा एव प्रतिकुर्वीरन्निति[6] शालीकिः । ॥

---

१ विराजां G C′, विराजा Be Bu, विरजां U, विबजां B.

२ ०यंति all exc. C′.

३ शस्त्रेर्वेति all.

४ Found in Be C′ U G (sec. m.), the other MSS. om.

५ Thus corrected; निब्रू० B G, तिब्रू० Bu, नुब्रू० Be C′ U (sec. m.), निर्ब्रू० U (pr. m.).

६ प्रतिषिकु० B G U (pr. m.).

. 255. 13. सर्पण इति ॥ कृष्णाजिनान्तैः सर्पन्त उत्तरꣳ हविर्धान-मुपस्पृशेयुरिति बौधायनो । नोपस्पृशेयुरिति शालीकिः । ॥

. 257. sqq. आग्रयणाग्रेष्विति ॥ वाचंयमो ऽध्वर्युः पूर्वान्ग्रहस्थान् गृह्णीयादिति[१] बौधायनो ॥ विसृष्टवागिति शालीकिः । ॥

स[२] शुक्रं गृहीत्वा धारयति यावदितरौ ग्रहौ गृह्णातीति ॥ सूत्रं बौधायनस्य ॥ यंयं गृह्णीयात्तंतं परिमृज्य सादयेदिति शालीकिः । ॥ . 265. 5

ग्रहाधानेष्वनुसंव्रज्याया[३] इति ॥ अनुसंव्रजेदिति बौधा- . 266. 9
यनो ॥ नानुसंव्रजेदिति शालीकिः । ॥

I. 258. 1. पशुकल्पेष्विति ॥ सर्वं कृत्वा बौधायनस्यै॥न्द्राग्नपशून्येवा-हीनरात्रिसत्त्राणि भवन्तीति शालीकिः । ॥

I. 261. 2. तेषां यानि समहाव्रतानि तानि साग्निचित्यान्यथेत-राण्यौत्तरवेदिकानि स्युरिति बौधायन ॥ ऐकाहिकस्त्वेवाग्नि-रिति शालीकिः । ॥

I. 262. 12. आत्त्रीयेष्विति[४] ॥ अभिजिद्विषुवान्विश्वजिद्ग्रममहर्महा-

---

१ ग्रहस्थानान्गृ॰ B.

२ स given only by U (sec. m.) C′ and the Viv.

३ Thus B G (sec. m.) C′ (sec. m.) U; जायोजनाधानेष्व॰ Be, ग्रहस्थानेष्व॰ Bu; the Viv.: ग्रहा आधीयन्ते एष्विति ।

४ Thus (heteroclitic locative? from आत्त्रीयत्) Be C′ U (cp. Āp. XXIII. 9. 6 आत्त्र्यग्नि); आह्रीयेष्विति B G the Viv.; आज्रीये-ष्विति Bu.

व्रतमित्येतान्याचीयन्ति[1] भवन्तीति बौधायनो " यान्यन्यानि पृष्ठ्याभिप्लवेभ्य इति शालीकि"र्यानि चान्यानि पृष्ठ्याभिप्लवेभ्यो दशमाच्चाह्न इत्यौपमन्यवः " प्रायणीयारम्भणीयावभिजिद्विषुवान्विश्वजिद्दशममहर्महाव्रतमुदयनीयो ऽतिरात्र इत्येतान्यष्टावाचीयन्ति[2] भवन्तीति गौतमः ' ॥

5. पशुकल्पेष्विति ॥ सर्वे कल्पा बौधायनस्यै"कादशिनपशून्येव सांवत्सरिकाणि सत्त्राणि भवन्तीति शालीकिः ' ॥

9. वाणः शततन्तुर्भवतीति ॥ सूत्रं बौधायनस्य " वीणैवैषा[3] तन्त्रीभिः[4] शततमा[5] स्यादिति शालीकिः ' ॥

अहर्गणे माहाव्रतिकानाꣳ[6] शिल्पानां करण इति ॥ कुर्यादिति बौधायनो " न कुर्यादिति शालीकिः ' ॥

अहर्गणे शिखानामनुप्रवपन इति ॥ अनुप्रवपेरन्निति बौधायनो " नानुप्रवपेरन्निति शालीकिः ' ॥ ११ ॥ षष्ठः ॥

---

१ ०तान्यचीयंती Bu, ०तान्याचीयानि B G; the other MSS. wholly corrupt; cp. XXVI. 17.

२ ०ष्टावच्चियंति U, ०ष्टावचीया Be, ०ष्टावचीय C′, ०ष्टावचीयानि B G, ०ष्टावाच्चियेती Bu.

३ वाणेवैषा C′, वीणेवैषां Be, U (sec. m.), वीणेवैषां G, वीणेवेषां Bu B, वीणेवेषा U (pr. m.).

४ Thus G U C′; तंचाभिः Bu, चीभिः Be, तंचे भिः B.

५ Uncertain; शततमा B Bu G U (pr. m.) C′ (sec. m.); शततंतु Be U (sec. m.), शततंतुर C′ (pr. m.).

६ Thus B G Be, महा० or मह० Bu U C′ and the Viv.

II. 269. 10. द्विरात्र इति ॥ सूत्रं बौधायनस्य यजनीये ऽहन्यपूर्वमहर्भवत्युत्तरस्मिन्नुत्तरमिति शालीकिः ॥

II. 270. 5. तस्मिन्नुन्नतो वैहद्दामन इति भवन्तीति ॥ उपैवैते[1] नित्याः महसे स्युरिति बौधायन एत[2] एव[2] महस्तमाः[3] स्युरिति शालीकिः ॥

II. 271. 10. द्रोणकलशस्यावघ्रापण इति ॥ अन्तःपरिध्यवघ्रापयेदिति बौधायनो बहिःपरिधीति शालीकिः ॥

II. 272. 3. रूपाणाꣳ होम इति ॥ सूत्रं बौधायनस्याश्वमेधिकान्यप्यत्र[4] रूपाणि जुहुयादिति शालीकिः ॥

II. 274. 1. उद्यत्स्तोमेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 274. 9. औपसदानां पुरोडाशानां मन्त्रामन्त्र इति ॥ मन्त्रवन्तः स्युरिति बौधायनस्तूष्णीका इति शालीकिराग्नेया एककपालाः स्रुवाहुत्या चैनान्सह सकृज्जुहुयादित्यौपमन्यवः ॥

II. 275. 8. दर्वीर्णा उपकल्पयन्त इति ॥ सूत्रं बौधायनस्याजा अप्यत्रोपकल्पयीरन्निति[5] शालीकिः ॥

---

१ Thus G B; उपैवेति Bu, उपैते U, उतवैते Be, अतवेते C′.

२ Thus B G U (pr. m.) एता एव Be C′ U (sec. m.), एतमेव Bu.

३ सहस्रतमा MSS.; omitted by Be C′ (pr. m.).

४ Uncertain and partially emended; ०नस्याश्वमेधिकस्याप्यत्र C′, ०नस्य आश्वमेधिकस्याप्यत्र Be U; ०नस्य आश्वमेधिकायनस्य आश्वमेधिकान्यप्यत्र B G, ०नस्याश्वमेधिकायतस्याश्वमेधिकान्यप्यत्र Bu.

५ ०कल्पयेर० C′; अत्र om. Be.

I. 275. 11. उलूखलबुध्नो यूपो भवतीति ॥ सर्वाङ्कारान्कुर्यादिति[1] बौधायनः ॥ प्रोह्यैनमुच्छ्रयेदिति शालीकिः ॥ प्रोह्योपास्य[2] यूपशकलमुच्छ्रयेदित्यौपमन्यवः । ॥

I. 275. 13. पाꣳसूनामनुसꣳहरण इति ॥ धिष्णियेभ्य औदुम्बर्या अवटादुपरवेभ्य उत्करादुत्तरवेद्यै पाꣳसूननुसꣳहरेदिति बौधायनो ॥ नानुसꣳहरेदिति शालीकिः । ॥

अथ यदि दीक्षोपसत्सु प्रत्ययमापद्येरन्संप्रकीर्यादवसानीयाभिरिष्टिभिरिष्ट्वोत्तिष्ठेयुरिति[3] बौधायन ॥ एकाहꣳ[4] सुत्वोत्तिष्ठेयुरिति[4] शालीकिर्॥ नासꣳस्थाप्य पृष्ठ्यꣳ षडहमुत्तिष्ठेयुरित्यौपमन्यवः । ॥ १२ ॥

तेषामुत्थानेष्विति ॥ गच्छेयुरावभृथादिति बौधायनो ॥ ऽप्सुषोमान्ता इति शालीकिर्॥ ध्रुवान्ता इत्यौपमन्यवः । ॥

जनकसप्तरात्रो[5] ऽतिरात्रः पृष्ठ्यः षडह इति बौधायनः ॥ पृष्ठ्यः षडहो ऽतिरात्र इति शालीकिः । ॥

---

१ सर्वंकारान्कु॰ Be, सर्वाकारान्कु॰ C′, सर्वाङ्कामान्कु॰ B G U, सर्वारान्कु॰ Bu; the Viv. : सर्वाङ्कारान्। क्रियन्त इति कारा : कर्तव्याः संस्काराः ।

२ Thus Be C′; प्रोह्यौपास्य Bu, प्रोह्यावास्य G, प्रोह्यवास्य B, प्रोह्यपाचस्या U.

३ इष्टिभिः found only in G U C′.

४ Thus G Bu and the Viv.; एकंसुत्वो॰ U, एकसुत्वो॰ B, एका एह सुत्वो॰ Be C′.

५ ॰रात्रो G Bu and the Viv.; ॰रात्रे B Be, ॰रात्रः C′ (omitting तिरात्रः).

277. 14. दशरात्राय दीक्षिष्यमाणो दशहोतारꣳ हुत्वा दशरात्राय दीक्षेत इति ॥ सूत्रं बौधायनस्य ॥ सप्तहोतारꣳ हुत्वा दशहोतारं जुहुयादिति शालीकिः ॥ ॥ इति नु ब्राह्मणवान् ॥

अथ गोबलदशरात्रो ऽतिरात्रः पृष्ठ्यः षडहो वाजपेयो महाव्रतं चातिरात्रश्चाष्टमे[1] ऽह्नि[1] वाजपेयः[1] ॥ तत्र[1] देवसुवाꣳ हविषां करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिस्त्व ॥ यस्मिꣳशस्य पशुपुरोडाशमनुवर्तेरन्नित्यौपमन्यवः[2] । ॥

विलुप्यमाने पृष्ठ्ये षडहे शिल्पानां करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

281. 16. एकषष्टिरात्रे वैश्वकर्मणादित्ययोर्ग्रहण[3] इति ॥ उत्तरे त्रिꣳशद्रात्रे गृह्णीयादिति बौधायनः ॥ संवत्सर एवैतौ दृष्टौ भवतः । संवत्सर एवैनौ गृह्णीयादिति शालीकिः । ॥

283. 2. औदुम्बरꣳ षोडशिपात्रमिति ॥ सूत्रं बौधायनस्य ॥ खादिरमेवेति शालीकिः । ॥

283. 15. अतिरात्रपशूनामुपाकरण इति ॥ सूत्रं बौधायनस्य ॥ सारस्वतीमेवोपाकुर्यादिति शालीकिः । ॥

---

१ Thus U C′; ०चाष्टमो भवतीति वाजपेयस्तत्र Bu; चाष्टमेनाजपेयस्तत्र B G Be.

२ ०पशु० om. B Be G.

३ Thus G U C′ and the Viv.; णादित्यग्रहयोर्ग्रहण B Bu; ०णादित्ययोर्ग्रहण Be.

I. 286. 7. षोडशिवतां चमसानां भक्षण इति ॥ व्यक्तान्भक्षयेदिति[1] बौधायन॥ इन्द्रपीतानिति शालीकिः। ॥

राचिपर्यायेषु मुख्यानां चमसानामभिमर्शन इति ॥ सूत्रं शालीकेर्॥ त्रो ह स्माह बौधायन इन्द्राय त्वापिशर्वरायेत्येव मुख्यंमुख्यं चमसमभिमृशेदिति। ॥

I. 290. 11. आश्विनस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तू॥ष्णीक इति शालीकिः। ॥

I. 291. 6. आश्विनस्य चर्याया इति ॥ सूत्रं शालीकेर्॥ त्रो ह स्माह बौधायनः पुरस्तात्तिरोअह्नियानां[2] चमसानां चर्याया[3] अमुत्राश्विनेन[3] चरेदिति। ॥

I. 291. 8. तिरोअह्नियानां[2] चमसानां भक्षण इति ॥ अनुष्टुप्छन्दसा भक्षयेदिति बौधायनो॥ जगतीच्छन्दसेति शालीकिः। ॥

I. 291. 16. गुदतृतीयेष्विति ॥ एकादशधा कृत्वोपयष्टोपयजेदिति बौधायनो॥ ऽपच्छेदमिति शालीकिः॥ समस्तान्येवैनान्यनुप्रहृत्य सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः। ॥ १३ ॥ सप्तमः ॥

I. 292. 1. एकादशिन्यै संप्रदान इति ॥ सूत्रं शालीकेर्॥ त्रो ह

---

१ Thus Bu Be C′ and the Viv.; सुव्यक्ताभ॰ B G U.

२ Thus Bu and Viv.; ॰अन्ह्यानां or ॰अह्निनां the other MSS.

३ Thus G only; चर्याया इत्यत्राश्वि॰ C′ U (sec. m.), चर्यावामुत्राश्वि॰ the other MSS.; चर्याया also the Vivaraṇa.

स्माह बौधायन एकादशाग्नीषोमीया एकादश सवनीया एकादशानूबन्ध्या[1] इति । ॥

I. 292. 2. उपशयस्य मन्त्रामन्त्र इति ॥ लभेत ग्रामे नारण्य इति बौधायनो ॥ लभेतारण्ये न ग्राम इति शालीकि॥र्नैव ग्रामे नारण्य इत्यौपमन्यवः । ॥

I. 294, 16. उपशयस्योपासन इति ॥ सूत्रं बौधायनस्यो॥च्चैवोत्तरत[2] उपास्येदिति शालीकिः । ॥

I. 296. 4. पात्नीवतस्य परिलेखन इति ॥ शालामुखीयꣳ शङ्कुमभिपरिलिखेदिति बौधायन॥ उत्तरत एकादशिन्यै पात्नीवतं मिनुयादिति शालीकिः । ॥

I. 296. 5. त्वाष्ट्रस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तू॥ष्णीक इति शालीकिः । ॥

I. 296. 6. त्वाष्ट्रस्योत्सर्ग इति ॥ सूत्रꣳ शालीकेर॥न्नो ह स्माह बौधायनोऽभिपर्यग्निकृतमेनममन्त्रेण चात्वालोत्करावुदङ्ङुपनिष्क्रमय्याङ्गिरस्युत्सृज्य[3] यजमानस्याजास्वपिसृजेदिति । ॥

I. 296, 11. त्वाष्ट्रस्य चर्याया इति ॥ उपाꣳशु चरेदिति बौधायन॥ उच्चैरिति शालीकिः । ॥

I. 297. 4. पुनस्त्रिताविति ॥ सूत्रꣳ शालीकेर॥न्नो ह स्माह बौधा-

---

१ ०शानुबंध्या MSS.

२ Thus G U and a citation in the Ms.; उत्तर the other MSS.

३ Thus B Be C′ G U (sec. m.); ०निष्क्रमस्या० U (pr. m.), ०निष्क्रमर्या० Bu; ०निष्क्रमय्या० a citation in the Ms.

यनो यमप्यग्निं चिन्वानो[१]ऽपजानीयात्तस्मिन्नुपरि[१] पुनश्चितिं चिनुयादुत्तरतश्च यूपाद्यूपं मिनुयादिति | ॥

I. 299. 10. कौण्डपायिनीयास्विष्टिष्विति ॥ अग्न्यन्वाधानप्रतिपत्का इडान्ताः संतिष्ठेरन्निति बौधायन || आज्यभागप्रतिपत्का इडान्ता इति शालीकिः || सपूर्णपात्रविष्णुक्रमा इत्यौपमन्यवः | ॥

I. 299. 14. पिण्डपितृयज्ञस्य दान इति ॥ अहरहर्दद्यादिति बौधायन || आदित अन्ततश्च मासस्येति शालीकिः | ॥ १४ ॥

II. 301. 3. होतॄणां व्याख्यान इति ॥ सग्रहानृतेस्वाहाकारानित्ये- क|र्म्तेग्रहानन्तःस्वाहाकारानित्येकꣳ[२] | सर्वानित्येकं ॥ पूर्वः कल्पो बौधायनस्योत्तरौ शालीकेः | ॥

? स पौर्णमासीषुपौर्णमासीषु जुहुद्वादश कृत्वः संवत्सरे जुहुयादित्येतदेकम|मावास्यापौर्णमासीष्वित्येतदेकꣳ | सर्वास्वित्येतदेकम् ॥ पूर्वः कल्पो बौधायनस्योत्तरौ[३] शालीकेः | ॥

? त्रयस्त्रिꣳशच्चिताविति[४] ॥ सूत्रꣳ शालीकेर||त्रो ह

---

१ Doubtful. G and the Viv. read as given in our text; चिन्वानोयजा॰ C′, चिन्वानेवजा॰ U; चित्वानोपजा॰ the other MSS. We expect an optative derived from the root ज्या, cp. ज्यानानः XVII. 17: 297. 5. The Viv. periphrases by चीणः only.

२ ॰नंतस्वाहाकारा॰ MSS., but cp. XX. 5: 5. 5.

३ उभौ ins. B Be G (sec. m.).

४ Thus C′, G U (sec. m.) the Viv. and a citation in the Ms.; ॰स्त्रिंशच्चिता॰ B Be, ॰स्त्रिंशाच्चिता॰ Bu.

स्माह बौधायनो ऽग्निग्रहणं स्वयंचितिं श्वेतकृष्णयोरभिमर्शनमधिद्रवणमवद्रवणमिति[१] सर्वमेवैतत्कर्मावृता कुर्यादिति' ॥

I. 303. 5. अहरहश्चिताविति ॥ सूत्रं शालीकेर"त्रो ह स्माह बौधायनो ऽग्निग्रहणं स्वयंचितिं श्वेतकृष्णयोरभिमर्शनमधिद्रवणमवद्रवणमिति[१] सर्वमेवैतत्कर्मावृता कुर्यादिति' ॥

I. 307. 13. रथचक्रचितौ पुरीषस्योपधान इति ॥ पुरीषस्यान्तान्कुर्यादिति[२] बौधायन" इष्टकास्वेव पुरीषस्यान्तं[३] गच्छेदिति[३] शालीकिः' ॥ १५ ॥ अष्टमः ॥

I. 310. 2. रोहिते चर्मणीति ॥ सूत्रं बौधायनस्याप्यरोहितं स्यादिति शालीकिः' ॥

उभयनीतस्य करण इति ॥ उभे[४] ऋचौ[४] द्विरभ्यावर्तयेदिति बौधायनः" सकृदेव ब्रुवन्द्विर्ब्रूयादिति[५] शालीकिः' ॥

---

१ Thus B G Be Bu and a citation in the Ms. (cp. also XXII. 4: 121. 18); C′ reads °मर्शनाधिद्रविणमि°, U. om. °मवद्रवण°।

२ Thus G Be; पुरीषस्यांतस्यात्कुर्या° U, पुरीषस्यतस्यांतान्कुर्या° B, पुरीषस्योतत्कुर्या° C′; Bu defective.

३ Hesitatingly corrected; पुरीषस्यात्तद्गच्छे° G, पुरीषंस्यातद्गच्छे° Be, पुरीषंस्यात्तद्गच्छे° C′, पुरीषंस्यात्तद्गच्छे° U.

४ उभौ ऋचौ B G, उभये ऋचो Be C′, उभयौ ऋचो Bu, उभयै ऋचौ U (sec. m.). The two ṛks are, according to the Viv.: वायुः पूतः... प्राङ् सोमः etc., and वायुः पूतः... प्रत्यङ् सोमः etc., T Br. II. 6. 2. 2-3.

५ ब्रुवन् om. Be C′ U G (pr. m.); ब्रुवन् नद्विब्रू° Bu

प्राङ् सोमः प्रत्यङ् सोमः । प्रत्यङ् सोमः प्राङ् सोम[१] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 310. 4 sqq. सौत्रामणिकायै सुरायै संधान इति ॥ सूत्रमाचार्ययोर् ॥ न्यो ह स्माहौपमन्यवो यत्रैव सुरा स्यात्तत एवाहारयेदिति । ॥

312. 14. सुराग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ पयोग्रहानप्यत्र गृह्णीयादिति शालीकिः । ॥

I. 313. 4. ताञ्जघनेन स्रुग्दण्डान्प्राचो वोदीचो वायातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

सुरासोमस्य संचर इति ॥ दक्षिणेन हृत्वोत्तरेणावनयेदिति बौधायन ॥ उत्तरेण हृत्वा दक्षिणेनावनयेदिति शालीकि ॥ र्यत एवैनꣳ हरेत्तत एवैनमवनयेदित्यौपमन्यवः । ॥

314. 14. पावमानीभिरुपस्थान इति ॥ पावमानीभिरुपस्थाय पितृणां याज्यानुवाक्याभिरुपतिष्ठेरन्निति बौधायनः ॥ पितृणामेव याज्यानुवाक्याभिर्न पावमानीभिरिति शालीकिः । ॥

315. 14. अवभृथ इति ॥ सूत्रमाचार्ययोर् ॥ न्यो ह स्माहौपमन्यवः शूलैस्य मासरेण चावभृथमवेयादिति । ॥

आख्यातमुदकान्तस्य प्रत्यसनम्[२] ॥

आख्यातमाप्लवनम्[२] ॥

316. 10. आख्यातꣳ समिधां करणम् ॥

---

१ Thus G only; प्राङ् सोमः प्रत्यङ् सोमः प्राङ् सोम B, प्रत्यङ् सोम प्राङ् सोम Be C′ U, प्राक्सोम Bu.

२ See remark on XXI. 3 : 73. 5, 6.

I. 327. 15. वैमृधस्यानुनिर्वपण इति ॥ सूत्रं बौधायनस्य ॥ नानिष्ट्वा प्रथमसोमेनानुनिर्वपेदिति शालीकिः । ॥ १६ ॥

I. 328. 12. पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यामिति ॥ उभयत्र पौर्णमासहविर्भिर्यजेतेति[1] बौधायनो ॥ नामावास्यायां किंचन यज्ञरूपं कुर्यादिति शालीकिः ॥ पिण्डपितृयज्ञेन चरेदित्यौपमन्यवः । ॥

I. 328. 15. साकंप्रस्थायीयेन यजेत पशुकाम इति ॥ सूत्रꣳ शालीकेर् ॥ त्रो ह स्माह बौधायनः स्रुग्भ्यामेव पुरोडाशं जुहुयाच्चमसेन सांनाय्यमिति । ॥

I. 329. 11. नागतश्रीर्महेन्द्रं यजेत । त्रयो वै गतश्रियः शुश्रुवान्ग्रामणी राजन्यस्तेषां महेन्द्रो देवतेति ॥ स यो ऽन्य एतेभ्यो महेन्द्रमियक्षेत[2] स संवत्सरमिन्द्रमिष्ट्वा महेन्द्रेज्यां[3] लभेतेति बौधायनो ॥ ऽत एवापि संवत्सरमिन्द्रमिष्ट्वा महेन्द्रेज्यां[3] लभेतेति शालीकिः । ॥

I. 329. 16. संवत्सरमिन्द्रं यजेत । संवत्सरꣳ हि व्रतं नातीति ॥ सूत्रꣳ शालीकेर् ॥ त्रो ह स्माह बौधायनो यस्याममावास्याया-

---

१ Thus B Bu, पौर्णमासी॰ Be U G ; C′ injured.

२ Thus (इयक्षेत and cp. XVII. 49 : 329. 13 : इयक्ष्येत) the Vivaraṇa only ; महेन्द्रं यियक्षेत G (sec. m.) B; महेंद्रमियक्ष्येत Bu, ॰द्रं यजेत Be C′, ॰द्रं यक्षेत U (pr. m.).

३ Thus B Bu G C′ ; महेंद्रयाज्यां Be U.

मादित इन्द्रं यष्टुं प्रक्रामेत्संवत्सरे[1] पर्यवेते तस्यां महेन्द्रं यजेत । सो ऽत ऊर्ध्वं महेन्द्रयाज्येव स्यादित्य॥न्यो ह स्माहौपमन्यवो ऽभ्यारूढः खल्वस्यैव[2] संवत्सरो भवति यस्याममावास्यायामादित इन्द्रं यष्टुं प्रक्रामेत्संवत्सरे[1] पर्यवेते या ततः पूर्वामावास्या स्यात्तस्यां[3] महेन्द्रं यजेत । सो ऽत ऊर्ध्वं महेन्द्रयाज्येव स्यादिति । ॥

II. 331. 7. दाक्षायणयज्ञेन सुवर्गकामो यजेत । पूर्णमासे संनयेन्मैत्रावरुण्यामिक्षयामावास्यायां[4] यजेतेति ॥ सूत्रं बौधायनस्य ॥ वैमृधमप्यत्रानुनिर्वपेदिति शालीकिः । ॥

II. 331. 14. सांनाय्यस्य भक्षण इति ॥ सूत्रं शालीकेर॥न्यो ह स्माह बौधायनो यजमान एवैतमर्धमासमनुनिधाय सांनाय्यं भक्षयेदिति । ॥

II. 332. 1. आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्तू॥ष्णीकेति शालीकेः । ॥

II. 332. 6, 333. 3. इडादधे चतुश्चक्र उपांशुयाजस्य करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥ १७ ॥

**नवमः ॥**

II. 344. 1. बृहस्पतिसवे दाक्षिणानां होम इति ॥ अनुसवनं दाक्षिणानि

---

१ Thus (प्रक्रामेत्) C′ U and a citation by Sāyaṇa; प्रक्रामेत G (sec. m.), प्रक्रमेत् Bu Be, प्रक्रमेत B G (sec. m.).

२ Thus U C′, खल्वस्यै B, खल्वेवंस्येव Bu, खल्वस्य G; Be is defective.

३ स्यात् given only by Sāyaṇa in his citation.

४ वा ins. Be B U.

जुहुयादिति बौधायनो माध्यंदिन एव सवने दाक्षिणानि जुहुयाद्ददामीत्येवेतरयोः[1] सवनयोर्ब्रूयादिति शालीकिः ॥

हिरण्येन घृतमुत्पुनातीति ॥ मन्त्रनिरुक्तमेतद् घृतꣳ स्यादिति बौधायनस्तूष्णीकमिति[2] शालीकिः ॥

अनुद्धृते[3] वेद्यै दक्षिणत आहवनीयस्य बृहत स्तोत्रं प्रत्यभिषिञ्चतीति ॥ सूत्रं बौधायनस्य कृष्णाजिनमध्यवास्तृत्याभिषिञ्चेदिति शालीकिः ॥

माषैः पूर्णं कमण्डलुमिति ॥ सौवर्णः सौवर्णैर्माषैः पूर्णः स्यादिति बौधायनो मार्त्तिक[4] एव धान्यमाषैरिति शालीकिः ॥

सप्तदश मारुतीः पृश्नीर्वत्सतरीरालभत इति ॥ पृथगेवासां मनोताः स्युः पृथक् पशुपुरोडाश इति बौधायनः पृथगेवासां मनोता स्युरेकः पशुपुरोडाश इति शालीकिरेकैवासां मनोता स्यादेकः पशुपुरोडाश इत्यौपमन्यवः ॥

3. 9. अग्निष्टुतीन्द्रस्तुतीति ॥ सूत्रं बौधायनस्य यथाप्रकृतिमेवाध्वर्युः कुर्याच्छन्दोगवद्बृचा एव प्रतिविकुर्वीरन्निति शालीकिः ॥

10. अतिरिक्तस्तोत्रेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

---

१ Thus B G Bu and the Viv.; ददानी० Be U C′.

२ Thus G B; तूष्णीक इति B, तूष्णीमिति Be C′ U.

३ Thus the Viv.; ०द्धृते U G, ०धृते Be C′, ०हृत B.

४ मार्तिक G U C′ Be and Viv.; ध्यार्तिक B, ध्यातीक Bu.

II. 362. 3, 20. धनुषः प्रदान इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

एकाहानामन्त इति ॥ सूत्रं बौधायनस्य । मृत्युसवान्त इति शालीकिः । ॥

II. 367. 3. निदधत्यस्मा एतद्धविरुच्छिष्टं व्रतभाजनमिति[1] ॥ सूत्रं बौधायनस्य ॥ नात्र हविरुच्छिष्टं व्रतभाजनं[1] निदध्यादिति शालीकिः । ॥

II. 366. 4. sqq. अथास्याꣳ सदस्क्रियामनुक्रियां परिक्रियामतिक्रियां प्रवर्ग्यस्य करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

II. 385. 10. ग्रावानसो ऽधिषवणे फलके पुरुषास्तस्य वृषणाविति ॥ सूत्रं बौधायनस्य ॥ ग्रावानसो ऽप्यचारणी कुर्यादिति शालीकिः । ॥

II. 386. 2. स यं कं च[2] ग्रहं गृह्णात्येवमेवैनं गृह्णाति । यदु किं च पात्रꣳ सादयत्येवमेवैनत्सादयतीति ॥ सूत्रं बौधायनस्य ॥ यंयं ग्रहं गृह्णीयात्तंतं परिमृज्य सादयेदिति शालीकिः । ॥

II. 370, 8, 12; 377. 14; श्वेतमश्वं ददाति । श्वेतां वडबां ददात्यश्वमसितं ददाति । गर्भिणीं वडबां ललामीं ददात्यनडुच्छतं[3] ददाति । चय-

---

१ Thus B Bu G (sec. m.); ०भोजन० Be C′ U G (pr. m.).

२ चन G (sec. m.) and the Viv., चनं B.

३ Thus C′ only (sec. m.), all the other MSS. corrupt (०त्यनडुहं-वचं ददाति; ०त्यनडुहं ददाति, ०त्यनडुहं ददाति वचं ददाति).

379. 11; 382. 11; 388. 9; 406. 8, 9. स्त्रिꣳशतं निष्कान्ददाति[1] । सोमचमसं ददाति । हिरण्मयं चमसं ददाति । राशिकृतं[2] धान्यं ददाति । मरायकृतं धान्यं ददातीति[3] ॥ एतानि च नित्यानि च दद्यादिति बौधायन ॥ एतान्येवेति शालीकिः[4] । ॥ १८ ॥

[5]अथातः सर्वतोमुखं व्याख्यास्यामः ॥

चिन्वीत सर्वतोमुखेऽग्निमिति बौधायनो ॥ न चिन्वीतेति शालीकिरन्यो ह स्माह मौद्गल्यः पूर्वस्मिन्नेवाग्निचय इतरेषु सावित्राः स्युरित्येतदपि न कुर्यादित्याक्षीगविः । ॥

अरण्योः समारोपण[6] इति ॥ सूत्रमाचार्ययोरन्यो ह स्माह गौतमो गृहपतिरेव प्रथममरण्योः[7] समारोपयेत[8] इतरे सत्त्र इति । ॥

---

१ निष्कं ददाति MSS., but cp. XVIII. 38 : 388. 9.

२ Thus Be C′ Bu U, राशी° B G (sec. m.).

३ इति found in C′ only.

४ The words एतान्येवेति शालीकिः are repeated in Be Bu U W C′, indicating the end of a praśna.

५ This kaṇḍikā is not found in Be C′ Bu W U; in U it is given on a loose page. The text of this, doubtless later added, chapter is given according to B G (where it is given secunda manu), a complete citation in Keśavasvāmins prayogasāra (K) and a ditto (I) in a MS. belonging to the India Office (Catologue by Eggeling Vol. I, p. 87). The Vivaraṇa of this chapter is missing equally.

६ °रोहण G B.

७ प्रथमम् om. K.

८ °रोहयेत्तत G B, °रोहयंत K.

शालाया इति ॥ प्राकृतेन[१] प्रक्रमेण मौयान्मध्ये गार्हपत्य इति ॥ सूत्रं बौधायनस्यौत्रो ह स्माह शालीकिः त्रिपदेन प्रक्रमेण सर्वत इति । ॥

त्रिवृत्प्राच्यां दिशि भवति पञ्चदशो दक्षिणतः सप्तदशः पश्चादेकविंश उत्तरतः । सर्वतो वा ज्योतिष्टोमः[२] सर्वे[३] ज्योतिष्टोमदक्षिणा इति ॥

प्रवर्ग्यस्य करण[४] इति ॥ सूत्रं बौधायनस्य ॥ नोक्थ्ये[५] प्रवृञ्ज्यादिति शालीकिः । ॥

याजमान इति ॥ अभीनामं[६] याजमानं कुर्यादिति बौधायनः ॥ कुर्याद्यथावकाशं याजमानमिति शालीकि॥र्ये ऽग्निसंस्काराः[७] स्युस्तान्काममितरत्तन्त्रेणेत्यौपमन्यवः[८] । ॥

अग्न्यन्वाधान इति ॥ सूत्रं बौधायनस्यौत्रो ह स्माह शालीकिर्गार्हपत्यः[९] सकृदन्वाहितः स्याद्भामयोनिरन्वाहार्य-

---

१ प्रकृ० U K I.

२ ०मः B G, ०माः U K I.

३ Thus I, सर्व K, सर्वतो U, सर्वतो वा B G.

४ प्रकरण U K I.

५ नोक्थे B G.

६ अभिनाम B G, but cp. XX. 18: 39. 11, the other MSS. om. this word.

७ ०संस्कारार्था U.

८ तान om. B G; instead of तान्कामम् U : तस्यांगम् ।

९ ०पत्यस्य B G.

पचन आहवनीयꣳ[1] सकृदन्वाधाय ततो यथार्थं गच्छेदिति[2] । ॥

भक्षण इति ॥ सूत्रं बौधायनस्य ॥ सर्वꣳ समवधाय सकृदेव[3] भक्षयेदिति[3] शालीकिः । ॥

मार्जन इति ॥ सूत्रं बौधायनस्य[4] ॥ सकृदेकस्मिन्निति शालीकिः । ॥

लोकाग्नीनाꣳ हरण इति ॥ सूत्रमाचार्ययोरन्यो ह स्माह दीर्घवात्स्यः[5] पूर्वस्मिन्नेव याजमानꣳ स्यादिति । ॥

क्रतुपशूनां करण इति ॥ सूत्रं बौधायनस्य ॥ क्रतुपशव ऐकादशिनाश्च विकल्पन्त इति शालीकिः । ॥

समञ्जन इति ॥ सूत्रमौपमन्यवीपुत्रस्य ॥ यावन्तः स्तोमास्तावत्कृत्वः प्रचरण्या समनक्तीति बौधायनः[6] । ॥

दधिग्रह इति ॥ सूत्रं मौद्गल्यस्य ॥ पयसा वाज्येन[7] वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

अꣳशवदाभ्ययोर्ग्रहण इति ॥ सूत्रं बौधायनस्यान्यो ह स्माह

---

१ After ०नीयं G ins. तंतं, B तं; U K I om. ग्राम० ...नीयं and read स्यात्तं सकृद० (thus K I), स्यान्नसकृद० (thus U).

२ इति inserted by me.

३ सकृदेव om. B; न G instead of these words ;—भक्षयेयुर् U.

४ मौद्गल्यस्य U K I.

५ दीप० U K I.

६ शालीकिर् U K I.

७ U K I om. the first वा ।

शालीकिर्वाजपेये द्वादशाहे सत्त्रे ताण्डिनामयन उद्भिदि वलभिदीति तस्य स्यादित्येवमेव पृश्निग्रहैः प्राणग्रहैरिति[१] । ॥

षोडशिग्रहाणां[२] ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ अनुसवनं गृह्णीयुरिति शालीकिः । ॥

अतिग्राह्याणाꣳ होम इति ॥ सूत्रं बौधायनस्य[३] ॥ माहेन्द्रस्यानुवषट्कारमुपजुहुयुरिति शालीकिः[४] । ॥

षोडशिन स्तोत्रमुपाकरोतीति ॥ सूत्रं बौधायनस्य ॥ येन केन चिदिति शालीकिः । ॥

हृदयशूलानामुदासन इति ॥ एकैकश उद्वासयेदिति बौधायनः ॥ सर्वान्सहेति शालीकिः । ॥

अवभृथ इति ॥ सूत्रं बौधायनस्य[५] ॥ प्राञ्च एवावभृथमवेयुरिति[६] शालीकिः[७] । ॥

---

१ The reconstruction of the text of this dvaidha is wholly uncertain. I have given the reading presented by B which, however, has उद्भिद्वलभिदिति and adds शालीकिः at the end. Thus also G. U K I have तांडिनामयने ॥ तांडिणामयन, indicating the beginning of a new kaṇḍikā; moreover the following words run thus in U: उद्भिद्वलभिदित्येवमेव पृश्नि॰ in K: उदिदि वलभिदिमित्यवमेव पृ॰, in I: उद्भिदि वलभिदि लभ्येदितिपुत्विषिमतिसाध्यानमित्येवमेष पृ॰ ।

२ षोडशिनां ग्र॰ B G.

३ शालीकिर् U K I.

४ औपमन्यवः U K I.

५ शालीकेः U K I.

६ Thus G, ॰भृथमभ्यवेयु॰ U K I, ॰भृथमवेति B.

७ गौतमो U K I.

अरण्योः समारोपण[1] इति ॥ सूत्रमाचार्ययोरत्रो[2] ह स्माह गौतमो[3] गृहपतिरेवारण्योः समारोपयेत्तत[4] इतर इति[5] ॥ १९ ॥ दशमः ॥

॥ इति त्रयोविंशः प्रश्नः ॥

---

१ Thus K I, समारोहण U, समारोह्य B G.

२ सूत्रं शालीकेरत्रो U K I.

३ बोधायनो U K I.

४ ॰रोहये॰ B G.

५ Thus B G, [illegible]

# कर्मान्तसूत्रम् ॥

पञ्चतयेन कल्पमवेक्षेत छन्दसा ब्राह्मणेन प्रत्ययेन न्यायेन सꣳख्यावशेनेति। छन्दसेति यदवोचाम यथाम्नायप्रणिधीदं पूर्वमिदमुत्तरमित्यथापि मन्त्र एव स्वयं कर्म प्रब्रूते। कर्मानुवादो भवति। यथैतद्भवति प्रथमगाद्धिषणा बर्हिरच्छोर्वन्तरिक्षमन्विहि देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति। यच्छन्दसा न शक्नुयात्कल्पयितुं ब्राह्मणेन तद्विकल्पयिषेद्ब्राह्मणस्तु हैवैनान्मन्त्रानप्रज्ञातान्विदधातीदमनेन करोतीदमनेनेति। यथैतद्भवतीषे त्वोर्जे त्वेति शाखामाच्छिनत्ति वायव स्थोपायव स्थेति वत्सानपाकरोतीत्यथाप्यमन्त्राणि कर्माणि विदधाति। यथैतद्भवत्यष्टासु प्रक्रमेषु ब्राह्मणो ऽग्निमादधीतैकादशसु राजन्यो द्वादशसु वैश्य इत्येवं व्यवस्थावर्णसंयोगाद्यथो एतत्प्रत्ययेनेति छन्दोगबह्वृचाध्वर्युप्रत्ययेनेति। यथो एतन्न्यायेनेति प्राकृते तन्त्रे प्राकृतं[1] न्यायमनधिगच्छन्ग्राममन्यायं प्रतीयादयमिहार्हतीꣳ समारम्भ इति। यथो एतत्सꣳख्यावशेनेति सोमे ऽपहृत आदाराꣳश्च फाल्गुनानि चाभिषुणुयादिति। चतुष्टयेन मन्त्रा वर्तन्ते स्तुत्या निर्देशेनाशिषा नैव स्तुत्या नाशिषा न निर्देशेनेति चतुर्थमथेमे पञ्च हविराकारा ओषधं पयः पशुः सोम आज्यमिति॥१॥

तेषां पृथक्पृथग्धर्माः पृथगधिकरणानि। यथाधिकरणं

मन्त्रा दृष्टास्तान्न मिथः सꣳसादयेदनादेश्याद्येनयेन[1] यद्धविः सꣳसिध्येत्तेनतेन तत्कुर्यात्तत्तस्याधिकरणमुक्तान्यधिकरणानि । यज्ञ इति । किमुपज्ञो यज्ञः अङ्गोपज्ञो माङ्गल[2] इति । क उ खलु यज्ञ इति । पुरुष इति । का उ खलु देवता दीक्षेति । वागिति । का उ खलु पथ्या स्वस्तिरिति । [3]वागेवेति । का उ खल्वेकाक्षरा गायत्रीति । वागेवेति । क उ खलु यज्ञस्यारम्भः का प्रतिष्ठेति । विज्ञायते[4] स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इति । वात एव यज्ञस्यारम्भो वातः प्रतिष्ठेति । ॥ २ ॥ प्रथमः ॥

कथमु खल्वेतज्जानीयादिदं तन्त्रमयमावाप इत्यन्वाधानप्रभृति तन्त्रमाज्यभागाभ्यामन्यत्रौषधात्तस्मिꣳस्तन्त्रे सत्यावापस्थानानि भवन्ति यथैतद्धेनूनां दोहनं कपालानामुपधानꣳ स्तम्बयजुषो हरणमाज्यग्रहा[5] इति यच्च किंचाभिनिवपत्यूर्ध्व-

---

१ Thus H Ben G U D C Vt, Vc, the Viv. (one copy); संसाधये॰ Be, the Viv. (another copy). The meaning, according to Vc., of न मिथः संसादयेत् is: न मिश्रयेत् ।

२ Thus C U H G (pr. m.) Vt Vc and the Viv.; मांगलक Ben Be, मांगलिक G (sec. m.), पांगल D.

३ सा ins. G U (pr. m.) H.

४ In TS. I. 2, 2, 3.

५ ॰ग्रहा Be G U, ॰ग्राहा Ben D (sec. m.), ॰ग्राहाः H, ग्रहण D (pr. m.), ॰ग्रह C, ग्राह Vt.

माज्यभागाभ्यामेष मध्यत आवापो भवति यस्मिन्नेतद्धवीꣳष्योप्यन्ते तस्मिन्नेवावापजानि[1] तन्त्रस्थानं[2] भजन्ते यथैतत्प्राशित्रं यजमानभागब्रह्मभागौ स्विष्टकृच्चेडा चेत्यवदानत आवापो भवति तन्त्रं तु प्रदानतः । क उ खलु तन्त्रमावापभूयं गच्छत्यावापो वा तन्त्रभूयमिति । मैत्राबार्हस्पत्ये ऽप्यन्यस्मिꣳस्तन्त्रमु ह निर्वपणतो भवत्यावाप उ प्रदानतो । ऽथ वारुणीषु[3] च संज्ञानीष्ट्यां[4] चावापो ह निर्वपणतो भवति तन्त्रं तु प्रदानतो । ऽनूयाजप्रभृति तन्त्रमा समिष्टयजुषो होमात्किंदेवत्या उ खल्वनूयाजा भवन्तीत्याग्नेया इत्येव ब्रूयाद्विज्ञायते तं देवा आहुतीभिरनूयाजेष्वन्वविन्दन्यदनूयाजान्यजत्यग्निमेव तत्समिन्द्ध इत्यृतुदेवता उ खलु प्रयाजा भवन्तीति । ॥ ३ ॥

द्वितीयः ॥

कियत्यः पाकयज्ञसꣳस्थाः कियत्यो हविर्यज्ञसꣳस्थाः कियत्यः सोमसꣳस्था इति । हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्त पाकयज्ञसꣳस्था इत्यपरिमिता उ हैके ब्रुवते । यच्च किं चान्यत्र विहाराद्धूयते सर्वास्ताः पाकयज्ञसꣳस्था इत्यथ हविर्यज्ञसꣳस्था अग्न्याधेय-

---

१ एव om. H G U (pr. m.) C ;— ०जानीति G (sec. m.) U (pr. m.)

२ Ben Be ins. पंच ।

३ Thus (sc. इष्टिषु) D and C only ; वारुणेषु the other MSS.

४ Thus Ben C and Vc.; संज्ञानीतूष्णीं D; the other MSS. and the Viv. (one copy) and Vt. संज्ञान्येष्ट्यां ; संज्ञानेष्ट्यां the Viv. (another copy)

मग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि दाक्षायणयज्ञः कौण्डपायिन्य[1] इति । सौत्रामणिसु हैके ब्रुवते । ऽथ सोमसꣳस्था । अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयो ऽतिरात्रो ऽप्तोर्याम इति सप्त सोमसꣳस्था । यदग्निष्टोमस्य क्रतुकरणं तदत्यग्निष्टोमस्य । यदुक्थ्यस्य तत् षोडशिवाजपेययोर्यदतिरात्रस्य तदप्तोर्यामस्येति । सप्तानाꣳ सोमसꣳस्थानां द्वे सत्त्राणि न गच्छतो वाजपेयस्याप्तोर्यामस्येति । ॥ ४ ॥

कथमु खल्वेतज्जानीयादियं पूर्वा ततिरियमुत्तरेति । या प्रकृतिः सा पूर्वा ततिरथ यद्विदधाति सोत्तरा ततिरग्न्याधेयं पूर्वा ततिः पुनराधेयमुत्तरा ततिर्दर्शपूर्णमासाविष्टीनां पूर्वा ततिः सर्वाः काम्या इष्टय उत्तरा ततिरैन्द्राग्नो निरूढपशुबन्धानां पूर्वा ततिः सर्वे काम्याः पशव उत्तरा ततिर्ज्योतिष्टोमः सोमानां पूर्वा ततिः सर्वे सोमा उत्तरा ततिः । श्येनचिदग्नीनां पूर्वा ततिः सर्वे काम्या अग्नय उत्तरा ततिर्द्विरात्रो ऽहीनानां पूर्वा ततिः सर्वे ऽहीना उत्तरा ततिर्द्वादशाहो ऽहर्गणानां पूर्वा ततिः सर्वे ऽहर्गणा उत्तरा ततिर्गवामयनꣳ सांवत्सरिकाणाꣳ सत्त्राणां पूर्वा ततिः सर्वाणि सांवत्सरिकाणि सत्त्राण्युत्तरा ततिः । कियन्ति नु खलु गवामयनानि भवन्तीति । विज्ञायते[2] यथैतन्मासि पृष्ठमुत्तमे

---

१ कुंडपायिन्य Be, कौंडपायिनम् the Viv. (one copy), कौंडपायिमित D.
२ om. M Ben U (pr. m.) D C Vt.

मासि सक्तुपृष्ठान्युपेयुर्दशमास्यं तृतीयꣳ । सप्त ग्राम्या ओषधयः सप्तारण्याः । सप्त ग्राम्याः पशवः सप्तारण्याः । सप्त छन्दाꣳसि चतुरुत्तराणीति । सप्त ग्राम्या ओषधयस्तिलमाषव्रीहियवाः प्रियङ्गवो ऽणवो गोधूमाः सप्तमे । कुलत्थान्[1] हैके ब्रुवते । सप्तारण्याः श्यामाकाश्च नीवाराश्च जर्तिलाश्च गवीधुकाश्च गार्मुताश्च वास्त्वानि[2] च वेणुयवाश्च सप्तमे । कुरुविन्दान् हैके ब्रुवते । सप्त ग्राम्याः पशवो गोऽश्वमजाविकं पुरुषश्च गर्दभश्चोष्ट्रश्च सप्तमे । ऽश्वतरम् हैके ब्रुवते । सप्तारण्या द्विखुराश्च श्वापदानि च पक्षिणश्च सरीसृपाणि च हस्ती च मर्कटश्च नादेया सप्तमे । सप्त छन्दाꣳसि चतुरुत्तराणीति गायत्र्युष्णिगनुष्टुब्[3] बृहती पङ्क्तिस्त्रिष्टुब्जगतीति । ॥ ५ ॥ तृतीयः ॥

अथेदं त्रयं भवति कर्माभ्यावर्ति देवताभ्यावर्ति संख्याभ्यावर्तीति । सावित्रं नु खल्विदं कर्माभ्यावर्ति भवत्यथ देवताभ्यावर्ति ध्रुवाज्यं द्रोणकलशः सर्वपृष्ठेत्यथ[4] संख्याभ्यावर्ति त्रिः पृच्छति शृतꣳ हवी३ः शमितरित्यथापि राज्ञो मानं । क उ खलु मन्त्रमन्तरितं कल्पयेत्स्थानाद्वा स्थानं प्रजिज्ञासीताभिरूप्येण[5] वा प्रैषेण वेति । स्थानात्स्थानमिति यदवोचाम

---

१ Thus M Be Ben; कुलित्थान् H G (sec. m.) U D C, कुलुत्थान् Vt.

२ वास्त्यानि G (sec. m.), वास्तानि D C. According to the Viv. वास्तुकम् (Chenopodium) is meant.

३ °ष्टुभ् M only.

४ *i.e.* सर्वपृष्ठाख्या काम्येष्टिः (Vc), cp. TS. II. 3, 7, 1.

५ प्रजिज्ञासेत U, °सित Vt Vc Ben.

यो ऽनन्तरो मन्त्र आम्नातः स्यात्तेनैनꣳ सह कल्पयेत्पूर्वकालेन वोत्तरकालेन वेति । यथो एतद्दाभिरूपेणेति यथैतद्भवत्याग्नायानः सुवीर्यꣳ रायस्पोषꣳ स्वश्वियम् । बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय तिष्ठेति । यथो एतत्सौहेणेत्यग्निकल्पः स्वल्वयमिष्टकाभूयान्समाम्नातस्तं च[1] यो मन्त्रो ऽन्तरितः स्यादिष्टकाभूयमेनमापादयेत् ॥ ६ ॥

अथायमश्वमेध आकृतिभूयान्समाम्नातस्तं च यो मन्त्रो ऽन्तरितः स्यादाकृतिभूयमेनमापादयेन्नाप्रक्रान्तं प्रक्रमयेन्न प्रक्रान्तं कर्म तूष्णीं कर्मणाभिपूरयिषेदिति । नाप्रक्रान्तमिति यद्वोचाम बर्हिर्लवनः स्वल्वयꣳ ह्रस्वो मन्त्र आम्नातो भवति दीर्घमु कर्म । न कर्मणो हेतोर्मन्त्रो ऽभिनिवर्तेताथायं पशोर्विशसनो ह्रस्वो मन्त्र आम्नातो भवति दीर्घमु कर्म । न कर्मणो हेतोर्मन्त्रो ऽभिनिवर्तेताथास्याꣳ स्वयमातृण्णायां दीर्घो ह मन्त्र आम्नातो भवति ह्रस्वमु कर्म । न कर्मणो हेतोर्मन्त्रो विरम्येद्यथो[2] एतत्तिर्यग्यजुषा सकृत्तूष्णीमिति । लोकाग्नीꣳश्च तेषामुपश्रुत्य स्तम्बयजुश्चेति । यथो एतत्पञ्चकृत्वो यजुषा

---

१ अयम् given by Ben D C U (pr. m.) Vt, om. by H Be G U (sec. m).—On इष्टकाभूयान् V comments: इष्टकाभिर्भूयान् बहुलः इष्टकोपधानप्रचुर इति यावत् ।

२ Thus Be G U Vt Vc, विरम्येतयथो Ben C D, विरस्येत यथो H; V. comments: न विरम्येत् न विरमेत् विकरणव्यत्ययश्छान्दसः ।

पञ्चकलसक्ष्णौमिति राज्ञस्तेषां मानमुपश्रुत्येति । [1]यथो एतत्सक्तुयजुषा सक्तूंक्ष्णौमिति राज्ञ एव[2] तेषां[2] मानमुपश्रुत्येति[1] । यथो एतच्चतुरो मुष्टीन्व्रीहीणां निर्वपतीति द्वौ देवतायै स्विष्टकृते तृतीय इडायै चतुर्थ इति सर्व एवैतेषां ब्राह्मणवन्तः । ॥ ७ ॥ चतुर्थः ॥

अथात आदेशकारितानि व्याख्यास्यामो । ऽनादिष्टो ऽग्निरपि तु यथैतद्भवत्यधिदेवने जुहोति रथमुखे जुहोति रथनाभ्यां जुहोति चतुष्पथे जुहोति वर्त्मनोर्जुहोत्याव्रश्चने जुहोति पदे जुहोत्यजायां जुहोत्यजस्य दक्षिणे कर्णे जुहोत्यजस्य दक्षिणे शृङ्गे जुहोति ब्राह्मणस्य दक्षिणे हस्ते जुहोति दर्भस्तम्बे जुहोत्यप्सु जुहोत्यौदुम्बर्यां जुहोति वल्मीकवपायां जुहोत्यौपासने जुहोत्युत्तपनीये जुहोति शामित्रे जुहोत्याग्नीध्रीये जुहोत्यन्वाहार्यपचने जुहोति गार्हपत्ये जुहोतीत्यनादिष्ट[4] आहवनीय एव होतव्यमनादिष्टो ऽध्वर्युरपि तु यथैतद्भवत्युन्नेता जुहोति प्रतिप्रस्थाता जुहोतीत्यनादिष्टे[4] ऽध्वर्युणैव होतव्यमनादिष्टं पात्रमपि तु यथैतद्भवत्यञ्जलिना जुहोति

---

१...१ This clause is found in D U Be G (sec. m.) only; it is commented upon by Bhavasvāmin.

२ Thus D; एवैषां U Be G; some of the MSS. here and supra instead of उपश्रुत्य read उपश्रित्य, which is perhaps the preferable reading, but cp. Vc: उपश्रुत्य समीपे श्रुतिं कृत्वा ।

३ इति supplied by me.

४ इति found in G only.

शूर्पेण जुहोति कृष्णाजिनपुटेन जुहोति मध्यमेन पर्णेन जुहोत्यन्तमेन पर्णेन जुहोत्यर्कपर्णेन जुहोति पर्णमयेन स्रुवेण जुहोत्यौदुम्बरेण स्रुवेण जुहोत्यङ्गुष्ठाभ्यां जुहोति विसꣳसिकाकाण्डाभ्यां जुहोति गोमृगकण्ठेन जुहोत्यश्वशफेन जुहोत्ययस्मयेन कमण्डलुना जुहोतीत्यनादिष्टे[1] स्रुचैव होतव्यमनादिष्टा समिदादेशादेव समिधं जानीयाद्विज्ञायते नासमित्के जुहुयाद्यदसमित्के[2] जुहुयाद्यथाजिह्वे ऽन्नं दद्यात्तादृक्तत्तस्मात्समिद्वत्येव होतव्यमनादिष्ट उपसमाधायैव होतव्यम् । ॥ ८ ॥

अथातो ऽवदानकल्पश्चतुरुन्नयति चतुरवत्तं भवतीत्यनादिष्ट उपहत्यैव होतव्यमनादिष्टꣳ हविरादेशादेवान्यद्व्रीहियवेभ्यो जानीयादपि तु नु खलु क्षिप्रसꣳस्कारतममाज्यं ब्रुवते । ऽनादिष्टः पशुरादेशादेवान्यमजाज्जानीयादैन्द्राग्नाद्यदभिहारं तन्त्रꣳ स्यात्तदभिहारं कुर्यादग्न्यभिहारौ दर्शपूर्णमासौ । सोम इन्द्राभिहारः । सावित्रमोषधस्य निर्वपणं दृष्टं भवति । किꣳ[3] स्वित्सांनाय्यस्य पशो राज्ञ इति । दोहनꣳ सांनाय्यस्योपाकरणं पशोर्यदुपाꣳशुसवनमभि मिमीते तद्राज्ञः । प्रज्ञातमन्येषाꣳ हविषां पर्यग्निकरणं । किꣳ स्विद्राज्ञ इति । यदेवादो वसतीवरीः परिहरति तद्राज्ञ इति । ॥ ९ ॥

पञ्चमः ॥

---

१ इति missing in G H U D.

२ Thus U Ben G D C; जुहुयाद्यदस॰ Vt, ॰याद्यदिस॰ Be, ॰याद्यत्स॰ H.

३ Thus Be, the Viv. and V.; किम D C, किमु H Ben G U D.

अथातः पुरोडाशान्व्याख्यास्यामः । सर्व एवाग्नेया अष्टाकपाला अन्यत्र पौनराधेयिकात्सर्व एवैन्द्राग्ना एकादशकपाला अन्यत्राग्रयणाच्च शुनासीरीयाच्च । सर्व एवैन्द्रा एकादशकपाला अन्यत्र शुनासीरीयात्सर्व एवाग्नीषोमीया एकादशकपाला अन्यत्र श्यामाकात्सर्व एव पशुपुरोडाशा एकादशकपाला अन्यत्र वायव्याद्यद्देवत्यः पशुस्तद्देवत्यः पशुपुरोडाशो ऽन्यत्र वायव्याद्भवति । सर्व एवाग्नावैष्णवा एकादशकपाला अन्यत्राध्वरकल्पायै । तत्रैवाष्टाकपालस्य[1] द्वादशकपालस्य भवतः । सर्व एव सावित्रा द्वादशकपाला अन्यत्राश्वमेधिकेभ्यस्तत्रैवाष्टाकपालस्यैकादशकपालस्य भवतः सावित्रो ऽष्टाकपाल इति च । सर्व एव मारुताः सप्तकपाला अन्यत्राश्वमेधिकानां चातुर्मास्यपशूनां पशुपुरोडाशेभ्यो मारुताच्चैकविंशतिकपालादन्यत्र राजसूयिकात्पञ्चशारदीयानां च पशूनां पशुपुरोडाशेभ्यः । किमनुख्यानि नु[2] खलु ते[3] विलेख्यानि कपालानि भवन्तीति । विज्ञायते[4] वैश्वानरं द्वादशकपालं मृगाखरे भूमिकपालं निर्वपेदित्येतदनुख्यानि भवन्तीत्यथ पूर्वसंस्थाः । पञ्चप्रयाजस्य

---

१ Thus C Ben U (pr. m.); ०कपालो H Be G U (sec. m.).

२ नु H D C V, तु Ben Be G U.

३ om. H G (sec. m.), found in Ben Be U D C G (pr. m.) V. According to Vc it stands for तानि. Is the word to be cancelled? The Vivarana makes no mention of it.

४ Cp. T Br. III, 9, 17, 3.

नवप्रयाजस्यैकादशप्रयाजस्येति प्रयाजाः पूर्वसंस्थाः । पर्यग्निकरणं पश्वोरुपांश्वभिषवो ऽग्निष्टोमे गवामयने चतुर्विंशमहस्तदपि विज्ञायते तस्य त्रीणि च शतानि षष्टिश्च स्तोत्रीयास्तावतीः संवत्सरस्य रात्रय इति । ॥ १० ॥

अथ राजयज्ञा । राजसूयो ऽश्वमेधः पुरुषमेधः सर्वमेधः सोमसवः पृथिसवो[1] मृत्युसवः कानान्धयज्ञः शुनस्कर्णयज्ञ इति चाथादितिर्देवता । अग्न्याधेये त्वेव प्रथमश्चरुश्चातुर्मास्येषु द्वितीयः । प्रायणीयोदयनीययोरग्निदीक्षणीयायां । त्रयो राजसूये रत्निमानेषु[2] च प्रायुजेषु चादित्यां मल्हां गर्भिणीमालभत इति चैक इष्टिकल्प । एको व्रात्यस्तोमे । चत्वारो ऽश्वमेधे ऽदित्यै विष्णुपत्न्यै चरुरदित्यै हंससाचिरदित्यै त्रयो रोहितैतास्तिस्रो मेध्य आदित्या । द्वौ सौत्रामण्यामादित्याविर्वशा । षष्ठो ऽष्टादश इति च । त्रीणि तन्त्राणि यज्ञमन्वायत्तानि भवन्ति पञ्चप्रयाजं नवप्रयाजमेकादशप्रयाजमिति । पञ्चप्रयाजेन दर्शपूर्णमासौ काम्या इष्टय इति वर्तन्ते । नवप्रयाजेन चातुर्मास्यान्येकादशप्रयाजेन पशुः सोम इति । षडिमानि सर्वकल्पे सर्वाभिप्रायिकाणि भवन्ति । यथैतदग्न्याधेय-

---

१ पृथिवीसवो or पृथिविसवो all, cp. XVIII 6.

२ Thus H Ben D C V, रत्निनेषु G Be U the Viv. (one copy), रत्निनिषु the Viv. (another copy). Read probably रत्निनीषु (s इष्टिषु ).

मग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इति । तदपि विज्ञायते ऽथ यदस्याग्निमुद्धरति सहस्रं तेन कामदुघा[1] अवरुन्द्धे[1] । ऽथ यदग्निहोत्रं जुहोति सहस्रं तेन । षा वै वैश्वदेवस्य मात्रै । तद्वा एतेषामवममं । तोऽतो वा उत्तराणि श्रेयाꣳसि भवन्ति[2] । सर्वांल्लोकान्पशुबन्धयाज्यभिजयत्यैकस्मै[3] वै कामायान्ये यज्ञक्रतव आलभ्यन्ते । सर्वेभ्यः कामेभ्यः पशुः सोम इति । ॥ ११ ॥ षष्ठः ॥

अग्नीनाधास्यमानः प्रज्यमात्मानं कुर्वीत । येनास्याकुशलꣳ[4] स्यात्तेन कुशलं कुर्वीत । यान्यृणान्युत्थितकालानि स्युस्तानि व्यवहरेदनुज्ञापयीत वाथाप्यन्याधेय एवंलिङ्गां वरणं प्रथममुदाहरामस्तस्य चेत्पूर्वपुरुषैर्वृताः स्युस्तानेव नातिवृणीताव्यवच्छिन्नाश्चेत्कौलेनाध्ययनेन मानुषेण शीलवृत्ताभ्याꣳ स्युरिति । किंगत उ खल्वतिवरणं वावरणं वा भवतीति । स्तेयमचारी-

---

१ Thus Be G (sec. m.), ॰दुघोवरु॰ U D C H V, दुघावरु॰ Ben G (pr. m.).

२ भवंतीति C Ben.

३ After ॰जयति Be and G (sec. m.) ins. इति।

४ Thus (and cp. XXV. 4 init.) U G D C Be and the Viv. (one copy). येनास्य कुशलं H Ben V and the Viv. (another copy). The Vivaraṇa runs: येनास्याकुशलं स्यात् चमादिना तेन साम्यं कुर्वीत, the Bhāṣya of Veṅkateśvara: येनास्य कुशलं स्यात् तेन संभारो नास्ति तं संपादयेदित्यर्थः।

दभ्यमंस्यादयाज्यमयाजयत्सादितं[1] कर्म तदु ह्यास्थित[1] इत्येतेषामेकस्मिन्नतिवरणं वावरणं वा भवतीति। तांस्त्वेवृणीताव्यापन्नाङ्गानेव वृणीत। कं नु खल्वेषां प्रथमं वृणीत। यो ऽस्य मंस्तुततमः[2] स्यात्तं प्रथमं वृणीत। तेन सचिवेनान्यान्क्लिप्सेत। यद्यु वै यथाज्येष्ठं ब्रह्माणं प्रथमं वृणीताथ होतारमथोद्गातारमथाध्वर्युं। ब्रह्माणो वानन्तरमध्वर्युं। पूर्वं वोत्तरं वा यथाक्रमं चेत्स्यात्सृष्टेन धनेनर्त्विजः प्रतिसंवसीत। त्रीण्यधिकरणान्यृत्विजां विनापि[3] यच्छे[3]

---

१ Thus (**अभ्यमंस्यात्**) all. I guess this word to be a corruption from an original **अभ्यमंस्त**। The commentaries find the word **अम** 'sickness' in it. V.: **आभिमुख्येन रोगवत् बाधकत्वेन स्थितः।** The Viv.: **आत्मानं** (var. **अमीनं**) **जिघांसति। अम रोगे। आभिमुख्येन रोगभूत** (var. **रोगहत**) **स्थिष्ठति। अभ्यमंस्था इति लेट् सिचः** (var. **लेटचः**) **रोगत्वेन स्थितः।**— **सादितं** all the MSS. exc. Be (**सातं**), G (sec. m. **सौदं**) and U C (**यत्कुत्सितं**); **कुत्सितं**, however, seems to be the periphrase of our word in the commentaries; V.: **सादितं कुत्सितं कर्म सेवाभिचारयजनादि।** Perhaps the original reading of our passage has been: **स्येयमचारीदभ्यमंस्तायाज्यमयाजयद्यत्सादितं कर्म तदु ह्यास्थितेति।** **आस्थित** 3rd sing. root aor. med. from **आतिष्ठते।** Moreover instead of the impf. **अयाजयत्** we expect an aorist.

२ **संस्कृततमः** D and U (sec. m.).

३ Thus (**विनापि यच्छे**) all (also Vt, Vc). exc. C, which has **विना थियच्छे**; the correct reading (see the Viv. and the Bhāṣya: **यच्छु-मिच्छामि**) seems to be either **विना थियच्छे** (see the reading of C) or **विनापीयच्छे** (**ईयच्छे** for regular **इयच्छे**, cp. the remark on XXIII, 17; 176, 12).

ऽव्याशिषि[१] भार्यामक्रषीति । को नु खल्वृत्विक्तु धर्म इति ।
य आचार्य इति । कथमर्हण इति । ॥ १२ ॥

आगमश्रागम इत्येकमृतुमुखश्चतुमुख इत्येकꣳ । संवत्सरस्य
पार इत्येकं । यज्ञाधिगम इत्येतदपरं । को नु खल्वृत्विजां
धर्म इति । न न्यस्तमार्त्विज्यं कुर्यान्नानुध्यातं । नावक्रीतो
याजयेन्नावृतो याजयेन्नातिवृतो याजयेन्नानूद्देश्यं[२] याजयेन्न
36. 7. नीतदक्षिणं[३] याजयेन्नापरपक्षे याजयेन्नार्तं याजयेन्न मृतं याज-
येन्न चिकित्सिनं याजयेन्न परिखातिक्रान्तं[४] याजयेन्नान्तगं

---

१ Thus Be G and U (sec. m.) and both copies of the Viv.; व्यशिषि U H Ben, Vt. Vc; C corrupt; the Viv.: राजकुलचोरादिभिः हृतसर्वस्वो ऽस्मि, the Bhāṣya: राजाद्युपद्रवादिना हृतसर्वस्वो ऽस्मि ॥ On व्याशिषि for original व्याशिषि cp. Indog. Forsch. XVIII. 421, M.S.L. XIV. 192. See also infra XXIV. 18 : 202. 2.

२ Thus G Ben U D G (pr. m.) Vt, and cp. T Br. III. 11. 8. 8 with the remark of Sāyaṇa a. h. l.; नुद्देश्यं Be, the Viv. (one copy); ॰नुद्देश्य G (sec. m.) C, the Viv. (another copy); नूद्देश्य H. The Viv.: ऋत्विजां यज्ञे ऽन्यस्मै चोद्दिश्य करोति; the Bhāṣya: अन्यस्य कुलमुद्दिश्य स्वयमस्वतन्त्रः सन्यो यजति तम् ।

३ Thus (as S'āṅkh. śrs. V. 1. 10) G C, the Viv.; नीचदक्षिणं (as Āśv. gṛhs. I. 23. 20) the other MSS. The Bhāṣya (दक्षिणानयनानन्तरं यस्य कस्य चिदृत्विजो ऽनुपपत्तौ सत्यां तस्यार्त्विज्यं न कुर्यादित्यर्थः) and the Vivaraṇa (दक्षिणादानोत्तरकालम्) derive नीत from नयति; it is rather the partic. from न्येति; cp. नीतस्य XVIII 41 : 393. 7.

४ परिघा॰ Be Ben C D V.

याजयेन्नान्त्यजं[1] याजयेन्नाननूचानं याजयेदपि वैतेषां[2] तं याजयेद्यः कपालान्युपहन्याद्वृत्तिप्रेप्से वर्तमाने । तदपि दाशतये विज्ञायते ऽवर्त्या शुन आन्त्राणि पेचे न देवेषु विविदे मर्डितारम् । अपश्यं जायाममहीयमानामधा मे श्येनो मध्वाजभारेति । नैतेषामयाज्यः सहस्रदक्षिण इति । ॥ १३ ॥

॥ सप्तमः ॥

53. 3. ऊषांश्च सिकताश्चेति । ये भस्मरा इवोषाः स्युस्तानाहा-
53. 4.रयेदारण्यस्य वराहस्य विहतादाहारयेदारण्यस्याखोरुत्करादा-
हारयेद्यो ऽनुपदासी सूदः स्यात्तत आहारयेत्सूदे ऽविद्यमाने
53. 6.कुलीरसुषिरादाहारयेदशनिहते ऽविद्यमाने शीतहतमाहा-
53. 7.रयेद्वातहतं वा । चित्रियस्याश्वत्थस्येति । येन ग्रामो वा नगरं
53. 9.वा नदी वा तीर्थं वा ज्ञायते तत आहारयेदश्वं पूर्ववाह-
मिति । युवानमित्येवेदमुक्तं भवति । चौन्हिरण्यशल्कानिति[3] ।
षडिमान्कारयेत्सौवर्णा[3] उपासनार्था[4] राजता अतिप्रदानार्था ।

---

१ Thus Be, नांतजं G D C. Viv., Vt; तात्मजं H; Ben. om. the word; the Bhāṣya: पूर्वोक्त ( sc. म्लेच्छ ) देशजातम् । शूद्रस्त्रियामुत्पन्नमित्यन्ये ।

२ Thus H Be U (sec. m.) the Viv.; चैतेषां Ben G C U (pr. m.) and Vc. ( अपि च अपि वेत्यर्थः ) ।

३ Uncertain reading. H G U (sec. m.) Be ( only ॰शल्कानिति ) and U ( sec., only शल्काकानिति ) read as given in the text; चौन्हिरण्य शल्का ( शकला D C) न्कारयेत्सौ॰ Ben D C; षड्हिरण्यशल्कान्कारयेत्सौ॰ Vt. Are we to correct: षड्हिरण्यशल्कानिति । चौ॒स्त्रौनिमान्कारयेत् ?

४ Thus Ben C H D G (pr. m.) Vt; औपास॰ Be G (sec. m.) the Vivaraṇa.

I. 54. 10. उभौ मानुषेणालङ्कारेणालङ्कृतौ भवतो ऽहतवाससाविति ।
सर्व एवान्यो मानुषो ऽलङ्कारो ऽन्यत्र नलदादार्तायैवैतदुदा-
हरन्ति । स्रजमु हैके प्रतिषेधयन्ति । ॥ १४ ॥

ताः संवत्सरे पुरस्तादादध्यादिति । त्र्यहे षडहे द्वादशाहे
वा । संवत्सरे ऽपर्यवेत उद्वायति कथं तत्र कुर्यादिति । पुन-
रेव ब्रह्मौदनꣳ समुत्थापयेदा समिधामभ्याधानात् । त केशश्मश्रु
वापयीत । पुरस्तात्त्वेवैतत्संवत्सरꣳ[1] संचचीत । प्रायश्चित्तार्थ
एष उक्तो[2] भवति । स यावत्कृत्व उद्वायेदेवमेव कुर्यात्पर्यवेते
नोपनमेदेवमेव कुर्यादुपनमत्युपवसथगविप्रभृति कर्म तायते ।
द्विब्रह्मौदनमु[3] हैके ब्रुवत उच्छेषणीयो हेतरः[4] सान्वकरण
I. 59. 4. उत्तरो । ऽथ संभारेषूषान्निवपन्यददश्चन्द्रमसि कृष्णं तन्मनसा
ध्यायेत्तदपीहेति । सामानि चेन्न प्रत्यधीयीत योनीर्निगदे-
दपि वा व्याहृतीभिरपि वा हिंकारेण । प्रणीतालोकेन
I. 63. 14. रथचक्रं प्रवर्तयेत्तस्य चेदादधानस्य पुरस्ताच्चन्द्रमा दृश्येत कथं
तत्र कुर्यादिति । यः कर्मान्त आरब्धः स्यात्तं परिनिष्ठाप्य
कर्मान्तेनोपरमेच्छ्वो भूते परिनिस्तिष्ठेदित्यथ चेदिध्मे ऽभ्याहिते

---

१ Thus Be G ; ०स्तात्त्वेवैनंसंवत्सरं U (sec. m.) ; एतत् (एनत्) not found in Ben U (pr. m.) D C Vt. ; in H the whole passage is left out.

२ Found in G Be U (sec. m.) only.

३ Thus G Be U Ben ; द्विब्र० H G D C, the Viv.

४ Thus Be U (sec. m.) the Viv. ; होतरः Ben H G C U (pr. m.) Vt. ; हितरः D.

दृश्येत कथं तत्र कुर्यादिति । पूर्णाहुत्यन्तं कर्म कृत्वा कर्मान्ते-
नोपरमेच्छ्वो भूते परिनिस्तिष्ठेदिति । ॥ १५ ॥ अष्टमः ॥

53. 13. अथात ऋतुनक्षत्राणामेव मीमाꣳसा । ऋतूनेवाग्रे व्याख्या-
स्यामो ऽथ छन्दाꣳसीति । वसन्ते ब्राह्मणो ऽग्निमादधीत ग्रीष्मे
राजन्यः शरदि वैश्यो वर्षासु रथकार इति । सर्वेषां त्वेव
वसन्त आधानꣳ सर्वेषाꣳ रोहिण्यां । यथावर्णं त्वेव छन्दाꣳ-
स्यपि तु नु खलु कामनियुक्तान्यग्न्याधेयानि भवन्ति । यथै-
तद्भवति कृत्तिकास्वग्निमादधीत रोहिण्यामग्निमादधीत पुनर्व-
स्वोरग्निमादधीत पूर्वयोः फल्गुन्योरुत्तरयोः फल्गुन्योश्चित्राया-
53. 16. मिति । सद्यस्कालान्येतानि भवन्ति[1] । ग्रीष्मे राजन्यः शरदि
वैश्य इति नैते सद्यस्काले भवतो । ऽथात आर्तिजान्यग्न्या-
धेयानि व्याख्यास्यामो । विपक्ष आपूर्यमाणपक्षे विपक्षे ऽपक्षी-
यमाणपक्ष इति । विपक्ष आपूर्यमाणपक्ष आदधानो यावान-
त्रावकाशः[2] स्यात्तमभिविदधीत । पौर्णमास्यां तु[3] सद्यस्कालं ।
विपक्षे ऽपक्षीयमाणपक्ष आदधानो[4] नात्रावकाशः[4] कालक्षणाय
विद्यते । सर्वमेवैतदहः सद्यस्कालं कुर्याच्चतुर्होतारꣳ सारस्वतौ
होमावन्वारम्भेष्टिमिति । ॥ १६ ॥

---

१ भवंतीति Be.

२ Thus G Be H U (sec. m.), the other MSS. and the Viv. om. अत्र ।

३ Found in Be U (sec. m.) only.

४ आदधीत यावानत्रावकाशः U (sec. m.) only. Are we to read आदधाने with Vc?

अथ पौर्णमासवैमृधाभ्यामिष्ट्वामावास्यामेव ततः काङ्क्षेदथ
चेदमावास्यायाꣳ समयस्कालममावास्यान्तमथ सारस्वतौ होमौ
I. 65. 2. जुहुयाच्चैवर्चमुपसंदध्यादेवं पूर्णदर्वे । एवं वास्तोष्पतीये । कथमु
खलु पूर्णाहुतिं जुहुयादग्नये पृथिव्यै वायवे ऽन्तरिक्षाय सूर्याय
I. 65. 3. दिवे वरुणायाद्भ्यः स्वाहेति जुहुयादथेदं तूष्णीमग्निहोत्रमग्नि-
सꣳस्कारार्थं दृष्टं भवति । तदाज्येनैव जुहुयाद्वाचीनमवम्र-
ज्योर्ध्वमुन्मार्ष्ट्युभे एवैते सायंप्रातरग्निहोत्रे प्रतिजुहुयान्न्यत
I. 66. 3. औपवसथिकायै रात्रेः । सामिधेनीरनुवच्यन्दयहोतारं व्याख्याय
व्याहृतीरुक्त्वाय[1] हिंकुर्यादथानुब्रूयादेतदत्रानुपूर्व्यं[2] भवति ।
कथमु खल्वग्न्याधेये सोम इति । पूर्णाहुत्यन्तं कर्म कृत्वा
शालामध्यवस्येद्दीक्षणीयामाग्नेयो ऽष्टाकपालो ऽनुवर्तेत प्रायणी-
यामैन्द्राग्नश्चादित्यश्च[3] चरुरातिथ्यामग्नये[3] पवमानाय पुरोडाशो
ऽष्टाकपालो ऽग्नीषोमीयस्य पशुपुरोडाशमग्नये पावकायाग्नये
शुचये प्रातःसवनीयानन्वारम्भेष्टिरपि वा सर्वाण्येवाग्न्याधेयि-
कानि हवीꣳषि परिनिष्ठाप्य शालामध्यवस्येदुदवसानीया-
मन्वारम्भेष्टिरिति[4] । ॥ १७ ॥ नवमः ॥

---

१ अथ om Be.

२ °पूर्वं H.

३ Thus G U (sec. m.) and cp. XX, 19 : 20, 24; °मैन्द्राग्नश्चादित्य-श्चरु° U Vt. °मैन्द्राग्न्यदित्यश्चरु° Be.

४ Thus Be only (sc. अनुवर्तेत), cp. the Viv.: उदवसानीयानन्तर-मन्वारम्भेष्टिः । All the other MSS. and V.: उदवसानीयामन्वा° ।

69. 1. अथेदं पुनराधेयं । कियन्नु खलु पुनराधेयं भवतीत्यग्नी-
नाधाय पापीयानभूवमज्याग्निषि[१] पुत्रो मे मृत[२] इत्येत-
स्मिꣳस्त्वेवैतत्संवत्सरे दृष्टं भवति । कस्मिन्नु खल्वेनत्काले
69. 6. समुत्थापयेदिति । सा याषाढ्याः पौर्णमास्याः पुरस्तादमा-
वास्या[३] भवति सा सकृत्संवत्सरस्य पुनर्वसुभ्याꣳ संपद्यते तस्या-
मादधीतेति । तस्या उपवसथे ऽरण्योरग्नीन्समारोप्योद्वसाय[४]
मथित्वाग्नीन्विहृत्योद्वासन्येष्ट्वाग्नीन्समारोप्य[५] गच्छेत्पुनरेतद-
न्यगारꣳ[६] सꣳस्कारयेदन्यद्वा नवं कारयेत्पुनरेतानि यज्ञ-
70. 16. पात्राणि संलेखयेदन्यानि वा नवानि कारयेत्पुनर्निष्कृतो
रथो दक्षिणेति पुनःसꣳस्कृत एवैष उक्तो भवति । पुनरुत्स्यूतं

---

१ Thus again (and cp. XXIV, 12 : 197, 1) Ben Be G, the Viv. and Vc (twice); अज्यासिषि H U Vt and Rudradatta on Āp. V, 26. 3. D and C are defective. Here Bhavasvāmin remarks: अज्याग्निषि शब्दश्चिन्त्यः (Var. शब्दस्तेःसचि)। यमरमनमातां सक् चेति (Pāṇ. VII, 2, 73). स स्यात्तथा अज्यासिषीति भवितव्यं। वर्णव्यत्ययेन सकारस्य शकरः स्यात्। क्षीणो ऽस्मि धनशरीरादिना।

२ Thus all; probably the original reading was: पुत्रो मे ऽस्रवेति।

३ Instead of पुरस्तात् G H Be उपरिष्टात्।

४ Thus Be Viv.: °समारोह्यो° H Ben C Vt.

५ Instead of उद्वासन्ये° one copy of the Viv. and Vt: उद्वासिन्ये°, another copy of the Viv.: उद्वासमे°।— The reading °ग्नीन्समारोप्य is uncertain: thus read H G U C D, °ग्नीन्परोप्य Be, °ग्नीरोप्य Ben, °ग्नीनरोप्य Vt (pr. m.), °ग्नीनवोक्ष्य Vt (sec. m.) Vc. The Viv. gives the periphrase: तत्रैवाग्नीनुत्सृज्य, cp. Āp. V, 27, 3.

६ Thus Ben U (pr. m.) Vt, पुनरेवान्य° G H Be U (sec. m.).

वास इति पुनःसंस्कृतमेवैतदुक्तं[1] भवति । पुनरुत्सृष्टो ऽनड्वानित्यवकीर्णगव एवैष उक्तो भवत्यथेमान्युपांशुधर्माणि भवन्ति यथैतदग्न्याधेयं पुनराधेयं पितृयज्ञो दीक्षणीया प्रायणीयातिथ्योपसदः प्रातरनुवाकः पत्नीसंयाजा[2] अवभृथ उदयनीयोदवसानीया चितिप्रणयनीयं त्वाष्ट्रो यूपविरोहणीयो ऽष्टापदी[3] गर्भवती[4] च[4] । सहकारिप्रत्यया[5] भवन्ति[5] । यथो एतद्बौधायनस्य कल्पं वेदयन्ते ॥ १८ ॥

1. 2. सर्पराज्ञिया[6] ऋग्भिर्गार्हपत्यमादधातीत्यपोद्धृत्य घर्मश्शिर एतस्य स्थाने सर्पराज्ञीरावपेन्नित्येनोपस्थाय पौनराधेयिकेनोपतिष्ठेत । सिद्धमत ऊर्ध्वमीजानस्य पुनराद्धानस्य संनये३न्न[7] संनये३दिति[7] । संनयेदित्येक आहुरथ हैक आहुर्न संनयेदिति । शरीरसंस्पर्शी ह यज्ञो भवति यदैव[8] पुनर्य-

---

१ उक्तं supplied by me.

२ Thus Ben U (pr. m.) D C, °याजाः अवभृ° Vc, °याजोवभृ° G H Be U (sec. m.).

३ ष्टापद्यै G and U (sec. m.) Be.

४ Thus D C U (pr. m.) Vt; गर्भ इति G and U (sec. m.) Be; गर्भवती इति च Ben, गर्भवति च H.

५ °कारी U (sec. m.) D.— °प्रत्ययाद्भव° (°यात् भव°) Vt Vc. and Be; the word occurs also II. 2 : 35, 16.

६ Thus G U D C Ben V; °राज्ञीया Be, सार्पराज्ञिया H.

७ Plutimark only in Ben U Vt.

८ Thus Ben U D V; यदेव G H, यदेत्व Be, यद्वैव C.

I. 70. 12. त्रेताथ संनयेच्छंताक्षरा भवन्तीत्यक्षरपङ्क्तय[1] एतास्तस्य एकैका
I. 71. 12. पञ्चविंशत्यक्षरा । तच्छतमथेदं तृतीयाधेयं[2] । कतरन्नु
खल्विदमुपनिश्रयतीत्यग्न्याधेयं वा पुनराधेयं वेत्यग्न्याधेय-
I. 72. 1. मित्येव ब्रूयादथापहृताग्नेर्नष्टारणीकस्य च[3] ब्रह्मौदनेनैव प्रति-
पद्यते । सिद्धमग्न्याधेयम् । ॥ १९ ॥ दशमः ॥

I. 1. 4. अथेमौ दर्शपूर्णमासौ पौर्णमास्युपक्रमावमावास्यासंस्था-
वाचार्या[4] ब्रुवते । तत्रोदाहरन्त्यूर्ध्वं मध्यरात्रात्पौर्णमास्यां
चन्द्रमाः पूर्यते । स एतं चापररात्रं पूर्णो भवति सर्वं चाह-
रुत्तरस्याश्च रात्रेरा मध्यरात्रादथामावास्याया[5] उपवसथीये
ऽहन्यूर्ध्वं मध्यंदिनाच्चन्द्रमसमादित्यो लभते । स एतं चापराह्णं
लब्धो भवति सर्वां च रात्रिमुत्तरस्य चाह्न आ मध्यंदिनादेतं
संधिमभि[6] यजेतेति । रात्रिर्हं पौर्णमास्याः संधेया भवत्य-
हरमावास्यायां । द्वे पौर्णमास्यौ द्वे अमावास्ये । पूर्वांपूर्वां पौर्ण-
मासीमुत्तरामुत्तराममावास्यां । या पूर्वा पौर्णमासी सानुमति-

---

१ ०पंक्त्य H Be G Vc; ०पंक्तया Ben Vt, ०पंक्तय U C, पङ्क्तय D; cp. TS. I, 5, 2, 1; the four akṣarapaṅktis are TS. IV, 4, 4, w-z.

२ Thus G Be Ben the Viv. (and thus is to be read also III, 3 : 71, 17 instead of तृतीय आधान); तृतीयमग्न्याधेयं H U D C V.

३ Found in Ben D G U C only.

४ Thus U G D C Be V and the Viv.; पौर्णमासोप० H Ben, see also Pitṛmedhasūtra I, 1 : 16.

५ अथ found in Be G (sec. m.) U and the Viv.

६ ०मभितो G and U (sec. m.).

योत्तरा सा राका या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूर्गायत्री वा अनुमतिस्त्रिष्टुब्राकेति पौर्णमास्यै नामधेये जगती सिनीवाल्यनुष्टुप् कुहूरित्यमावास्यायै नामधेये ॥ २० ॥

अथायं चन्द्रमाः षोडशकलस्तस्य[1] पञ्चदशभिः[1] पक्षो[1]ऽभिविहितो[1] भवति षोडशी त्वियं कला बहुधा विप्रविष्टा ब्राह्मणेष्वप्स्वोषधीषु वनस्पतिषु पशुष्विति स यदेतानि यज्ञे क्रियन्ते तेनैषा संभ्रियते ऽथोपवसथस्थानानि चतुर्दशी पञ्चदशी षोडशी न तु त्रयोदशी सप्तदशी भवतः सो ऽयमाहिताग्निरुपवसथीये ऽहन्पुरा प्रातरग्निहोत्रात्पिङ्ख्यानुपसादयेदन्वाधानार्थान्व्रतोपायनीयं[2] पाचयीत तस्याशितौ भवतः सर्पिर्मिश्रं दधिमिश्रमक्षारलवणमपिष्मितꣳ[3] सर्वमेवैतदहः[4] कौशीधान्यं[5] वर्जयेदन्यत्र तिलेभ्यस्तस्य ब्राह्मणं प्रति-

१ Thus Be H, G and U (sec. m.); ०कलः स षोडशभिर्हंपक्षोभिवि० D C; ०कलः शभिर्हंपक्षोभिवि० Ben; ०कलः स पंचदशभिर्हंपक्षोभिर्वि० Vt; Vc: शुक्लपक्षे स चन्द्रमाः पञ्चदशभिः पक्षोभिस्तिथिभिः प्रतिपत्प्रभृतिपौर्णमासीपर्यन्तैः विहृतः कल्पितो भवति ।

२ Thus (पिंख्यान्) U H D C and a citation by Sāyaṇa; पिंखान् Be Vt Vc, पिंख्यानि the Viv., पिदकान् Ben G. Sāyaṇa: स्थूलकाष्ठविशेषान्, Veṅkateśvara: स्थूलकाष्ठानि, Bhavasvāmin: काष्ठानि स्थूलानि ।

३ Thus (अक्षारलवणम्) Be D and a citation by Sāyaṇa; ०क्षालवण० H, ०क्षारमलवण० G U C, Vt, Vc.

४ Thus H G Be U (sec. m.) and a cit. by Sāyaṇa; एव om. Ben D C V.

५ Thus (and cp. II. 20 : 67, 1) G Ben, कोशी(शि)० D C U H V Be and a citation by Sāyaṇa.

पाद्याश्नीयान्नैतदहः शूद्रायोच्छिष्टं दद्यात्पत्न्या एवैतदहरुच्छिष्टं दद्यान्नासन्ध्याꣳ शयीत न स्त्रियमुपेयात्कामं त्वेवोपरि शयीत स्त्रियं त्वेव नोपेयाद्व्रतचारी त्वेव स्यात्स यदि केशश्मश्रु वापयिष्यमाणः स्यात्केशश्मश्रु वापयित्वा लोमानि सꣳहृत्य नखानि निकृन्तयीत स्नायादभ्यञ्जीताञ्जीत दीक्षायै रूपं कुर्वीता-
I. 1. 5; III. 3. 4. ग्नीनन्वादध्याद्रूपस्थं कृत्वा गार्हपत्यमूर्ध्वज्ञुरन्वाहार्यपचनं प्रह्व आहवनीयं तिष्ठन्दशमीं निगदेदिति ॥ २१ ॥ एकादशः ॥

अन्वाहिताश्चेदग्नय उद्वायेयुः सवनीयं गार्हपत्यस्याहवनीय उद्वाते भस्मोद्वाप्य शकृत्पिण्डेन परिलिप्य ज्वलन्तमाहवनीयमुद्धृत्य न्युप्योपसमाधाय पुनरन्वाधाय व्याहृतीभिरुपतिष्ठेताथ यदन्वाहार्यपचन[1] उद्वायेदेवमेवैनꣳ हरेदनार्ता ह्येषा देवता यदन्वाहार्यपचन इति पुनरन्वाधाय व्याहृतीभिरुपतिष्ठेताथ
193. 17. sqq. यस्याग्निमनुद्धृतꣳ सूर्यो ऽभ्यस्तमियादभ्युदियाद्वा यथासूत्रं[2] वा कुर्यादपि वा संततीं[3] जुहुयान्मनो ज्योतिर्जुषतां त्रयस्त्रिꣳशत्तन्तत इत्येते स्रुवाहुती हुत्वा व्याहृतीभिरुपतिष्ठेताथाभ्यस्तमिते वारुणीꣳ स्रुवाहुतिꣳ हुत्वा व्याहृतीभिरुपतिष्ठेताथाभ्युदिते मैत्रीꣳ स्रुवाहुतिꣳ हुत्वा व्याहृतीभिरुपतिष्ठेत व्याहृतीभिरेवान्वाहार्यपचनमथारण्योरग्निषु समारूढेष्वात्मनि

---

१ यदन्वा॰ Ben H, यद्यन्वा॰ B G U, यद् om. C.

२ See XIV, 24 : 193, 19 sqq.

३ Thus (cp. III, 14 : 84, 9) Be G D U; संततिं H, संततीं C, संतति Ben.

वाध्वगते न प्रायश्चित्तमाचार्या ब्रुवते । तत्रोदाहरन्ति काममात्मनि समारूढेष्वरण्योरुपावरोह्य मन्थेदपि वामात्यं विहृत्य[1] तस्मिन्नुपावरोह्य जुहुयादथारण्योः समारूढेषु मथित्वाग्नीन्विहृत्य जुहुयादपि वामात्यं विहृत्याग्नीनन्तरारणी[2] निधाय जुहुयात् । ॥ २२ ॥

यथा राजविशामेवं[3] निर्मन्थ्यो वृथाग्नेस्तत्सिद्धमेके[4] ब्रुवते । यावति कृष्णमृग उपविशेत्तावदवरार्ध्यो[5] ऽध्वगतो[5] विहारो ।
..7; 5. 9. ऽग्नीनन्वादध्याद्व्रतमुपेयाद्व्रतोपेतस्य पर्णशाखामाच्छेयादेतदत्रा-

---

१ Ben H U D मथित्वा instead of विहृत्य; विहृत्य मथित्वा Be; G om. pr. m. विहृत्य, sec. m. मथित्वा ।

२ Thus H Be G D U (sec. m.); Ben U (pr. m.) ins. मथित्वा before विहृत्य।— °अंतरारणी Be G U, °अंतराणि Ben H, °अंतराणी D. In C this whole passage runs as follows: °अपि वामात्यं मथित्वा तस्मिन्नुपावरोह्य जुहुयादथारण्योः समारूढेषु मथित्वाग्नीन्विहृत्य जुहुयादपि वामात्यं मथित्वा विहृत्याग्नीनन्तराग्नी विधाय जुहुयात् ॥ २२ ॥ Cp. also Rudr. on Āp. IX. 3. 3.

३ राजा° Ben C and one copy of the Viv.; this seems to be the better reading.

४ Thus Ben D U (pr. m.) C and the Viv.; तत्र सिद्ध° Be H G U (sec. m.). About the meaning of these words I am uncertain.

५ Uncertain reading. G as given in our text; °वराध्योध्वगतो H; °वरार्ध्योध्वगतो U; °परार्ध्योध्वगते C; °पराद्धोर्ध्वगते Ben; °वरार्ध्योर्ध्वगतो Be; °परार्ध्योर्ध्वगतो D. The Vivaraṇa runs: तावदवरार्ध्यो जघन्यावस्थानत ऊनो न (one copy om. न) भवति ऊर्ध्वं द्वादशस्तु विक्रमेभ्यित्याद्यग्नेर्विहरण- (°विहार another copy) भूमिक्रमः ।

नुपूर्वं भवत्यथेमानि[१] त्रीणि पलाशशाखाजातानि भवन्ति शक्लाको लोमशको व्रततिरिति । लोमशकस्यैवैषा[२] छेत्तव्या भवति । यावन्मात्रे गौर्निकर्षेत[३] न[३] तत[३] ऊर्ध्वं छिन्द्यादपशव्यात ऊर्ध्वं स्यात्सं यद्यु ह्यग्निहोत्रोच्छेषणात्प्रमाद्येत्तत्पुनरेवाग्नि-होत्रं[४] जुहुयादथेमाः सांनाय्यदुहः षड्वमाः[५] समाम्नाता भवन्ति । तास्वेतिस्र एव स्युः प्रथमां वोत्तमां वा चतुर्वि-ग्लीयादथ चेद्वे एव स्यातामितरेतरां त्रिस्त्रिर्विग्लीयादथ

I. 5. 5. चेदेकैव स्यात्तामेव षट्कृत्वो विग्लीयाद्विस्त्ववागनन्वारभ्यो-त्तरा[६] दोहयेदित्यपरिमितानामेवैतदुक्तं[७] भवतीति । ॥ २३ ॥

द्वादशः ॥

I. 6. 2. द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि संपाद्यानीति । स्फ्यश्च कपालानि चेति पञ्च । वत्सं चोपावसृजत्युखां चाधि-श्रयतीति सप्त । तानि द्वादशामावास्यायामेवैतत्संनयत[८]

---

१ Only Be has इति after भवति ।

२ Thus U (sec. m.) and a citation by Sāyaṇa; एव om. D Be C H G; एवैषा om. Ben.

३ Equally uncertain. निकर्षेतेनतत U (sec. m.), निकर्षते न तत a citation by Sāyaṇa; निकषतेतत G D, निकषततत Ben, निकर्यतेत C, निकर्षतेतत Be U (pr. m.), निकषेतत H.

४ Thus G U; प्रमाद्येतपु० Ben C D, प्रमाद्येत्पु० Be, प्रमाद्येत्पु० the other MSS. The Viv. om. तत्, as also Rudr. on Āp. I. 11. 1.

५ षडवराः D C and a cit. by Sāyaṇa.

६ After ग्लीयात् G and U (pr. m.) ins. त्रिर्मन्त्रेण त्रिस्तूष्णीम् ।

७ दोहयत्य० instead of दोहयेदित्य० Be G U; दोहयित्वादित्य० C.

८ एव om G and U (sec. m.), H Be.

उपपद्यते नासंनयतो । ऽथेयं दार्शपौर्णमासिकी[1] वेदिर्यजमानमात्री भवत्यपरिमिता वा । यथासन्नानि हवीꣳषि संभवेदेवं तिरश्ची । प्राञ्चौ वेद्यꣳसावुन्नयत्याहवनीयस्य परिगृहीत्यै । प्रतीची श्रोणी निरूहति गार्हपत्यस्य परिगृहीत्यै । पुरस्तादꣳहीयसी पश्चात्प्रथीयसी मध्ये संनततरा भवतीत्येवमिव[2] हि योषेति । तस्यै वदतीयतीं खनति[3] प्रजापतिना यजमानमुखेन संमितामा प्रतिष्ठायै खनतीति । द्व्यङ्गुलं खेयेत्येकेषां । त्र्यङ्गुलं खेयेत्येकेषां । चतुरङ्गुलं खेयेत्येकेषाꣳ । सीतामात्रीत्येकेषाꣳ । रथवर्त्ममात्रीत्येकेषां । यावत्पार्ष्ण्यै श्वेतमित्येकेषामेतदेव सदन्येषामनुनिक्रान्ततरं भवति । नैतामात्रा अतिखनेद्दक्षिणतो वर्षीयसीं करोति । पुरीषवतीं करोति । प्राचीमुदीचीं प्रवणां निस्तिष्ठन्ती तीयन्तं[4] गृह्णातीति प्रस्तरस्य वदति । ॥ २४ ॥

संनखमात्रो ग्रहीतव्य इत्येकेषां । विशारुको[5] ग्रहीतव्य

१ दर्शपूर्णमा॰ G, दर्शपौर्णमा॰ Be; cp. V. 5: 133. 13.

२ इति found in H G U only.

३ G Ben H and a citation by Sāyaṇa ins. इति, but cp. TS. II. 6. 4. 2, TBr. III. 2. 9. 10.

४ Thus Ben U (pr. m.) and a citation by Sāyaṇa; निस्तिष्ठतीतीयंतं D H C, निखिष्ठतेतीयंतं U (sec. m.) G Be.

५ Thus H U (pr. m.) and Sāyaṇa (twice, in a citation); विषारुको Ben, विशातुको Be G U (sec. m.), the Viv.; C D om. this passage. Sāyaṇa (and Bhavasvāmin) remarks: विशारुकः विशरणदेशः छेदनप्रदेशो मूलमित्यर्थः, Bhav. adds: सर्वत्र मूलत एवोक्ता ।

इत्येकेषाꣳ । स्रुग्दण्डमात्रो ग्रहीतव्य इत्येकेषाꣳ । स्रुवदण्डमात्रो ग्रहीतव्य इत्येकेषामुर्वस्थिमात्रो[1] ग्रहीतव्य इत्येकेषामङ्गुष्ठपरुषा[2] संमितो[2] ग्रहितव्य इत्येकेषामपरिमितो ग्रहीतव्य इत्येकेषामियतीर्भवन्तीति समिधां वदति । प्रादेशमात्रीरेवैता उक्ता भवन्त्यनेन संमिताः कार्या इत्याहुरनेन ह्यग्रे प्रजापतिः प्रजा

I. 6. 11. असृजतेति । किंदेवत्ये उ खलु पवित्रे किंपूते भवत इति । वैष्णवी वायुपूते इत्येव ब्रूयादनखच्छिन्ने स्यातां । प्रणीताः प्रणयन्ननयापः प्रणयामीति पृथिवीं मनसा ध्यायेत्समान्येतानि कुर्यात्प्रणीता आहवनीयं ब्रह्माणमिध्माबर्हिरिति यज्ञस्य शिर

I. 8. 18. इत्येतदाचक्षते । किंप्रोक्षिता उ खलु प्रोक्षिण्यो भवन्तीति । विज्ञायते ब्रह्मवादिनो वदन्त्यद्भिर्हवीꣳषि प्रौक्षीः केनाप

I. 9. 11. इति । ब्रह्मणेति । ब्रह्मप्रोक्षिता एव भवन्ति । हविष्कृदेहीति ब्राह्मणस्य वदति हविष्कृदागहीति राजन्यस्य हविष्कृदाद्रवेति वैश्यस्य । हविष्कृदेहीति पर्जन्य एवैष उक्तो भवत्यथाप्युदा-

I. 9. 12. हरन्ति हविःसꣳस्कारीमेवैतदाहेति[3] । दृषदुपले दृषारवेणोच्चैः समाहन्तीति । विज्ञायते ब्राह्मणमुच्चैः समाहन्तवा आह

---

१ Thus ( उर्वस्थि, not ऊर्वस्थि ) all. Sāyaṇa remarks : छान्दसो ह्रस्वः ।

२ Thus Sāyaṇa (cit.), ॰परुषामात्रो Ben, ॰परुष्टसंमितो Be G, ॰परु-संमितो U G (sec. m.), ॰पर्वसंमितो H. Sāyaṇa comments : अंगुष्ठस्य परुः पर्व परुषा संमितः अंगुष्ठपर्वपरिमाण इत्यर्थः ।

३ Thus Ben Sāy., ॰संस्कारामे॰ D C, ॰संस्कारिमे॰ U (pr. m.), ॰संस्का-रिणमे॰ Be H G U (sec. m.). Sāyaṇa remarks : हविःसंस्कारिणस्तु सुष्ठुं हविष्कृतं इति संस्कारीमिति छान्दसः ।

विजित्यै । यावन्तो ऽस्य भ्रातृव्या यज्ञायुधानामुद्वदतामुप-
शृण्वन्ति ते [1]पराभवन्तीति । द्विर्द्विर्दृषदि[2] सकृत्सकृदुपलायां[2] ।
नवकृत्वः संपादयतीति विज्ञायते । ॥ २५ ॥ त्रयोदशः ॥

I. 11. 8. अपाग्ने ऽग्निमामादं जहीति । को नु खल्वामाद्भवती-
त्यपराग्निरेवैष उक्तो भवति । निष्क्रव्यादꣳ सेधेत्यादहनाग्नि-
रेवैष उक्तो भवत्या देवयजं वहेत्याहवनीय एवैष उक्तो भवति ।
को[3] नु[3] खलु कव्यवाहन इत्यन्वाहार्यपचन इत्येव ब्रूयाद्वि-
ज्ञायते यदग्ने कव्यवाहन पितॄन्यक्ष्यृतावृध इति । कुतो नु
I. 13. 14. खलु पिष्टानि संवपेत्कृष्णाजिनादित्येव ब्रूयात्संवपन्पिष्टानि
वाचं यच्छति । तामविदहन्तः[4] अपयतेत्येव वाचं विसृजते ।
यो विदग्धः स नैर्ऋतो यो ऽशृतः स रौद्रो यः शृतः स
I. 13. 13. सदेव इति । साधुशृतꣳ अपयतीत्येवेदमुक्तं भवति । सं
ब्रह्मणा पृच्यस्वेति । विज्ञायते वाग्वै ब्रह्म[5] वाचैवैनमेत-
I. 13. 16. त्संपृणक्ति । क्व उ खलु हविः शृतꣳ[6] अपयत इति । यदेवै-
तदाप्येभ्यो[7] निनयत्येकताय स्वाहा द्विताय स्वाहा त्रिताय

---

१ U (sec. m.) ins. सर्वे but cp. TBr. III. 2. 5. 9.

२ द्विः and सकृत् once H Sāy.; सकृत् once G.

३ Thus Ben C D U (pr. m.), Sāyaṇa; क उ H, क्व उ Be U (sec. m.), क्व G.

४ With the visarga Ben G U D C Sāy., without Be H; I. 10: 13. 9 is to be corrected accordingly.

५ ब्रह्मा H Be G U (sec. m.).

६ श्रुतं G D C U (sec. m.), Sāyaṇa (cit.).

७ Thus Ben U (pr. m.), Sāyaṇa (twice); यदेवतैदाप्ये॰ D C, यदेवैनमाप्ये॰ Be U (sec. m.), यदेवैनमाप्ये॰ G H.

स्वाहेति। को नु खल्वेकतः को द्वितः कस्त्रित इति। पिता पितामहः प्रपितामह इत्येके। पृथिव्यन्तरिक्षं द्यौरित्येके। ऽग्निरादित्यो वैद्युत इत्येके। ॥ २६ ॥

अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन्नित्येके[1]। ऋषय एतन्नामधेया[2] बभूवुरित्येके। ते देवा आप्येष्वमृजतेत्याप्य-
नामधेया[3] देवा भवन्ति। क्व उ खलु पौर्णमास्यां पितृभ्यो
. 19. 19. दीयत इति। यदेवैतत्क्रोण्योर्निनयतीति[4]। किमभिघारितं
I. 87. 2. नु खल्वाज्यं भवतीति। सत्याभिघारितमित्येव ब्रूयाद्विज्ञायते
I. 87. 4. सत्येन त्वाभिघारयामि तस्य ते भक्षीयेति[5]। पञ्चानां त्वा
वातानां यन्त्राय धर्त्राय गृह्णामीत्यनुदिशं वाता। विश्ववात एवैषां पञ्चमो भवति। पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय गृह्णामीति हेमन्तशिशिरावत्र समासं गच्छतः। पञ्चानां त्वा दिशां यन्त्राय धर्त्राय गृह्णामीतीयमेवासामूर्ध्वा दिक् पञ्चमी भवति। पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामीति देवा मनुष्या असुरा राक्षसा। गन्धर्वा एवैषां[6] पञ्चमा भवन्ति। चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामीत्यय-

---

१ Thus (०त्येके) C only, ०त्येते all the other MSS. and cit. by Sāy.

२ एवंनाम० Ben C D; ऋषयस्तांनाम० Be.

३ Thus G H Be U (sec. m.), ०त्याप्यानाम० Ben D C U (pr. m.) Sāyaṇa.

४ Thus G U D C and cit. Sāyaṇa यदैवै० Ben, यदेवैन० Be.

५ इति om. G.

६ Thus Ben U D C, एषां H Be G, एतेषां a cit. by Sāyaṇa.

मेवैष आकाशश्चरुः पञ्चबिलो भवति । दिशो ऽस्य पञ्च बिलानि भवन्ति वायुर्मैत्रणमित्यंचाप्युदाहरन्ति संवत्सर एवापि चरुः पञ्चबिलो भवत्यृतवो ऽस्य बिलानि भवन्ति वायुर्मैत्रणमिति । ॥ २७ ॥ चतुर्दशः ॥

अथाध्वर्योश्च होतुश्च प्रपदनमन्तरेण वेद्युत्करौ प्रागावृत्तो[१]
23. 18. ऽध्वर्युः प्रपद्यते प्रत्यगावृत्तो होताध्वर्युरनन्तरो ऽग्नेः स्यादार्षे-
यमसंप्रजानानस्य प्रवरं ब्रूहीति मनुष्वङ्गरतवन्मनुवदित्येव
ब्रूयाद्विज्ञायते मानव्यो हि प्रजा इति ब्राह्मणं । पुरोहित-
प्रवरो[२] वा[२] राज्ञो । ऽथाप्रज्ञातबन्धुराचार्यामुष्यायणमनुब्रवी-
25. 16.१० ताचार्यप्रवरमु[३] हैव[३] प्रवृणीताथ होतारं प्रवरयेत्यथसा दैवत-
मभिवर्धयेद्धुवा स्विष्टकृतं व्यतिषज्यैवाङ्गुली[४] अवद्येदङ्गुष्ठपर्व-
मात्राणि[४] दैवतान्यवदानानि भवन्ति ज्यायांसि सौविष्ट-
कृतान्यैडानि च । चतुर्धाकरणानि[५] ब्रह्म[५] प्रतिष्ठेति[५] । कृत्वा

---

१ प्राङ्वाहृ॰ G U.

२ Thus Be U (pr. m.) Sāyaṇa; ॰प्रवरोव C D, ॰प्रवरेण (omitting वा) H Be G (sec. m.) U (sec. m.). Is राजा to be read ?

३ थाप्रज्ञात॰ G (sec. m.) D C U, the Viv. and Sāyaṇa; यप्रज्ञात॰ Be Ben H G (pr. m.).— ॰बंधोरा॰ C and Sāyaṇa.— ॰ब्रवीत॰ all (Sāyaṇa alone ॰ब्रुवीत), cp. Āp. XXIV. 10. 17.— ॰प्रवरमुहैव C D and Sāyaṇa; ॰प्रवरमुह्वै G (sec. m.) U (pr. m.), ॰प्रवरमुवै Ben, ॰प्रवरमनुवैव Be U H; cp. Āp. l. c.

४ Thus G U D C and Sāyaṇa; ॰वांगुली श्याव॰ H Ben, वांगुलीरव॰ Be. The Viv. also has the dual.

५ These words are effaced in G.

I. 26. 8. स्विष्टकृतꣳ स्रुचमद्भिः पूरयित्वान्तःपरिधि निनयेद्वैश्वानरे
हविरिदं जुहोमीति । किमु खल्वसमुदितं[1] भवतीति प्रागा-
नूयाजिकात्संप्रैषादित्येव ब्रूयात् । ॥ २८ ॥

किंदक्षिणमग्निहोत्रं दर्शपूर्णमासौ काम्या इष्टयः पशुबन्ध
इत्यु । पदोहदक्षिणमग्निहोत्रमित्येके । शरावदक्षिणमग्निहोत्र-
मित्येके । यत्सायं जुहोति रात्रिमेव तेन दक्षिण्यां कुरुते ।
यत्प्रातरहरेव तेन दक्षिण्यं कुरुते । यत्ततो ददाति सा
दक्षिणेति । यदहोरात्रयोर्ददातीत्येवेदमुक्तं भवत्यथ दर्शपूर्ण-
मासयोरन्वाहार्यस्य पुरोडाशस्य च[2] चतुर्धाकरणं । विज्ञायते[3]
दक्षिणैवास्यैषाथो यज्ञस्यैव छिद्रमपिदधातीति । यथैवादः[4]
सौम्ये ऽध्वर आदेशमृत्विग्भ्यो दक्षिणा नीयन्त एवमेवापि
I. 120. 4. दक्षिणं पुरोडाशं चतुर्धा कृत्वा बर्हिषदं करोति । वासोदक्षिणाः
काम्या इष्टयो या[5] अनादिष्टदक्षिणा[5] । गोदक्षिणः पशुबन्धो ।
I. 32. 10. नित्यो ऽन्वाहार्यो । यथो एतच्छालीकेः कल्पं वेदयन्ते पत्नी-
संयाजेषु सर्व एवोत्तरेण गार्हपत्यं परिक्रामेयुरित्यनभ्यावृत्त्यै-
वात्र फलीकरणहोमो होतव्यो भवत्यथ हैके राकां च सिनी-
वालीं च कुहूं चानुमतिं च पत्नीहोमं च नारिष्ठौ च होमौ

---

१ °दितानि H U G (pr. m.) Ben, °दिता C.

२ Given by U (pr. m.) only and by Sāyaṇa in a citation.

३ See TS. I. 7. 3. 1.

४ यथैवश Ben, यथापि Be.

५ Thus Ben G (sec. m.), यास्वानादि° H U D C G (pr. m.), इष्टय अनादि° Be; cp. XIII. 1 : 120. 4.

पुरस्ताद्गृहपतेरुपजुहोति सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्यावभूताम् । संजानानौ विजहतामरातीर्दिवि ज्योतिरजरमारभेताꣳ स्वाहा ॥ दश ते तनुवो यज्ञ यज्ञियास्ताः प्रीणातु यजमानो घृतेन । नारिष्ठयोः प्रशिषमीडमानो देवानां दैव्ये ऽपि यजमानो ऽमृतो ऽभूत्स्वाहा ॥ यं वां देवा अकल्पयन्नूर्जो भागꣳ शतक्रतू । एतद्वां तेन प्रीणानि तेन तृप्यतमꣳहहौ स्वाहेति ' ॥ २९ ॥ पञ्चदशः ॥

I. 72. 3. अथेदमग्निहोत्रꣳ सायमुपक्रमं प्रातरपवर्गमाचार्या ब्रुवते '
तत्रोदाहरन्ति ज्योतिषी इमे संनिपतिते भवत आदित्यस्य
चाग्नेश्च ' ते न व्यवेयात्सायमाहवनीयमुद्धरन्पुरस्तात्प्रत्यङ्मुखो
निवपेत्प्रातराहवनीयमुद्धरन्पश्चात्प्राङ्मुखो निवपेत्सायमग्निहोत्रꣳ
होष्यन्नग्रेण परीत्य जुहुयात्प्रातरग्निहोत्रꣳ होष्यन्नपरेण परीत्य
I. 72. 6. जुहुयादेवमस्यैते ज्योतिषी अव्यवेते भवतो ' ऽथायमुद्धरण-
मन्त्रो वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाध्वर्युणा मनसा
ब्रह्मणा श्रोत्रेणाग्नीधैतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरामि भूर्भुवः
सुवरुद्ध्रियमाण उद्धर पाप्मानो मा यदविद्वान्यच्च विद्वाꣳ-
श्चकार । अह्ना यदेनः कृतमस्ति पापꣳ सर्वस्मान्मोद्धृतो मुञ्च
तस्मादिति सायꣳ ' रात्रिया यदेनः कृतमस्ति पापꣳ सर्व-
I. 72. 12. स्मान्मोद्धृतो मुञ्च तस्मादिति प्रातरग्निं निदधात्यमृताहुति-
ममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै । तयानन्तं[1]

---

[1] Corrected ; तेना॰ MSS.

काममितो जयेम प्रजापतिर्यं प्रथमो जिगायाग्निमग्नौ वैश्वानरे
ऽन्हतं जुहोमि स्वाहेति सायꣳ सूर्यमग्नौ वैश्वानरे ऽन्हतं
जुहोमि स्वाहेति प्रातरेतद्ध[१] वा अग्नेरग्निहोत्रं पयोहोत्र-
I. 73. 7. मितरद्धोष्यन्यथाहितमग्नीन्परिषिञ्चेद्धुत्वाहवनीयमेवैकं परि-
षिञ्चेद्धोष्यꣳस्त्वैव हुत्वा चाहवनीयमेवैकं परिषिञ्चन्नैव परि-
षिञ्चेदित्येतदपरमथेदं परोक्षोपस्थानं भवतीहैव सन्तत्र सतो
वो अग्नयः प्राणेन वाचा मनसा बिभर्मि। तिरो मा सन्त-
I. 77. 6. मायुर्मा प्रहासीज्ज्योतिषा वो वैश्वानरेणोपतिष्ठ इत्यथेमाꣳ
समिधं प्रवसतस्तूष्णीमभ्यादध्यात्प्रवसन्याजमानं[२] कुरुते ॥३०॥

अथेमꣳ समस्तहोमं यायावरधर्मेण विद्यमानमाचार्या
ब्रुवते तत्रोदाहरन्ति यायावरा ह वै नामर्षय आसꣳस्ते
ऽध्वन्यश्राम्यꣳस्ते[३] समस्तमजुहवुस्तस्माद्यायावरधर्मेणाध्वनि[४] सम-
स्तꣳ होतव्यं तस्यानिमित्तो[५] होमः सर्वेणानेन वा निमील-
नेन वोपसमाधानेन वान्तर्दध्यान्न शूद्रगव्या[६] अग्निहोत्रं

---

१ ह ins. Be G (sec. m.); C om. ह (प्रातरेतद्वा)।

२ प्रवत्स्यन्या० G (sec. m.) and the Viv.

३ Thus Ben H U D G (pr. m.), धन्विन्य० (i.e. धन्वन्य०?) Be G (sec. m.). Instead of ऽश्राम्यन् Be ऽश्वाम्यन्।

४ ०णधन्विनि Be G (sec. m.).

५ Uncertain; ०स्यानिमित्तो Be C D U G (pr. m.), ०स्यनिमित्तो G (sec. m.), ०स्यानिमित्तो Ben H.

६ Conjecturally; ०द्रगव्याया अ० H G (pr. m.) U (sec. m.), ०द्राम-व्याया अ० Ben D C U (pr. m.), ०द्रगव्याग्नि० Be G (sec. m.). Probably we have here the genit. (dative) of ०गवी, cp. उपवसथगवी, ब्रह्मगवी।

जुहुयान्नाहिताग्न्यै न मृतवत्सायै न वहलायै न वाहिन्यै[1] न वान्यायै न वान्यवत्सायै नानुदेश्यप्रतिगृहीतायै[2] नानुस्तरणी-प्रतिगृहीतायै[3] । नैकस्यै दुग्धेन बहवो जुहुयुर्न बह्वीनामेवैको[4] । दुग्धं लभमानस्योपसादनप्रभृति स्कन्नानुमन्त्रणं भवति । दीप्यमानेष्वहूयमानेषु[5] यावन्त्यग्निहोत्राण्यभ्यतिक्रान्तानि[6] स्युस्तानि प्रतिसंख्याय प्रतिजुहुयात्स । यद्यनस्तमिते जुहुयात्पुनरेवास्तमिते जुहुयाद्थ यदि महारात्रे जुहुयात्पुनरेवौषसं जुहुयादिति । ॥ ३१ ॥ षोडशः ॥

0. 11. कथमु खलु जीवपितुः पिण्डदानं भवतीति । येभ्य एव पिता ददाति तेभ्यः पुत्रो ददाति । द्वाभ्यां जीवपिता ददात्येकस्मै जीवपितामहो ददाति । न जीवन्तमतिदद्यादित्येके । पितृव्यस्य चेत्सगोत्रस्य दायमुपयच्छेत[7] कथं तत्र पिण्डदानं भवतीति । यस्मिन्काले पित्रे पिण्डं ददाति

---

१ Emended; वहान्यायै Be G Ben U, हान्यायै H D, बाह्ळायै C.

२ I am uncertain if we are to read here also चनूदेश्य (cp. XXIV. 13: 197. 6); नानुदेश्य॰ Be Ben C D, ॰नानुद्देश्य॰ G U, नानुदेभ्य॰ H; चनुद्देश्य one copy of the Viv., चनूदेश्य another.

३ These words found in Ben D C U only; they are mentioned in the Vivaraṇa.

४ एव effaced in G.

५ Thus Be H G; ॰मानेष्ववहूय॰ D C, ॰मानेषुहूय॰ Ben U; cp. Rudradatta on Āp. IX. 8. 5.

६ अभि om. Ben U (pr. m.) C.

७ यच्छेत G (sec. m.) only; cp. XX. 10: 23. 12.

तस्मिन्काले ऽस्य पिण्डं निपृणुयाद॑थ चेदसगोत्रस्य दायमुपयच्छेत[1] कथं तत्र पिण्डदानं भवतीति । स्वेभ्यो दत्त्वा प्रतिवेशं बर्हि स्तीर्त्वा बर्हिःप्रभृति पिण्डं दद्याद॑पि वागार एव स्थालीपाकꣳ श्रपयित्वा बर्हिःप्रभृत्येव पिण्डं दद्यात्क॑थमु खलु पुत्रिकापुत्रस्य पिण्डदानं भवतीत्ये॑तत्ते ऽमुष्यै तत मम पितामह ये च त्वामन्वेतत्ते ऽमुष्यै पितामह मम प्रपितामह ये च त्वामन्वेतत्ते ऽमुष्यै प्रपितामह मम प्रप्रपितामह[2] ये च त्वामन्विति । प्रविद्वानकल्पेन वा दद्यात्स्वधा पितृभ्यः पृथिवीषद्भ्यः स्वधा पितृभ्यो ऽन्तरिक्षसद्भ्यः स्वधा पितृभ्यो दिविषद्भ्य इति । पितुश्चेत्पितामहस्य प्रपितामहस्येति नामानि न जानीयात्कथं तत्र पिण्डदानं भवतीति । प्रविद्वानकल्पेन वा दद्याद॑पि वैतत्ते तत ये च त्वामन्वेतत्ते पितामह ये च त्वामन्वेतत्ते प्रपितामह ये च त्वामन्वित्यु॑त्तर आयुषि लोम
I. 81. 2. छिन्दीतेति । कस्मिन्नु खल्वेतत्काले छेत्तव्यं भवतीत्यू॑र्ध्वꣳ षट्षष्टिभ्यश्च[3] वर्षेभ्यो ऽष्टाभ्यश्च मासेभ्य इत्येतस्मिन्नेवैतत्काले छेत्तव्यं भवतीति[4] । कथमु खल्वनाहिताग्नेः पिण्डपितृयज्ञो भवतीत्य॑निरुप्तꣳ स्थालीपाकꣳ श्रपयित्वाग्निमुपसमाधाय

---

१ यच्छेत G (sec. m.) only ; cp. XX. 10 : 23. 12.

२ Thus G (sec. m.) only ; all the other MSS. om. the first. प्र ।

३ Thus Ben C U (pr. m.) ; षट् षष्टिश्च D, षट्षष्टिभ्यो H G U (sec. m.), षष्टिभ्यो Be.

४ Thus Ben D C U (pr. m.) ; भवति om. H Be G U (sec. m.).

संपरिस्तीर्याहुतीर्हुत्वा दक्षिणेनाग्निं दक्षिणाग्रं बर्हिः स्तीर्त्वा
बर्हिःप्रभृति पिण्डं दद्यादपि वागार एव स्थालीपाकꣳ श्रपयित्वा
बर्हिःप्रभृत्येव पिण्डं दद्याद्यज्ञोपवीत्येव प्राजापत्ययर्चैतमग्नि-
मुपतिष्ठेतेति ॥ ३२ ॥

I. 82. 6; III. 48. 16. यथो एतद्बौधायनस्य कल्पं वेदयन्ते हविष्कृता वाचं
विसृज्याज्यानीर्जुहुयात्कस्मिन्नु खल्वेनाः काले जुहुयादिति
प्रस्कन्दनान्तं कर्म कृत्वैतस्मिन्नेनाः काले जुहुयात्कथमु खल्व-
नाहिताग्नेराग्रयणं भवतीत्यनिरुप्तꣳ स्थालीपाकꣳ श्रपयित्वा-
ग्निमुपसमाधाय संपरिस्तीर्याघारावाघार्याज्यभागाविष्ट्वाग्रयण-
देवताभ्यः स्विष्टकृच्चतुर्थीभ्यो जुहुयात्कामं[1] पुरस्तात्स्विष्टकृतो
I. 83. 3. ऽज्यानीरुपजुहुयात्तस्यैतेनैव मन्त्रेण प्राश्नीयाद्भद्रान्नः श्रेयः
समनैष्ट देवा इत्यपि वा श्रुतवतो ब्राह्मणस्य कृतोच्छेषणा-
I. 84. 15. ल्लिप्सेत । समानः प्राशनमन्त्रः । कथमु खल्वन्तर्विराजं बर्हि-
र्विराजमन्तर्बर्हिर्विराजमिति जानीयान्नित्येनोपस्थाय विराज-
क्रमैरुपतिष्ठेत प्रोष्य[2] पुनरागम्य[3] विराजक्रमैरुपस्थाय नित्ये-
नैवोपतिष्ठेतैतेनैव[4] बहिर्विराजमुक्तमन्तर्बर्हिर्विराजं चेति । सो
I. 83. 16. ऽधः संवेश्यमाꣳसाश्यस्त्वुपायो प्रवसति । विपरीतनामधेय एष

---

१ Thus G (sec. m.) only; काम Be, कर्म, D, कर्मु C, कर्मि U, कर्मे Ben, कथं H.

२ Thus G, पोष्य Be D, प्रोष्यन् Ben C U, प्राप्य H.

३ ०गत्य G and U (sec. m.).

४ अपि instead of the last एव Ben D C U (pr. m.).

I. 86. 5 भवति । स खिद्यपेदं प्रायश्चित्तं मध्ये[१] पतितमाश्विनो द्विकपालस्तमन्तमेव[२] परिणयेद्दीक्षणीयायां चेन्नश्येत्प्रायणीयामनुवर्तेत । प्रायणीयायां चेन्नश्येदातिथ्यामनुवर्तेतातिथ्यायां चेन्नश्येदग्नीषोमीयस्य पशुपुरोडाशमुत्तरमुत्तरं[३] तन्त्रमनुवर्ती[३] स्यादथ चेदग्निदीक्षणीयायां नश्येत्कस्मिन्नु खल्वेनं काले निर्वपेदिति । दीक्षाहुतीर्हुत्वैतस्मिन्नेनं काले निर्वपेदपि वा
II. 54. 4. प्रागौद्ग्रहणाद्यथो एतद्बौधायनस्य कल्पं वेदयन्ते प्रवसतः प्रस्तरेणैवास्य सह यजमानभागमनुप्रहरेद्ध्रुवायै वाज्येन पर्युपस्तीर्य[४] जुह्वामवधाय जुहुयात्प्रस्तरमूर्ध्वं यजमानभागो गच्छतीति प्रवसतः प्रस्तरेणैवास्य सह यजमानभागमनुप्रहरेदिति ।

॥ ३३ ॥ सप्तदशः ॥

II. 55. 4. अथायं पशुः सोपवसथस्तस्य कः कर्मण उपक्रमो भवतीत्यजस्रैरग्निभिरुदवसाय षड्ढोतारं[५] हुत्वा यूपाहुतिं हुत्वा यूपं सयजुषं कृत्वा[५] वेदिं विमाय व्रतोपायनीयमश्नित्वाग्नीनन्वादध्याद्व्रतमुपेयादिध्माबर्हिः संनह्योपवसेदथ प्रातराग्नेयेना- II. 5
ष्टाकपालेन यजेतेति नु बौधायनस्य कल्पो । नाग्नीनन्वा-

१ मध्य H Be G U D C.

२ Thus (॰स्तमंतमेव) G H U (sec. m.), ॰स्तंतमेव C, ॰स्तमतमेव Be, ॰स्ततमेव Ben U (pr. m.) D.

३ Thus Ben U (pr. m.) D C; ॰मुत्तरमुत्तरं तचेममनु॰ Be U (sec. m.), ॰मुत्तरं तचेममनु॰ H G (pr. m.), ॰मुत्तरं तंचमनु॰ G (sec. m.).

४ वा ins. G Be U (sec. m.) H, not Ben D C.

५ The words षड्ढोतारं unto कृत्वा are given by G (sec. m.) after उपेयात् (l. 15).

दध्यान्न व्रतमुपेयात्पाणी संमृशीत । परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेद्ब्रह्माणं दक्षिणत उपवेशयेत्तूष्णीं[1] । प्रणीते त्वौत्तरवेदिके मन्त्रेणोपविशेत्प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्फ्यहस्तः प्राङेत्य स्तम्बयजुर्हरेत्त्रिरुद्धमत ऊर्ध्वमथ शाखौकेररण्योरग्नीन्समारोह्योदवसाय मथित्वाग्नीन्विहृत्यैवमेव[2] षड्ढोतारꣳ हुत्वा यूपाहुतिꣳ हुत्वा यूपꣳ सयजुषं कृत्वा वेदिं विमायाग्नीनन्वादध्याद्व्रतमुपेयादिध्माबर्हिः संनह्येत्पाणी संमृशीत । परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेद्ब्रह्माणं दक्षिणत उपवेशयेत्तूष्णीं । प्रणीते त्वौत्तरवेदिके[3] मन्त्रेणोपविशेत्प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा समिद्वत्याहवनीये पूर्णाहुतिꣳ हुत्वा स्फ्यहस्तः प्राङेत्य स्तम्बयजुर्हरेत्त्रिरुद्धमत ऊर्ध्वम् । ॥ ३४ ॥

5. 9. स्फ्यो यूपो भवतीति । कथमु खल्वस्य खरधिमन्थने[4] यूपशकले[4] इति[4] भवन्तीत्येतस्यैवावतक्ष्णुयादपि वान्यस्य

---

१ Thus Ben C D U (pr. m.), तूष्णीकं G Be H U (sec. m.).

२ After विहृत्य G ins. (on the margin): षड्ढोतारं हुत्वा यूपं सयजुषं कृत्वा वेदिं विमाय व्रतोपायनीयमश्नित्वाग्नीनन्वादध्याद्व्रतमुपेयादिध्माबर्हिः संनह्योपवसेत् ।

३ त्वेवौत्त॰ Be.

४ Not wholly certain; ॰मंथनेयूपशकल इति Ben U C D G (pr. m.), ॰मंथनयूपशकले इति H G (sec. m.), ॰मंथनेयूपशकलमिति H. The Vivaraṇa, although not clear, gives ॰मन्थने as *viṣayasaptamī*. It seems more probable we have here a dual.

तज्जातीयस्य वृक्षस्य कुर्यादथैषाल एष भवति । प्रोक्षणप्रभृति मन्त्रान्साधयेद्वा परिव्ययणात्तृतीयवेलायां परिव्ययेदेवमुपरसंमितायां । पञ्चारत्निप्रभृतयः पाशुबन्धिका यूपा भवन्त्या नवारत्नेर्नवारत्निप्रभृतय आग्निष्टोमिका यूपा भवन्त्येकविꣳशत्यरत्नेस्त्र्यरत्निश्चतुररत्निर्वा निरूढपशुबन्धस्य पालाशो यूपः । किमु खलु प्रवसतः पशुबन्धः सिध्यती३[1] न सिध्यती३[1] इति । सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति । लोकाग्नीन्खल्विमान्द्वितीयमग्न्याधेयं ब्रुवते । न[2] तु[2] खलु[2] प्रवसतः पशुबन्धः सिध्यतीति । ॥ ३५ ॥ अष्टादशः ॥

कियन्नु खलु पशुबन्धे याजमानं भवतीति । व्रतोपायनव्रतविसर्जने[3] यज्ञस्य पुनरालम्भ । आज्यावकाशमु हैके ब्रुवत उपप्रैषाश्रावण इति । किंदेवत्यं[4] नु खल्विदं भवतीति । मृत्युदेवत्यमित्येव[4] ब्रूयादथेमाः पशुबन्धे षट् प्रोक्षणस्तिस्रो ह[5] मन्त्रवत्यस्तिस्रस्तूष्णीका । यवमतीरिन्द्रघोषवतीः पशुप्रोक्षणीरिति तूष्णीकाः । पशुपुरोडाशीयप्रोक्षणीः पात्रप्रोक्षणीरिध्माबर्हिःप्रोक्षणीरिति मन्त्रसꣳस्कृताः । पशुबन्धे चेद्वा-

---

१ Pluti signs only in Ben C D U.

२ नतुखलु Be G, ततुखलु Ben, तनुखलु H, नखलु U C, न D.

३ व्रतोपायमे Be ( instead of •पायन• ) ।

४ Thus corrected (in accordance with the TS.) ; •देवतं or देवतं the MSS.

५ हि U (sec. m.).

ज्यभागावुदाजिहीर्षेत्कस्मिन्नु खल्वेनौ काले यजेदिति ।
स्वाहाकृतिप्रैषेण चरित्वा प्राग्वपायै । पुरस्तात्स्वाहाकृतयो वा
अन्ये देवा उपरिष्टात्स्वाहाकृतयोऽन्य इत्यादित्यस्यैवैते रश्मयः
I. 121. 3. प्राचीनाश्च प्रतीचीनाश्च भवन्त्यथायं पशुपुरोडाशस्तस्य कः
कर्मण उपक्रमो भवतीति । जघनेन गार्हपत्यꣳ स्फ्यं निद-
ध्यात्स्फ्योपरि पात्रीं । पात्र्यां व्रीहीनावपेच्छूर्पादानप्रभृति
कर्मान्तस्तायत आप्यनिनयनान्तो । जघनेन गार्हपत्यमाप्येभ्यो
निनयेत्प्राचणीषेण पुरोडाशीयानि[1] पिष्टानि संयौयादेवꣳ[2]
सवनीयानां । यथो एतद्बौधायनस्य कल्पं वेदयन्ते ॥ ३६ ॥

II. 64. 4. निरवदायैवास्य स्विष्टकृतमिडामवद्येत्कथमत्र चतुरवत्तं
भवतीत्युपस्तीर्य पुरोडाशं द्वेधा कृत्वाभिघारयेदेवमस्य[3] चतु-
रवत्तं भवत्यथ हैक आचार्या एकादश धर्मान्पशुबन्ध उत्सा-
दयन्त्यग्न्यन्वाधानं व्रतोपायनं पृष्ठ्यां प्रणीतां याजमानमाज्य-
भागौ प्राशित्रं यजमानभागब्रह्मभागौ चतुर्धाकरणं विष्णु-
क्रमानिति । कियन्नु खलु पशुबन्धे दर्विहोमा दृष्टा भवन्तीति ।
I. 122. 17. षड्ढोता यूपाहुति स्तोक्या दिशांप्रतीज्यौपयज इति । किंदे-
I. 124. 7. वत्या उ खलु मनोता भवतीत्याग्नेयीत्येव ब्रूयात्किंदेवत्य उ
खलु वनस्पतिर्भवतीति । वैष्णव इत्येव ब्रूयाद्विज्ञायते वैष्णवा
वै वनस्पतय इत्यथाप्युदाहरन्ति यज्ञो वै विष्णुरित्यथायं

---

१ पुरो॰ Ben G (sec. m.), पौरो॰ the other MSS.

२ Thus U H Be G ; संयुयादेवं Be, संयुत्यादेवꣳ C.

३ ॰मत्र Ben U (pr. m), D C.

पशुः सार्वत्रैष्टुभो भवत्येकादश प्रयाजा एकादशानूयाजा एकादशकपालः पशुपुरोडाश एकादशावदानान्येकादशोपयाजा इत्येवं पशुः सार्वत्रैष्टुभो भवति । यथो एतच्छालीकेः कल्प[१] वेदयन्ते ऽरण्योरग्नीन्समारोह्योद्वसेत्[२] चेत्तत्र चेष्टन्तमादित्यो ऽभ्युदियात्कथं तत्र प्रायश्चित्तꣳ सिध्यती३[३] न सिध्यती३[३] इति । सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति । यज्ञाभिपरीत एष[४] आकाशो भवति । नैव सिध्यतीतीन्वा[५] अयं पशुः सार्वत्रैष्टुभो व्याख्यातः । ॥ ३७ ॥

**एकोनविंशः ॥**

अथातः काम्यान्पशून्व्याख्यास्यामः । को नु खल्वेषामुपांशु भवतीति । य एवाश्वमेधिकाः प्राजापत्याः सावित्राः सारस्वताः पौष्णा याम्याः पितृदेवत्या द्यावापृथिव्या वायव्याः सौर्या वैश्वकर्मणा इति । गर्भिण्यो भवन्तीति कथमत्र प्रायश्चित्तꣳ सिध्यती३ न सिध्यती३ इति । सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीत्येतत्सम्बद्धा एता भवन्ति । नैव सिध्यतीत्यादित्यां मल्हां गर्भिणीमालभत इत्यृषिनामधेयमेवैत-

---

१ The kalpa of S'āliki here alluded to I have not traced in our Dvaidhapraśnas; the prāyaścitta is, according to the Vivaraṇa, the one treated of in XIV. 24 init.

२ Thus G (sec. m.) Be; ०समारोप्यो० the other MSS.

३ Pluti signs not given by all the MSS. here and infra.

४ एष om. H Ben C.

५ सिध्यतीतीवा H, सिध्यतीतिन्वा (or वा) or सिध्यतिन्वा the other MSS.

ह्वत्यपन्नदती[1] भवतीत्यहीनदतीत्येवेदमुक्तं भवत्यथेयं दशर्षभा संवत्सरमभि विहिता[2] । प्राजापत्य[3] एवैषां कद्रुर्दशमो भवतीति[4] । कथमत्र ब्रह्मचर्यꣳ सिध्यती३ न सिध्यती३ इति । सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति । संतिष्ठते । नैव सिध्यतीति । पर्यारिणी भवतीति । परिहारसूरित्येक आहुरथ हैक आहुरनुजैवैषोक्ता भवति । वेहदित्येतामाचक्षते । ॥ ३८ ॥

सोमापौष्णं त्रेतमालभेतेति । त्रयाणामेवैष उक्तो भवत्यथाप्युदाहरन्ति यस्तिस्रो धयतीति । त्वाष्ट्रं वडबमालभेतेति । यमेवैतं पुमाꣳसꣳ सन्तमधिरोहति स वडबो । विषम आलभेतेति । देवयजनं[5] वा विषमꣳ स्याद्यस्मिन्वा पशुमालभेतापां चौषधीनां च सन्धावालभत इत्युदकान्त इत्येक आहुरथ हैक आहुः प्रावृषि वा शरदि वेति । यस्याश्विने शस्यमाने सूर्यो नाविर्भवति सौर्यं बहुरूपमालभेतेति । प्रायणीये चेदतिरात्रे न दृश्येतारम्भणीयस्याहुः सवनीयस्योपालम्भ्यं

---

१ Uncertain; इत्यृषीनाम॰ Be, इत्यृषिनाम॰ Ben C G D, इत्युषिम॰ H, इत्यृष्टिनाम॰ U (pr. m.), इत्यृदष्टिनाम॰ U (sec. m.). Read perhaps इत्यृषीनामधेय॰ ?

२ Thus Ben C D G (pr. m.), विहिताः Be U H G (sec. m.).

३ Thus Ben C U D G (pr. m.), ॰पत्या Be H G (sec. m.).

४ इति only in Be.

५ Before देव॰ all the MSS. exc. Be ins. यद्द or य ।

कुर्यादथ चेदुदयनीये ऽतिरात्रे न दृश्येतैकाह्निके वानूबन्ध्यस्योपालम्भ्यं कुर्युरपि वोदवसायैवैतेन पशुना यजेरन्नितीन्वा[१] दृमे काम्याः पशवो व्याख्याताः ॥ ३९ ॥ विंशः ॥

॥ इति चतुर्विंशः प्रश्नः ॥

१ ०तीन्वा some of the MSS. ; इति इन्वा Viv.

III. 69. 2. कथमु खलु यावज्जीवप्रयुक्तानां चातुर्मास्यानामनुप्रयोगो
भवतीति । फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां शुनासी-
रीयपर्वणा यजेताथ वैश्वदेवायोपवसेद्वैश्वदेवेनेष्ट्वा पौर्णमास-
वैमृधाभ्यां यजेताथ चेदिष्ट्या पशुना सोमेन वा यजेत कथं
तत्र कुर्यादिति । प्रतिक्रम्यैतस्य पर्वणः शुनासीरीयपर्वणा
यजेताथैतेषामेकेन यजेताथ वैश्वदेवायोपवसेद्वैश्वदेवेनेष्ट्वा पौर्ण-
ib. मासवैमृधाभ्यां यजेतेति । यथो एतद्बौधायनस्य कल्पं वेद-
यन्ते यावज्जीवप्रयुक्तान्येव चातुर्मास्यानि स्युरन्तर्मिथुनानि ।
प्रथमे त्वेव संवत्सरे व्रतं चरेदिति कथमत्रेष्टिपशुबन्धा इति ।
काममिष्ट्या कामं पशुबन्धेनेति । क्व उ खलु चातुर्मास्यानि
समासं गच्छन्तीति । राजसूये च चातुर्मास्येषु च सोमेष्वित्येव
ब्रूयादथाप्युदाहरन्ति द्वादशाहे ऽपि चातुर्मास्यैर्यजेत । वैश्व-
देवेनेष्ट्वा[1] चतुर्थ्यां वरुणप्रघासैरष्टम्यां च[2] नवम्यां च साक-
मेधैर्द्वादश्यां शुनासीरीयपर्वणा यजेतेति । विज्ञायते संव-
I. 130. 5. त्सरप्रतिमा वै द्वादशरात्रयो भवन्तीति । त्रिवृद्बर्हिर्भवतीति ।
तूष्णीकानि ह्यन्तराणि भवन्तीति मन्त्रवदु[3]ह[3]वाह्यमेतदेव[3]
I. 134. 3. सदन्यत्रेष्टिसंनिपाते[3] विपरीतं भवतीति । क्व उ खलु करम्भ-

---

१ Before वैश्व॰ D G U C ins. प्रथमायां, which, strictly spoken, is superfluous.

२ च om. U G D Ben C and Rudradatta on Āp. VIII. 1. 2; it is found in Be H and the Vivaraṇa.

३ Thus G; D Ben (pr. m.) U (pr. m.) C present the same reading, leaving out only ह; U (sec. m.) Ben (sec. m.) Be ins. एतद्‌: between मन्त्रवदु and उ; H reads as G, only ॰तदेवताह्यदन्यत्रे॰; Ben ॰वदेतदुह्यान्यमेतदुपसदन्यत्रे॰, Be: ॰वदेदतदुह्वान्यमेतदुपसदन्यत्रे॰ ।

पात्राणि प्रथमं मन्त्रं लभन्त इति । प्रोक्षण[1] इत्येव[1] ब्रूयात्सह
हविर्भिः करम्भपात्राण्यभिपर्यग्नि कुर्यात् । किंदेवत्यानि नु खलु
करम्भपात्राणि भवन्तीति । वारुणानीत्येव ब्रूयाद्विज्ञायते
ऽन्यमेव[2] वरुणमयजत इत्यस्तं प्रेत सुदानव इति गृहान्प्रेक्षे-
II. 72. 1. तेत्येवेदमुक्तं भवति । तौ व्यतिचारं स्तम्बयजुषी हरेयाता-
मितश्चामुतश्च[2] यन्तं[3] प्रतिप्रस्थाताध्वर्युं परिगृह्णीयात्सह[4] निरु-
प्तस्य प्रतिप्रस्थातापो निःषिच्याध्वर्योराज्यस्य[5] वाचयेदथेध्मयो-
रतिप्रणयनादादायाध्वर्युः स्वमिध्ममपक्रम्यैव तिष्ठति । ॥ १ ॥

अथायं प्रतिप्रस्थातान्तरेणेध्मं[6] चाहवनीयं चोपातीत्य
स्वमिध्ममाददीत । तावपसलैः[7] पर्यावृत्येध्मौ हरेयातामथा-
मुतः[8] प्रदक्षिणमावृत्येध्मौ प्रतिष्ठाप्यैतेनैव यथेतमेत्य प्रतिनि-

---

१ Thus Be G (sec. m.), the Viv.; प्रोक्षणप्रभृतीन्येव U G (sec. m.) Ben H, प्रोक्षणप्रभृत्येव D, प्रोक्षप्रभृत्येव C.

२ Thus all, cp. the Calcutta edition of TS, vol. II, p. 41, l. 5 from bottom (TBr. I. 6. 5. 4 ? ).

३ °श्चायंतं Be G U (pr. m.).

४ Thus G U (sec. m.) and the Viv.; प्रनिरु° D C U (pr. m.) Be Ben ; H om. the prepos. ; cp. Āp. VIII. 5. 12.

५ °ध्वर्युरा° H Ben (pr. m.).—After आज्यस्य C D Be G U (pr. m.) ins. च, U (sec. m.) चार्धं ।

६ Thus Ben H U (sec. m.) and the Vivaraṇa ; °स्थातोत्तरेण Be G C U (pr. m.) D.

७ Thus G U C and the Viv., the other MSS. om. तौ ।

८ परिहरेयाताम° U (sec. m.).

वेष्टयते प्रतिप्रस्थातान्तरेण वेदी प्राचीनमुपयमनीहारो[1] ।
ऽथेमा अध्वर्योः प्रोक्षणी दक्षिणेन प्रतिप्रस्थातारं परिगृह्या-
138. 4. सादयेदेवमेताभिरनभिपरिहृतो भवत्यथेयं[2] मारुती दक्षिणां
वेदिं गच्छति सप्तमी[3] हविषामधिश्रीयते[3] । कथमेतयाव्य-
वेतानि भवन्तीति । प्रतिक्रम्यैनामग्रेण दक्षिणेन[4] हवींष्य-
नभिघारितामुद्वासयेदथैनां पुनरधिश्रित्याभिघारितामुद्वा-
स्यान्तर्वेद्यासादयेदेवमेतान्यव्यवेतानि भवन्त्यथायं प्रतिप्रस्थाता
मारुत्यै दैवतस्य सकृदेवानुवाचयेत्सकृदाश्रावयेदथान्यत्राध्वर्योः
कृतानुकारो भवतीति । तद्यदिहाश्रावयतीह[5] यजतीति
तत्प्रतिप्रस्थाता कृतानुकार एव भवत्यथेदं मारुत्यै मेक्षण-
73. 3. मग्रेणोत्तरवेदिकमग्निं[6] परिगृह्यानुप्रहरेद्यथो[7] एतदौपमन्यवस्य

---

१ Thus G U C D, °यमनिहारो the other MSS.

२ इति after भवति ins. D U Ben C.

३ Uncertain reading and meaning, the Vivaraṇa of this passage is missing. G (sec. m.) reads as given above; सप्तम्यस्र हविषामधिश्रि° Ben (pr. m.) C, सप्तम्या हविषामधिश्रि (or श्र)यते Be U (sec. m.) Ben (sec. m.) G (pr. m.), सप्तयस्यविषधमिश्रयते H.

४ Instead of दक्षिणेन (thus G, Ben sec. m. Be) दक्षिणा U (sec. m.), दक्षिणानि C Ben (pr. m.) U (pr. m.) H D.

५ Thus Ben (sec. m.) G (sec. m.), the last MS ins. इति also after °श्रावयति) H (only °वयतिइह) and the Viv. (reading यदी°) : तद्यदाहा° Ben (sec. m.), तद्यदाश्रावयतीह Be, तद्यदिहाश्रावयतीति तत्-प्रतिप्रस्था° C.

६ °ग्रेणोत्तर° Be H.

७ पर्याहृत्यानु° U (sec. m.).

कल्पं वेदयन्ते तुषैश्च निष्कासेन चावभृथमवेयादिति दैवतं प्रदाय स्विष्टकृतं प्रयच्छेत्तुषान्संप्रकीर्योदकान्तं प्रत्यस्येत्सिद्धमत
I. 141. 18. ऊर्ध्वमथायं गृहमेधीय आज्यभागप्रतिपत्केडान्तः[1] संतिष्ठते
I. 74. 10. तत्र नास्ति प्राशित्रं तूष्णीं [2]समन्तान्काकलान्परिधीनग्ना-
I. 143. 18. वनुप्रहरेदभिवान्यायामविद्यमानायां संधिनीक्षीरं दोहये-
दिति ॥ २ ॥ प्रथमः ॥

I. 143. 17. अथायं महापितृयज्ञस्तस्य कः कर्मण उपक्रमो भवतीति बर्हिर्यजुषा कुर्याद्देवानां पितृणां परिषूतमसि देवपितृबर्हिर्मा त्वान्वङ्मा तिरश्चपर्व ते राध्यासमित्यपहतो ऽरक्षः पृथिव्यै देवपितृयजन्या इत्यपहतो ऽरक्षः पृथिव्या अदेवपितृयजन इत्येवमेतेष्वधिकरणेषु कुर्याद्यत्र देवाश्च पितरश्च संनिगच्छेयुः पाणी संमृशीत परिस्तृणीयात्पात्राणि निर्णिज्य संसादयेद्ब्रह्माणं दक्षिणत उपवेश्यात्रैवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यं स्फ्यं निदध्यात्स्फ्योपरि[3] पात्रीं पात्र्यां व्रीहीनावपेच्छूर्पादानप्रभृति कर्मान्तस्तायत आप्यान्तो जघनेन
I. 147. 4. गार्हपत्यमाप्येभ्यो निनयेद्द्विपरिक्रामन्त्येत ऋत्विजो ऽध्वर्युरनन्तरो ऽग्नेः स्यादथ यजमानो ऽथ ब्रह्माथाग्नीध्रो ऽपि

---

१ Thus G U D Ben C, °त्केडांत Be, °त्कडांता H; read °प्रतिपत्क इडान्तः ?

२ Thus (and cp. XXI. 3 : 74. 10) Ben U H, °ककला° D C, °कालाका° G (sec. m.) Be.

३ निधाय instead of निदध्यात् Ben U (sec. m.).

वाग्नीध्र एवानन्तरो ऽग्नेः स्यादथ यजमानो ऽथ ब्रह्माथाध्वर्यु-
ib. विपरिहरन्ति हवीꣳष्यग्रेण पुरोडाशं धाना जघनेन धानाः
करम्भमित्येवं विपरिहृतानामेवैतेषाꣳ हविषामेकैकमुद्वास-
येत् । क उ खलु त्रैयम्बका निरुप्यन्त इत्युद्वास्य हवीꣳषि
रुद्रायाम्बिकायै जुष्टं निर्वपामीति यस्य मन्त्रवन्तः । कायेति
कायं निर्वपेत्कायानुब्रूहीत्यनुब्रूयात्कं यजेति यजेत् । क उ खलु
I. 153. 1. त्रैयम्बकाणाꣳ स्विष्टकृतं भवतीति । यदेवातो मूत आस-
जतीत्यसमुदित ऋषभं ददातीति[१] । महाहविषामेवैषो ऽसमु-
दिते[२] दातव्यो भवति । सर्वमेव याजमानं पितृयज्ञ उत्सौ-
देत्यपशुबन्धे सौम्ये ऽध्वरे ऽन्यत्रतत्रोत्पत्तिवचनात्सर्व[३] एवाग्नि-
र्याजमानो ऽग्निचये सर्वमेवाग्न्याधेयच्छन्दो[४] याजमानमग्न्या-
धेये । ॥ ३ ॥ द्वितीयः ॥

I. 156. 1. अग्निष्टोमेन यक्ष्यमाणः प्रज्ञमात्मानं कुर्वीत । येनास्या-
कुशलꣳ[५] स्यात्तेन कुशलं कुर्वीत । यान्यृणान्युत्थितकालानि
स्युस्तानि व्यवहरेदनुज्ञापयीत वा । स पुरस्तादेवोपकल्पयते

---

१ इति om. Ben H.

२ Emended; समुदितो MSS.

३ Thus U Ben C D H; न्यत्तचोत्पत्ति° G and the Viv.; न्यत्तचोत्स-पत्ति° Be.

४ Thus G U (sec. m.) and the Viv.; °धेयंछंदसो H Ben D C, °धेयच्छंदसो Be.

५ Thus (and cp. XXIV. 12: 195. 8) Be D U C, °स्याऽकुशलं G, °स्यकुशलं Ben H.

I. 156. 6. प्रभूतं तृणवꣳशं पश्चाज्यꣳ स्थाल्यमत्रं कुम्बं च कुरीरं चेति। विदलमु ह कुम्बं भवति जालमु कुरीरं। द्वादशशतं दक्षिणानां। विज्ञायते छन्दोगब्राह्मणं वीरहा वा एष देवानां यः सोममभिषुणोतीति। शतेन वीरं निरवदयते। दशभिर्दश प्राणान्। यैकादशी तयात्मानं। यैव द्वादशी सा दक्षिणेत्यथ[1] हैक एकविꣳशतिदक्षिणेन यजन्त एकविꣳशं यज्ञायज्ञियमिति वदन्तो। ऽथ हैके सप्तगुना यजन्ते सोमक्रयण्यतिथिगव्यनूबन्ध्याश्वतस्रो[2] मध्यतस्तदपि दाशतये[3] विज्ञायते प्र सप्तगुमृतधीतिं सुमेधामिति। ॥ ४ ॥

156. 9. अथातो देवयजनकल्पः। स एतद्देवयजनकल्पं जोषयते पुरस्तादुदकमनूषरमनुपह्वितमविस्रग्दार्यनिरिणमसुषिरमभङ्गुरमवल्मीकं[4] बहुलौषधि[4] यत्रान्या अन्या ओषधयो व्यतिषक्ताः

---

१ दक्षिणेत्यथ Be Ben (sec. m.). On this passage cp. Pañc. br. XVI. 1. 12.

२ After ०गव्य० G ins. (on the margin), ०व्यं चेत्य, thus also the Vivaraṇa.

३ See Ṛgveda X. 47. 6.

४ ०नुपह्वितम० Be G (sec. m), the Viv.; ०नूपह्वितम० the other MSS.—०विस्रग्दार्यनि० G and one copy of the Viv.; ०बिह्रग्दार्यनि० Ben and another copy of the Viv.; ०विरंदार्यनि० U; these MSS. point to a reading ०विस्र(स्र)ग्दारि; ०विस्वग्दीर्यमनि० D, ०वि(पि)स्वग्दीर्य(र्य)मह्मण° Ben C H D; these MSS. point to a reading ०विस्रग्दार्यम्. Both readings occur equally in Baudh. pitṛmedha I. 4: 7. 14 (cp. Hir. pi. sū. I. 1: 33. 3). Gārgya Gopālayajvan comments: ०विस्रग्दारि यत्र विविधं दारणं प्रदरादिकं विदारणं न विद्य तदविस्रग्दार्यम्।—बहुलौषधि G U D C, the Viv.; ०षधी Be ०षधिकं Ben ०षधीकं H.

स्युः प्रागुदक्प्रवणं यथा चात्वालसारिणीरापः स्युर्नातिप्रवणं
यस्मादन्यत्पुरस्तात्समन्तिकं देवयजनं न विन्देयुस्तदेतां प्राची-
नवꣳशाꣳ शालां मापयन्ति । कृत्तिकाः खल्विमाः प्राचीं
दिशं न परिजहति[१] । तासाꣳ संदर्शनेन मापयेदित्येतदेकꣳ ।
श्रोणासंदर्शनेन मापयेदित्येतदेकं । चित्रास्वात्योरन्तरेणेत्येत-
I. 156. 11. दपरं । दिक्स्रतीकाशा भवतीति[२] । द्वाभिरेवैषा[३] दिक्स्रती-
काशा भवत्यथाप्युदाहरन्ति[४] वꣳशानामेवातीकाशाङ्कुर्या-
दिति । द्वौ स्तोमौ प्रातःसवनं वहत इति[५] । त्रिवृत्पञ्चदशौ
प्रातःसवनं वहतः । पञ्चदशसप्तदशौ माध्यन्दिनꣳ सवनꣳ ।
सप्तदशैकविꣳशौ तृतीयसवनमेष एव सꣳस्तुष्टोमो भवति ।
चत्वारो हि स्तोमा भवन्त्येष एव सन्द्वादशस्तोमो[६] भवति ।
III. 88. 17. द्वादश हि[७] स्तोत्राणि भवन्ति । यथो एतदौपमन्यवस्य कल्पं
वेदयन्ते पुरस्तादेवैतत्त्रैविध्यगतेषु देवयजनमध्यवस्येद्विज्ञायते
सा वा इयꣳ सर्वैव वेदिरिति । ॥ ५ ॥ तृतीयः ॥
I. 159. 9. अथेममाग्नावैष्णवमेके प्रागपुदीच्याये ब्रुवत उपरिष्टाद्वा[८] ।

---

१ MSS., exc. H. ०जहंति (०जाह्नंति Be).

२ भवंतीति MSS., but दिक्स्रतीकाशा is adj., sc. शाला ।

३ ०वैषां MSS.

४ Thus (भवति) U only, भवंत्य० H, भवंतीत्य० all the other MSS.

५ See TS. VII. 1. 1. 1.

६ Thus C and the Viv., all the other MSS. unanimously ०स्तोभौ ।

७ Om. G U D C.

८ Thus Be G U D Ben (sec. m.); उपरिष्ठाद्वायं H Ben (pr.m.) and the Viv. one copy another, sec. m., originally reading उपरिष्ठादयं; the Viv. explains यथा कल्पे ।

क्व उ खलु दीक्षणीयायै बर्हिर्यजुषा कुर्यादिति ह्युपनिधाय[१]
I. 159. 10. संभारान्प्राक् पाणिसंमर्शनान्न यजमानं व्रतमुपनयति न पत्नीं
संनह्यतीत्यध्वरदीक्षायै व्रतं प्रणुदते । सर्वैवैषा व्रतोपायनीया
I. 159. 11. भवतीष्टिरग्रमु पत्नीसंनहनं । न यजमानभागं करोति न
ब्रह्मभागमित्याग्नीःसंयोजनावेवैतावुक्तौ[२] भवतः । किमुपक्रम-
माणो यज्ञमाग्निषं वदेदित्यथापि सुभिक्षो व्रतोपायनीयस्य
भवतीति । कस्मै[३] किं सुभिक्षायावद्येद्यजमानभागस्य खलू-
त्मादनाद्ब्रह्मभाग उत्सीदति । संयुक्तौ ह्येतौ यजमानभागब्रह्म-
I. 159. 12. भागाविति । न बर्हिषदं पुरोडाशं करोति नान्वाहार्यं याच-
तीति । दक्षिणोक्तावेवैतावुक्तौ[४] भवतो ऽन्या उ खल्विह
ib. दक्षिणाः प्रतिख्याता भवन्ति । न फलीकरणहोमेन चरति
न समिष्टयजुर्जुहोतीत्यन्तपरिक्रमिणावेवैतावुक्तौ[५] भवतः ।
I. 159. 13. किमुपक्रममाणो यज्ञमन्तं परिणयेदिति । न पूर्णपात्रे यज-
मानं वाचयति न विष्णुक्रमान्क्रमत इत्यवभृथोक्तः खलु पूर्ण-

---

१ Thus Be G (sec. m.) and the Viv. a. h. l. and as cited elsewhere; the prep. वि om. D U Ben H C.

२ Thus Be U (sec. m.) G (only ०वैवै०); एव H U (pr. m.), ०संयोजनाव--- D, ०संयोजनायैवैतावु० Ben and a citation by Sāyaṇa; ०संयोजनावैमानायु० C.

३ The Viv. seems to read तस्मै ।

४ Thus Be G U (sec. m.) Ben (sec. m.) and the Viv.; दक्षिणी-कार्याविवैतावु० Ben and U (pr. m.), दक्षिणैकार्यो एवैतावु० D, दक्षिणैकार्यो एवैतावु० C, तच्चगणोक्तादक्षिणैकार्याविवैतावु० H.

५ ०क्रमणावे० D C, ०क्रामिणावे० Be.

पाञ्चो भवत्यन्यः खल्विहावभृथः प्रतिख्यातो भवत्यन्तपरि-
क्रमिणो विष्णुक्रमाः । किमुपक्रममाणो यज्ञमन्तं परिणये-
दिति । ॥ ६ ॥

159. 18. द्वादश वात्सबन्धान्युदयच्छन्निति[1] । कतमानि खल्वि-
मानि वात्सबन्धानि भवन्तीत्येता एव स्रुवाहुतीरन्यत्र स्वाहा-
160. 10. कारादित्यथाप्युदाहरन्ति समानसंख्यानो ऽग्निर्ऋचि[2] तिस्रो
देवतास्तानि द्वादशाथेदं कृष्णाजिनं नौरुक्तं[3] भवत्याच्य जान्वे-
I. 163. 5. तत्याश्वेत एवाभिपर्येद्दक्षिणं प्रति रन्धं यथा नावं । नक्तं चेद-
मेध्यं पश्येदाहवनीयमेवैतेन यजुषोपतिष्ठेताथेमानि दैवानि
व्रतानि सायमुपक्रमाणि प्रातरपवर्गाण्यथौपसदानि प्रातरुप-
I. 164. 2. क्रमाणि सायमपवर्गाण्यथेदं[4] दैवं[4] व्रतं परिश्रित्यैव व्रतयेदा-
हवनीय एवैतत्पुराग्निहोत्रं हूयते स मानुध्यास्यतीति[5] ।
॥ ७ ॥ **चतुर्थः** ॥

---

१ See TS. VI. 1. 2. 5.

२ **ग्निर्ऋचि** G (sec. m.), **निर्ऋचि** Be, **ग्नीनिति** U (sec. m.), **ग्निनिति** C, **ग्निरिति** the other MSS.

३ See TS. I. 2. 2. e (last pāda).

४ Thus Ben (pr. m.) G (sec. m.), **॰थैतद्दैत्तं ॰थैतं दैवं** H C U D G (pr. m.) Ben (sec. m.).

५ Thus H, **समनुध्यास्यतीति** Be Ben, **स मानुध्यासीदिति** C U D G (pr. m.), **समनुध्यस्यासीदिति** G (pr. m.). The Vivaraṇa seems to have read as C, etc.: **स आहवनीयोऽनुध्यासीत् चात्मीयमन्यत्र हूयमानं दृष्ट्वेति**, but we expect a future: 'if the Āhavanīya sees that I offer somewhere else, it will... .'

I. 167. 3. अथायं प्रायणीयस्।तस्य कः कर्मण उपक्रमो भवतीति ।
बर्हिर्यजुषा कुर्याद्यदि पुरस्ताद्यजुष्कृतꣳ स्यात्।पाणी संमृशीत ।
परिस्तृणीयात्।पात्राणि निर्णिज्य सꣳसादयेद्।ब्रह्माणं दक्षिणत
उपवेश्यात्रैवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यꣳ स्फ्यं
निदध्यात्स्फ्योपरि पात्रीं । पात्र्यां व्रीहीनावपेच्।छूर्पादानप्रभृति
कर्मान्तस्तायत आ प्रस्कन्दनात्।प्रस्कन्दनान्तं कर्म कृत्वाहवनीये
स्रुवाहुतिꣳ हुत्वोपनिष्क्रम्य संप्रैषमुक्त्वाभिप्रपद्य तिरः पवित्रमप
आनीयाधिश्रित्य तिरः पवित्रं तण्डुलानावपेद्।अथाज्यं निर्वपे-
द्।अथाज्यमधिश्रयेद्।उभयं पर्यग्नि कृत्वा स्फ्यहस्तः प्राङेत्य स्तम्ब-
यजुर्हरेत्।त्रिरुद्धमत ऊर्ध्वꣳ । शंय्वन्तः[1] प्रायणीयः संतिष्ठते ।
को नु खल्वस्य कर्मणो ऽवशेषो भवतीत्या। स्रुचां विमोकान्न
चरुहविषामाप्यनिनयनं विद्यत इति[2] । स्थालीभिस्त्वेव चरूं
I. 169. 20. निर्वपेदिति नु[3] बौधायनस्य कल्पः । किंदेवत्या उ खलु
पदाहुतिर्भवतीत्या।ग्नेयीत्येके । वैष्णवीत्येके । प्राजापत्येत्येके ।
I. 172. 19. वाग्देवत्येत्येव[4] ब्रूयात्कृष्णायोर्णास्तुकया सोमविक्रयिणमन्तरेण
I. 172. 15. भ्रूमके[5] विध्यति । राजानं प्रत्यपोर्णुते यजमानः ॥ ८ ॥

---

१ शंयुवंतः G D C U (pr. m.), शंयवतः Be.

२ Effaced in G.

३ Om. Be H.

४ Thus H, °देवतेत्येव the other MSS.

५ Thus G U (sec. m.) and the Viv. (both copies); भ्रमेके Be, भ्रूमध्ये Ben H Keś., भुवोर्मध्ये C D; cp. Baudh. gṛhs. I. 1: अथै-नामन्तरेण भ्रूमके दर्भेण संमार्ष्टि ।

वयः सुपर्णा उपसेदुरिन्द्रमित्येतयाथ यदि न सोमविक्रयी
स्यादग्रेण यूपावटकालं पलाशशाखां निहत्य समुपनह्य राजानं
पलाशशाखायाꣳ समासज्योपासीताथ यदि कश्चित्प्रसवसंयुक्तं
व्याहरेत्क्षिप्रमिति वा त्वरध्वमिति वा कुरुतेति वा[1] तद्राजा-
173. 19. नमाददीत । न संवादा आवर्तेरन्स सोमविक्रयी स्यादथेयं
174. 14. प्रथमा सुब्रह्मण्योंकारान्तैवैषोक्ता भवत्यथायमातिथ्यस्तस्य कः
कर्मण उपक्रमो भवतीति । बर्हिर्यजुषा कुर्याद्यदि पुरस्ता-
दयजुष्कृतꣳ स्यात्पात्राणी संमृशीत । परिस्तृणीयात्पात्राणि
निर्णिज्य सꣳसादयेद्ब्रह्माणं दक्षिणत उपवेश्य दक्षिणमनड्वाहं
विमुच्यात्रैवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यꣳ स्फ्यं
निदध्यात्स्फ्योपरि पात्रीं । पात्र्यां व्रीहीनावपेच्छूर्पादानप्रभृति
कर्मान्तस्तायत आ प्रस्कन्दनात्प्रस्कन्दनान्तं कर्म कृत्वोत्तरमन-
ड्वाहं विमुच्य राजानं प्रपादयेत्सिद्धमत्राग्निष्टोमिकं[2] कर्म
175. 19. जानीयादा संप्रैषात्कृष्णाजिनावधवनेनैवातिथ्यं[3] प्रतिपद्यते ।
सिद्धमत ऊर्ध्वम् । ॥ ९ ॥ पञ्चमः ॥

स दर्भपुञ्जीलमुद्गृह्येति । कतरन्नु खल्विदं दर्भपुञ्जीलं
भवतीति । यदेवैतद्ग्रोदानयोर्निदधातीति ॥ सप्त गिरीन्भि-
त्त्वेति । कतमे नु खल्विमे गिरयो भवन्तीति । प्रयाजानू-

---

१ वेति or वोति MSS. exc. H ; om. C.

२ ०ष्टौमिकं G U D C.

३ ०धवने० G and the Viv. ; ०यवने० Be, ०यवतिने० Ben, ०धूनने० D U C.—०तिथ्यं G, ०तिथ्य Be, तिथ्यस्य the other MSS.

याजा[1] एवैता उक्ता भवन्तीति दीक्षणीयायाः प्रायणीयाया
आतिथ्याया अग्नीषोमीयस्येत्यथाप्युदाहरन्ति[2] दीक्षणीया प्राय-
णीयातिथ्योपसदो ऽग्नीषोमीयः सप्तम इति ॥ यज्ञो देवेभ्यो
निलायतेति । कतमो नु खल्वयं यज्ञो भवतीति । य एवैष
इडान्त आतिथ्यः संतिष्ठते ॥ तं देवा हस्तान्सꣳरभ्यैच्छन्निति ।
यदेवैतत्तानूनप्त्रꣳ समवमृशन्तीति[3] ॥ तमिन्द्र उपर्युपर्यत्यक्राम-
दिति । यदेवैतदुपसद्भिश्चरन्तीति ॥ तमेभ्यो यज्ञ एव यज्ञ-
माहरदिति । कतमो[4] नु खल्वयं यज्ञो यज्ञमाहरदिति[4] ।
दीक्षणीया प्रायणीयातिथ्यैष एव यज्ञो यज्ञमाहरदिति[5] ॥
वराहो ऽयं वाममोष इति । सुत्यमह्नां वर्षिष्ठं । तद्यजमानं
वामं वसु मुष्णातीति ॥ के नु खल्वातिथ्यस्यानूयाजा[1] भव-
न्तीत्युपसद इत्येव ब्रूयात्किंदेवत्या उ खलूपसदो भवन्ती-
I. 178. 19. त्याग्नेय्य इत्येव ब्रूयात्कथमु खलूपसदामुपक्रमो भवतीति ।
बर्हिर्यजुषा कुर्याद्यदि पुरस्तादयजुष्कृतꣳ स्यात्पाणी संमृशीत ।
परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेन्मदन्तीः सꣳस्कृत्य
पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्फ्यहस्तः
प्राङेत्य स्तम्बयजुर्हरेत्सिद्धमत ऊर्ध्वं । यथा प्रकृत्यासेवं प्रथ-

---

१ ॰नुयाजा MSS.

१ ॰षोमीयस्य चेत्यथा G U (sec. m.).

३ सम् found in Be G U D C only.

४ From कतमो unto ॰माहरदिति missing in G H ; इति missing in Ben C Be D U.

५ इति missing in G;U C.

मायामुपसदि स्रुचः सादयेदभ्यूढा द्वितीयस्यामभ्यूढतरास्तृती-
यस्याꣳ[1] । संत्वरमाणा इवोपसद्भिः प्रचरेयुर्नाकृतमाद्रिये-
रन्संमग्राङ्गुलिः[2] स्रुवमादायाग्निवोपसदं जुहुयादिति ।
॥ १० ॥ षष्ठः ॥

क उ खल्वग्नीषोमीयस्य बर्हिर्यजुषा कुर्यादित्युदास्य
I. 188. 13. प्रवर्ग्यं प्रागाहवनीयस्य प्रणयनात्संवनीयेभ्यश्च वत्सानुपाकुर्या-
द्यवच्छिन्न आहवनीये गार्हपत्ये पदद्वतीयमुपवपेदेवमुपय-
I. 183. 14. मनीष्वथेयमौदुम्बरी[3] स्थूणा यजमानेन संमिता कार्या
भवत्यथायं यूपो यजमानस्यारत्निभिर्विमितो भवति ।
सर्वोपर[4] इत्येके[4] । ऽन्तो हैवैतानि[5] कुर्याद्यूपावटं तु[6] परि-
I. 194. 11. लिख्य पाणी संमृज्यीत । परिस्तृणीयात्पात्राणि निर्णिज्य
सꣳसादयेत्प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्या-
धिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि । ता उत्तरवेदिꣳ
हरन्ति प्रोक्षणीश्चाथ प्रतिप्रस्थाता पत्नीमभिसंनह्यत्यौरोढा-

---

१ ॰ढतरास्तृ॰ H Ben U Be; ॰ढतरांल्ह॰ G, ॰ढतराह्न॰ D C.

२ Thus G D Ben CU (pr. m.), ॰मग्रांगुलि Be, ॰मग्रंगुलीभिः U (sec. m.). H defective. The Viv.: परिगृहीतमूलं प्रस्तरमादाय ।

३ Between उपवपेदेवम् and उपयमनीषु H Ben ins. रश्मम्, not G U Be D C.

४ Conjectural reading; सर्वोपर इत्येके G C Be U, सर्वोपरेत्येके Ben, समोपर इत्येके H, ससोमपर इत्येके D; सोपर इ॰ the Viv.

५ हैवैनानि all the MSS., with त॰ the Viv. (one copy) = वक्ष्यमाणानि ।

६ om. H.

ग्निकेनाथैनां गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाज्येनाद्रवेत्यंत्वा[1] तदवेक्षितमुपयच्छीत[2] तेजो ऽसीत्यथैनच्छकलेनोपयत्य हरेत्तेजो ऽनु प्रेहीत्यथैनदाहवनीये ऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनद्धृत्वोत्तरेण प्रोक्षणीः सादयित्वावेक्षतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः। प्रसिद्धमाहवनीयसकाशे
III. 97. 11. पृषदाज्यवन्त्याज्यानि गृह्णीतेति सिद्धमत ऊर्ध्वं। यथो एतच्छालीकेः कल्पं वेदयन्ते पत्नीशाल एवाग्नीषोमस्याज्यानि गृह्णीयात्तानि खरे सादयेदिति। समन्वानीय वासमन्वानीय[3] वा पुराणगार्हपत्यं पाणी संमृशीत। परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेत्प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि। ता अत्रैव सह सꣳसादयन्ति प्रोक्षणीश्च। न[4] प्रतिप्रस्थाता पत्नीमभिसंनह्येत्पौरोडाशिकेन[5]। नैनां[5] गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाज्येनाद्रवेत्यंत्वा तदवेक्षितमुपयच्छीत तेजो ऽसीत्यथैनच्छकलेनोपयत्य हरेत्तेजो ऽनु प्रेहीत्यथैनद्गार्हपत्ये ऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनद्धृत्वोत्तरेण प्रोक्षणीः

---

१ ॰नोद्रवे॰ instead of ॰नाद्रवे॰ G here and infra l. 14. Is उद्वेत् the better reading?

२ Thus here and l. 14 G Be D C Ben U (sec. m.), ॰यच्छेत H U (pr. m.).

३ Only given by G U (sec. m.).

४ Thus G U D Be, C H Ben om.

५ Thus Be C only, the other MSS. om. न reading ॰डाशिकेनैनां।

सादयित्वावेक्षेतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः प्रसिद्धं गार्हपत्यसकाशे पृषदाज्यवन्त्याज्यानि गृहीत्वा ॥ ११ ॥

I. 194. 17. परिकर्मिभ्य उत्प्रदाय ब्रह्मणे राजानमुत्प्रयच्छेत्संप्रच्छन्नेषु स्रुवाहुती[1] जुहुयात्संप्रच्छन्नास्त्वेव गच्छेयुराहवनीयाद्राजा दक्षिणार्ध्यः स्यादथाग्निरथ ग्रावोवायव्यान्युत्तरार्ध्यान्याज्यान्यपि वाग्निर्दक्षिणार्ध्यः स्यादथ राजाथ ग्रावोवायव्यान्युत्तरार्ध्यान्येवाज्यानि । पूर्वया द्वारोपनिष्क्रम्योत्तरेण सदः परीत्याग्नीध्रागारे ऽग्निं निधायाभिहृत्य प्रोक्षणीहस्त उत्तरेणाग्नीध्रीयं धिष्ण्यं प्रतिपद्यते[2] । ऽन्वञ्च आज्यैराहवनीये हुत्वेध्मं प्रोक्ष्य वेदिं प्रोक्ष्य बर्हिः प्रोक्ष्य बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृहीत्वा पञ्चविधं बर्हि स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिधायोर्ध्वे समिधावभ्याधाय बर्हिर्मुष्टिं विधृती प्रस्तरमित्येतत्समादाय प्रदक्षिणमावृत्य पूर्वया द्वारा हविर्धानं प्रपद्योत्तरार्धे खरस्य बर्हिर्मुष्टिꣳ स्तृणीयाद्बर्हिषि विधृती । विधृत्योराश्ववालं प्रस्तरं । प्रस्तरे जुहूं । बर्हिषीतरा । एता असदन्निति समभिमृश्याप उपस्पृश्य ब्रह्मणो राजानमादाय पूर्वया द्वारा हविर्धानं

---

१ स्रुवाहुतीर्जु॰ MSS., but cp. the Viv.: त्वं सोम जुषाण इति (TS. I. 3. 4. *a* and *b*).

२ प्रतिपद्यते Be G U D C, प्रतिपद्यंते Ben, ॰थप्रतिपद्यंते H.

प्रपादयेदात्मानमभिपरिहरमाण[1] इव । छिद्रमत ऊर्ध्वम् ।
॥ १२ ॥ सप्तमः ॥

क उ खलु स्विष्टवदिध्माबर्हिरपवर्गं गच्छतीत्यग्नीषोमीय
इत्येव ब्रूयात्क उ खल्वग्नीषोमीयः सुत्यमहरनुसमेतीति ।
सद्यस्क्रियामित्येव[2] ब्रूयात्क उ खलु प्रवर्ग्यः सुत्यमहरनुसमे-
तीति । सद्यस्क्रियामित्येव[2] ब्रूयात्का उ खलु देवता
सुब्रह्मण्या प्रथमाह्वयत इति । वागेव वाचमाह्वयतीति । क
I. 197. 2. उ खलु पितापुत्रीया[3] सुब्रह्मण्या प्रथमाह्वयत इत्यग्नीषोमी-
यस्य कृतायां वपायां परिहृतासु वसतीवरीषु द्वितीया ।
प्रातरनुवाके तृतीया । दक्षिणानामु ह काल एक आह्वयन्ती-
I. 197. 8. त्यथ यो दीक्षितः कुम्भस्तं याचतीति दृढ इत्येवेदमुक्तं
I. 198. 17. भवति । पयश्च सक्तूंश्च कुरुतेति अयणार्थ एवैते उक्ते
I. 199. 1. भवतश्चतस्रो रशनास्तिस्रो वपाश्रपण्यौ द्वयमिध्माबर्हिरिति
सवनीयस्य चानूबन्ध्यस्य चैतानि भवन्ति । कास्तत्र स्थाली-
र्वायव्याः सोमग्रहणीरित्यादित्यस्थाल्युक्थ्यस्थाल्याग्रयणस्थाली
ध्रुवस्थालीत्यथेमानि द्वादशोर्ध्वपात्राणि भवन्ति दधिग्रहपात्र-
मपांश्वन्तर्यामयोर्द्विदेवत्यानां शुक्रामन्थिनोर्ऋतुपात्रे आदि-

---

१ Thus Ben C Be G D U (sec. m.); ॰त्मानमपरिह॰ H, ॰त्मानमनभिपरिह॰ U (pr. m.).

२ Thus Ben C G (sec. m.) U (pr. m.); ॰स्क्रियायामित्येव H Be U (sec. m.).

३ ॰पुत्रिया G U.

त्यस्थाल्या औपशयं पात्रमुक्थ्यस्थाल्या औपशयं पात्रमथैम एकादश चमसा भवन्ति यजमानस्य ब्रह्मणो होतुरुद्गातुर्मैत्रावरुणस्य ब्राह्मणाच्छंसिनोऽच्छावाकस्य सदसस्याग्नीध्रः पोतुर्नेष्टुरिति । तेषां त्सरूणि सरूपाणि कारयेन्नैयग्रोधानां । विज्ञायत उत्तरस्यां[1] ततौ[1] यदत्सरुकैश्चमसैर्भक्षयन्ति न्यग्रोधचमसैरित्यैतस्मान्नैयग्रोधा एव भवन्ति । रश्मिरसि[2] स[2] इत्यदाभ्य एवैष उक्तो भवत्यधिपतिरसि स इति प्राजापत्य एष दधिग्रहो भवति । सारस्वतस्य मे पौष्णस्य[3] स[3] इति[3] वसतीवरीरित्येक आहुरथ हैक आहू राजसूयिक एष महाग्रहो भवति । पोषणाद्[4] ह[4] पौष्णो भवति ग्रहणाद्[5] सारस्वत इति । ॥ १३ ॥ अष्टमः ॥

I. 200. 5. II. 98. 16. अथेदं महारात्रिकं कर्म । तस्य कः कर्मण उपक्रमो भवतीति । हस्तपादान्प्रक्षाल्यान्तरेण चात्वालोत्करौ देवयजनमभि प्रपद्यन्ते । तेषां यथासंप्रैषं विहितानि कर्माणि भवन्त्यथाध्वर्युराग्नेय्यर्चाग्नीध्रमभिमृशेद्वैष्णव्या हविर्धानमित्यथोपरमत्यथैष आग्नीध्रः पूर्वः पत्नीशालं हुत्वाग्नीनुपसमाधाय

---

१ The first citation from the *uttarātatiḥ* seems XVIII. 21 300. 13, the second I have not been able to point out.

२ °रश्मस H ; Ben om. स ।

३ Thus G D U C, पोष्णस्य स H, पौष्णस्येति Ben, पौष्ण इति Be.

४ Thus G U ; पौषणाद्ध ह H D C, पोषणाद्धि Ben Be.

५ Thus emended ; ग्रहणात्तु G U Ben Be, ग्रहणान्नु C, ग्रहणानु D, ग्रहणात्व H.

संपरिस्तीर्य पात्राणि निर्णिज्य सꣳसाद्याज्यं विलाप्योपास्ते । ऽपरः[1] प्रतिप्रस्थाता प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि । ता उत्तरवेदिꣳ हरन्ति प्रोक्षणीस्त्वथाध्वर्युराग्नेय्यर्चा स्रुचो ऽभिमृशति । संमृष्टानि द्विधा पात्राण्यभिमच्छन्त[2] इति । वायव्यया वायव्यान्यैन्द्र्या[3] सदो । ऽथैष उन्नेता ग्रावोवायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षꣳ सꣳसादयत्युपकल्पयते प्रतिप्रस्थाता पृषदाज्याय दध्याग्नीध्र इध्माबर्हिरुपसादयत्यथ प्रतिप्रस्थाता पत्नीमभिसंनह्यत्यौरोडाशिकेनाथैनां गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाज्येनाद्रवेत्पत्न्या[4] तदेवेक्षितमुपयच्छीत[5] तेजो ऽसीत्यथैनच्छकलेनोपयत्य हरेत्तेजो ऽनु प्रेहीत्यथैनदाहवनीये ऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनदूल्वोत्तरेण प्रोक्षणीः सादयित्वावेक्षेतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः प्रसिद्धमाहव-

---

१ ऽपरः U (pr. m.), परः D C, श्वपरः Ben (pr. m.), ह्यपरः the other MSS. H. wholly corrupt.

२ Uncertain reading ०म्हच्छत Ben. ०म्हच्छंत G (sec. m.), °म्रचंत G (pr. m.), ०म्हच्छात Be C U, ०म्हम्रत D, ०म्हच्छंत D. The Viv. (one copy) ०मच्छ changed into ०म्हच्छ, and thus also the other copy.

३ ०येन्द्रिया G C.

४ ०नोद्रवे० again G.

५ ०यच्छीत G (sec. m.), U (pr. m.) D C Ben, ०यच्छेत G (pr. m.) Be H U (sec. m.).

नीयसकाशे पृषदाज्यवन्त्याज्यानि गृह्णीते । सिद्धमत ऊर्ध्वम् । ॥ १४ ॥

I. 98. 17. अथ शालीकैरेवमेवैषां यथासंप्रैषं विहितानि कर्माणि भवन्त्यथाध्वर्युराग्नेय्यर्चाग्नीध्रमभिमृशेद्वैष्णव्या हविर्धानमित्यथोपरमत्यथैव आग्नीध्रः पूर्वः पत्नीशालं हृत्वाग्निमुपसमाधाय संपरिस्तीर्य पात्राणि निर्णिज्य सꣳसाद्याज्यं विलाप्योपास्ते । ऽपरः प्रतिप्रस्थाता प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्ष्येदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि । ता आग्नीध्रꣳ हरन्ति प्रोक्षणीस्तायाध्वर्युराग्नेय्यर्चा स्रुचो ऽभिमृशति । संमृष्टानि द्विधा पात्राण्यभिमृश्यन्त[1] इति । वायव्यया वायव्यान्यैन्द्र्या[2] सदो । ऽथैव उन्नेता ग्रावोवायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षꣳ सꣳसादयत्युपकल्पयते प्रतिप्रस्थाता पृषदाज्याय दध्याग्नीध्र इध्माबर्हिरुपसादयति । न प्रतिप्रस्थाता पत्नीमभिसंनह्यत्यौरोडाग्निकेन[3] । नैनां[3] गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाज्येनाद्रवेत्यत्या[4] तदवेक्षितमुपयच्छीत[5] तेजो ऽसीत्य

---

१ ॰मृश्यंत Be G, मृश्यत U C, ॰मृशंत D; H and Ben. abbreviate this passage.

२ ॰न्यैन्द्रिया G U C, ॰न्यैंद्रीया Be.

३ Thus G (pr. m.) D Be C Ben; ॰केनैनां G (sec. m.) H; ॰केनाथैनां U (sec. m.).

४ ॰नोद्रवे॰ again G.

५ ॰यच्छीत all (H. abbreviates).

थैनच्छकलेनोपयत्य हरेत्तेजो ऽनु प्रेहीत्य।थैनदाग्नीध्रीये ऽधिश्रयेदग्निस्ते तेजो मा विनैदित्य।थैनदुल्लोत्तरेण प्रोक्षणीः सादयित्वावेक्षेतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः । प्रसिद्धमाग्नीध्रीयसकाशे पृषदाज्यवन्त्याज्यानि गृहीत्वा परिकर्मिभ्य उत्प्रदाय प्रोक्षणीहस्त उत्तरेणाग्नीध्रीयं धिष्णियं प्रतिपद्यते । ऽन्वञ्च आज्यै।रथेध्मं प्रोक्ष्य वेदिं प्रोक्ष्य बर्हिः प्रोक्ष्य बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्प्रस्तरं गृहीत्वैकविधं[1] बर्हि[1] स्तीर्त्वा[1] प्रस्तरपाणिः प्राङभिसृप्यौदुम्बरान्परिधीन्परिधायोर्ध्वे समिधावभ्याधाय बर्हिर्मुष्टिं विधृती प्रस्तरमित्येतत्समादाय प्रदक्षिणमावृत्य पूर्वया द्वारा हविर्धानं प्रपद्योत्तरार्धे खरस्य बर्हिर्मुष्टिꣳ स्तृणीयाद्।बर्हिषि विधृती । विधृत्योः प्रस्तरं । प्रस्तरे जुहूं । बर्हिषीतरा । एता असदन्निति समभिमृश्य योगेन युनक्ति । सिद्धमत ऊर्ध्वम् । ॥ १५ ॥ नवमः ॥

किमग्निहोत्रो दीक्षितः किमौपसदः किंप्रसुत इति । विज्ञायते व्रतमेव दीक्षितस्याग्निहोत्रं । घर्मोच्छिष्टमौपसदस्योपाꣳश्वन्तर्यामौ[2] प्रसुतस्य । यो हानुदिते स सायमग्निहोत्रभक्ति।र्य उदिते स प्रातरग्निहोत्रभक्तिः । किंदर्शपूर्णमास[3]

---

१ The three words एक °ब° स्त र्त्वा effaced in G.

२ Thus G U D C Be; °पसदमुपाꣳश्व° H, °पसदमस्योपाꣳश्व° Ben, the Vivaraṇa also has औपसदस्य ।

३ Thus Be G U (sec. m.), the Viv.; °दर्शपूर्णमासस्य H, दार्श (or दर्श) पौर्णमासस्य (or सस) H D C Ben (pr. m.), all without इति ; °मास इति Ben (sec. m.), °दर्शपौर्णमास इति U (pr. m.).

इति । विज्ञायते पौर्णमासं यज्ञमग्नीषोमीयं पशुमकुर्वत
II. 99. 11. दार्शं यज्ञमाग्नेयं पशुमकुर्वतेति । यथो एतदौपमन्यवस्य कल्पं
वेदयन्ते प्रातःसवन एव सर्वेभ्यः सवनेभ्यः सवनीयान्निर्वपेत्सकृ-
दुपहितान्येव कपालानि स्युरा समभिवासनात्संसृष्टं कर्म
तायते[1] । तेषामेकैकमुद्वासयेदनुसवनं येनयेन प्रचरिष्यन्स्या-
दपि वा व्यभिमृष्टानां पिण्डानां परिशाययीतेतरयोः[2] सवनयो-
र्यद्येककपालश्चिकीर्षितः[3] स्यात्प्रातःसवनिकैरेव[4] वर्तयेत्कृतान्ता-
त्पौरोडाशिकं कर्म प्रत्यादद्यीतेतरयोः[5] सवनयोरनुसवनमङ्गा-
राध्यूहनेनैव कपालेषु प्रतिपद्येत । सिद्धमत ऊर्ध्वम् ।
॥ १६ ॥ दशमः ॥

II. 96. 6 यथो एतद्बौधायनस्य कल्पं वेदयन्त उभयतःशुक्रा आदि-
त्यवतीर्वसतीवरीर्गृह्णीयात्ताः शुक्रास्ताभिराप्याययेत्ताभिर-
भिषुणुयादित्युपर्यर्धं होतृचमसं कृत्वेत्येतेनैवापि तृतीयेन
वर्तयेत्तयोरपः पूर्वया द्वारा हविर्धानं प्रपादयेद्धोतृचमसीया
वसतीवरीया मैत्रावरुणचमसीया इति दक्षिणेन होतारं
परिगृह्यापरया[6] द्वारैकधनानेतस्मिंश्च काले सर्वश एव मैत्रा-

---

१ Thus Ben, ज्ञायते C D, तायत H (reading एषाम् instead of तेषाम्), वर्तयेत् G Be U (sec. m.) and the Viv.

२ इतरयोः Be G (pr. m.), उत्तरयोः Ben C U D G (sec. m.).

३ यद्येक° H and the Viv., यदेक° G U Ben Be; C defective.

४ °सवनिकै° G U D, Viv., °सवनीकै° the other MSS.

५ उत्तरयोः MSS.

६ परिप्रगृह्या° Be U.

वरुणञ्चममीयाः पर्यस्येत्तृतीयं वसतीवरीणामवनयेत्तृतीयमेक-
II. 190. 12. धनानामेवमस्य प्राक्केवलः शुक्रो भवति । सोमग्रहं गृह्णीयाद्ब्र-
ह्मवर्चसकामस्येत्यनिरुक्तस्यैवैष राज्ञो ग्रहीतव्यो भवति । का उ खलु देवताः प्रथमꣳ सोमं भक्षयन्तीत्याप इत्येव ब्रूयाद्विज्ञायत उपहूताः सोमस्य पिबतोपहूतो युष्माकꣳ सोमः पिबत्विति । क उ खलु सोमस्य सोमपीथो भवतीति । विज्ञायते यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेत्येष एवापि सोमस्य सोमपीथस्तेषाꣳ संनिपतितानामानुपूर्वतेति[1] । निग्राभ्यासु वाचयित्वादाभ्येन चरेदथोपाꣳशुसवनमाददीताथ राजानं निर्वपेत्सिद्धमत आग्निष्टोमिकं कर्म जानीयादा फलकयोरभिमर्शनात्फलके अभिमृश्य पृश्निभिश्चरेदथ प्राणग्रहैश्चरेदथाꣳशूनुपसंगृह्णीयादथाꣳशुना चरेदथोपाꣳशुना । काले ऽन्तर्यामेण । सिद्धमत ऊर्ध्वम् ।

॥ १७ ॥ एकादशः ॥

III. 101. 7. यथो एतद्बौधायनस्य कल्पं वेदयन्त आग्रयणस्य ग्रहणे द्वयोर्धारयोः प्रातःसवने गृह्णीयात्तिसृणां माध्यंदिने सवने चतसृणां तृतीयसवन इत्युपाꣳश्वन्तर्यामयोश्च सꣳस्रावः संततश्च शुक्र एते द्वे प्रातःसवने । संततस्यैव शुक्र आग्रयणस्योदचनेन

---

१ Thus G U D, °पातितानां° H Ben, °पतितानाम्° C, °पोभानां Be.— °मानुपूर्वतेति G U (sec. m.), °मानुपूर्वते H, चानुपूर्वतेति Be, °मानुपूर्व्येति Ben U (pr. m.), °मनुपूर्व्यतेति C D.

च[1] तृतीया माध्यंदिने सवन । आदित्यस्थाल्यामतिग्रिष्टो[2]
राजादित्यग्रहस्य च सꣳस्राव आग्रयणस्यैवोदचनेन[3] च चतुर्थौ
तृतीयसवने । संपूतꣳ राजानं त्रयेण श्रीणीयात्पयसा सक्तु-
भिर्हिरण्येनेति । स यं कं चन ग्रहं गृह्णात्युभयत[4] उदबुध्नꣳ
हिरण्यश्रयणमेवैनं करोति । तिष्ठता ग्रहा होतव्या अन्यत्र
01. 9. प्राजापत्याच्च मन्थिसꣳस्रावाच्चेति । यथो एतच्छालीकेः कल्पं
वेदयन्ते द्रप्सानुमन्त्रणीयास्विति स्तुवाहुतीरेवैता जुहुयात्क-
स्मिन्नु खल्वेनाः काले जुहुयादिति । संतनीर्ह्वेतस्मिन्नेनाः[5]
12. 6. काले जुहुयादित्यथोक्तेतरित्याह प्राञ्चꣳ राजानं पूतभृतमभि
संपवयताद्दशाभिराधवनीयं मृष्ट्वा न्युब्जतादित्युक्तसंप्रैष[6] एष
प्रेत[7] आवकाशेभ्यो । ऽवकाशैरुपस्थाय दशाभिरेवैनं[8] मृष्ट्वा
न्युब्जति । ॥ १८ ॥

समानं कर्माश्विनाद्ग्रहादित्यो[9] धिष्ण्यव्याघारणसंपा-

---

१ Given by G U D only.

२ ०स्थाल्या अति० Ben H.

३ एव om. Be G U D.

४ गृह्णीयादिति instead of गृह्णाति Be G (sec. m.).

५ संतनी० Be, सततीर्ह्व० H.

६ Thus Ben H, ०त्युक्ताः सं० the other MSS.

७ प्रेते G U D C, एते Be, दाते Ben, H. corrupt.

८ Thus G (sec. m.) U D, दशभिरेनं C, दशाभिरेवैनां the other MSS.

९ Viv. : समानं कर्माश्विनाद्ग्रहादिति यच्चोच्यते (e.g. XI. 3 : 67. 17) तत्रा-
यमेव विधिः ।

I. 213. 20. तादित्येष समुद्देशो[1] भवति । कथमु खलु धिष्णियानां
यथान्युप्तं व्याघारणं भवतीति । विभुवे प्रवाहणाय स्वाहेति
व्याघार्य रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा
I. 214. 8. हिंसीरिति । सप्त वृणीत इति । होतैवैषां सप्तमो भवत्य-
हर्गण उत्तरेष्वहःसु प्रातःसवनिकं प्रसर्पणं कथं स्यादित्या-
हवनीयोपस्थानप्रभृतीत्येव ब्रूयात्सकृत् स्फ्यविघनानामुपस्थानं ।
I. 217. 6. कथमु खल्वेषां विसंस्थितसंचरः स्यादित्यन्तरेण होतुश्च
धिष्णियं ब्राह्मणाच्छंसिनश्च ये ऽधिष्णिया । अथ धिष्णिय-
वन्तः स्वंस्वमेव धिष्णियमुत्तरेण परिक्रामेयुरथेमावध्वर्यू
अचमसौ[2] भवतः । क उ खल्वेतयोर्भक्षो भवतीति । होतृच-
मस इत्येव ब्रूयात्क उ खल्वृत्विजामेकाह्ने सोमं न भक्षयन्ती-
त्युन्नेता ग्रावस्तुत्सुब्रह्मण्य इत्येव ब्रूयात्क उ खलु सत्त्रे
दीक्षिता भक्षयेयुरिति । नेष्टुश्चमस उन्नेता भक्षयेदच्छावाक-
चमसे ग्रावस्तुदुद्गातृचमसे[3] सुब्रह्मण्यो ऽपि वा सर्व एवाग्नी-
ध्रचमसे भक्षयेयुर्विज्ञायत उत्तरस्यां ततौ[4] तेषां य एवाग्नीध्रः
स ग्रावस्तुत्स सुब्रह्मण्यः स उन्नेतेति । ॥ १९ ॥ द्वादशः ॥
I. 217. 11. III. 104. 7. यथो एतद्बौधायनस्य कल्पं वेदयन्ते समानपात्र्यामेव

---

१ °देश्यो G (sec. m.).

२ Thus H Ben (pr. m.) C D U (pr. m.), °मसिनौ Ben (sec. m.) Be G U (sec. m.).

३ °द्गातुश्चमसे H only.

४ See XVII. 21 : 301. 2.

सवनीयानुद्वासयेत्पुरोडाशस्यैवैषो ऽलङ्कारो दृष्टो भवति[१] ।
मध्यतः पुरोडाशमुपस्तीर्णाभिघारितमुद्वासयेत्पुरस्ताद्धाना
दक्षिणतः करम्भं पश्चात्परिवापमामिक्षामुत्तरतः । कथमु
217. 13. खल्वेषाꣳ संचरो[२] स्यादिति । प्रज्ञातो हविष्पथो । ऽथापरं ।
पूर्वया द्वारोपनिर्हृत्यापरया द्वारा सदः प्रपाद्याग्रेण कर्तृन्
जघनेन धिष्णियानुत्तरेणाच्छावाकस्य धिष्णियं पर्याहृत्या-
न्यस्मै प्रदायैतेनैव यथेतमेत्योत्तरेण सदः परीत्य पूर्वया
द्वारोपनिर्हृत्योत्तरेणाग्नीध्रीयं पर्याहृत्यान्तर्वेद्यासादयेदध्वर्यु-
र्ह्विर्धानं[३] प्रपन्नः स्यादुपनिष्क्राम मा त्वाभिपरिहारिष-
218. 12. मित्येव ब्रूयाद्यथो एतद्बौधायनस्य कल्यं वेदयन्ते द्विदेवत्ये-
षूत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिर्ग्राह्यं[४] प्रयच्छतीति यदा-
ध्वर्युः पुरोडाशान्प्रत्यङ् हरेत्तद्धविर्धानं प्रपद्यमानं प्रतिप्रस्था-
तारं परिगृह्णीयाद्ग्रहानादायोपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्व-
र्युर्ग्रहानादत्ते । ऽपरेण परिक्रान्तायोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे

---

१ °तीति Ben.

२ Thus Ben C U and G (pr. m.) the Viv. (one copy); संचरि D H the Viv. (another copy), संचारी Be G (sec. m.), संचरः U (sec. m.). The Viv.: संचरणं संचरो गमनं तस्यास्ति संचरी (°रि) मार्गः । cp. XXVI. 24.

३ Thus H G (pr. m.) Kes'., the other MSS. ins. अथ before अध्वर्यु°

४ प्रतिनिग्रा° Ben Be and one copy of the Viv.

प्रतिनिग्राह्यं[1] प्रयच्छतीति । हुत्वा व्यवनीय[2] प्रदक्षिणमावृत्य[2]
प्रतिप्रस्थाताध्वर्युं परिगृह्णीयाद् । थाध्वर्युः प्रतिप्रस्थातारं प्रत्यङ् I. 226.
द्रवत्पात्रेण । सिद्धमत ऊर्ध्वम । थेमे द्विदेवत्या अननुवषट्कारा
भवन्ति । क्व[3] उ खल्वेषामनुवषट्कारो भवतीति । विज्ञायते
द्विदेवत्यानृतुयाजान्यस्य पात्नीवतो ग्रहः । आदित्यग्रह-
III. 106. 2. सावित्रौ[4] तान्स्म[5] मानुवषट्कृथा[5] इति । यथो एतदौपम-
न्यवस्य कल्पं वेदयन्ते द्विदेवत्येषु दीर्घभक्षेणैवैनाभक्षयेद्भक्षेहि[6]
माविशेति प्रतिपद्य कल्वे दक्षाय रायस्पोषाय सुवीरताया
इत्यातः । प्रत्यभिमृशते मा मा राजन्विबीभिषो मा मे
हार्दि त्विषा वधीः । वृषणे शुष्मायायुषे वर्चस इत्यथानु-
सवनभक्षेणैव[7] सवनमुखीयान्भक्षयेदिति । ॥ २० ॥ चतुर्दशः ॥

क्व उ खलु वसतीवरस्य स्तोत्रभक्तिर्भवति शस्त्रभक्तिश्चेति ।
विश्वरूपासु हास्य स्तोत्रभक्तिर्भवति प्रातरनुवाके[8] ह शस्त्र-
भक्तिः । क्व उ खलूपांश्वन्तर्यामयोर्द्विदेवत्यानां स्तोत्रशस्त्र-

---

१ प्रतिनिग्रा° Ben Be and one copy of the Viv.

२ °नीयाप्रदक्षिण° G U D C.

३ क्व उ U Be Ben C, Viv., क्व G H.

४ °सावित्रं Be Ben (sec. m.), °सावित्रान् Ben (pr. m.)

५ Thus G (pr. m.) U D C and cp. Āśv. śrs. v. 5. 21 (Vait. sū. 20. 4); मास्मतानुवष° Ben (pr. m.), मास्मताननुवष° G (sec. m.), तास्माभानुवष° H, ममास्मतानुवष° Be.

६ °भक्षणेनैवै° Be G.

७ °भक्षणेनैव Be G U (sec. m.).

८ °वाको Be G C U (sec. m.).

भक्तिर्भवतीति । यदुपांशुं गृह्णाति तदुपांश्वन्तर्यामयोः ।
1. प्रउग उक्थे[1] द्विदेवत्यानामथायं प्रतिप्रस्थातर्तुग्रहेष्वध्वर्योरुत्त-
रतःसेवी भवतीतस्यामुतस्य यन्तं प्रतिप्रस्थाताध्वर्युं परिगृह्णी-
यादथाध्वर्युः प्रतिप्रस्थातारं प्रत्यङ् द्रवन्पात्रेण । सिद्धमत
ऊर्ध्वं । किंदेवत्या उ खल्वृतुयाजा भवन्तीत्यृतुदेवता
इत्येतदेकमथापरमिन्द्रꣳ होता यजति । मरुतः पोता यजति ।
ग्रावो नेष्टा यजत्यग्निमाग्नीध्रो यजतीन्द्रं ब्राह्मणाच्छꣳसी
यजति । मित्रावरुणौ मैत्रावरुणो । देवं द्रविणोदां चत्वारो ।
ऽश्विनाध्वर्यू अध्वर्यू[2] । अग्निं[2] गृहपतिं गृहपतिः । क उ
खल्वैन्द्राग्नस्य स्तोत्रभक्तिर्भवतीति । बहिष्पवमान इत्येव ब्रूयाद्ये
के चन ग्रहा अस्तोत्राः पवमान एव[3] तेषाꣳ[4] स्तोत्राणि
भवन्ति[4] । क उ खलु माध्यंदिनीयाः सवनीया निरुप्यन्त इति ।
क्षुल्लकवैश्वदेवस्य स्तोत्र इत्येव ब्रूयात्क[5] तृतीयसवनीया ।
माहेन्द्रस्य स्तोत्र इत्येव ब्रूयात् । ॥ २१ ॥

नाराशꣳसमुपदस्तꣳ ऊतादेवैनꣳ[6] होतृचमसाद्गृह्णीया-

---

१ Thus U (sec. m.), Viv.; उक्थो G U (pr. m.), उक्थ्ये Be Ben H C. Acc. to the Viv. it is synonymous to शस्त्रे ।

२ Thus G U D C; अध्वर्यवोग्निं Ben H Be.

३ Thus G Be, एवैतेषां Ben D H U C.

४ भवंतीति Ben H.

५ उ खलु ins. G U D C.

६ Thus G U (sec. m.), ऊतादेनं H D C U (pr. m.), ऊतादेवैनं Ben (sec. m.) Be, ऊतादैनं Ben (pr. m.)

द्विनाराशंसं प्रातःसवनं च माध्यंदिनसवनं चैकनाराशंसं तृतीयसवनं । चत्वार्युन्नीयमानसूक्तानि[१] भवन्तीति[२] । सवनमुखेषु[३] चाच्छावाकचमसे[३] च[३] । त्रयो दीर्घभक्षाः । क उ खलु प्रवर्ग्यः सुत्यमहरनुसमेतीति । दधिघर्म इत्येव ब्रूया-
I. 234. 1. त्किंसुपसदां । सौम्यस्य परीज्येति । तिरश्चर्मन्फलके ग्राव्णोद्वादयतीति । शुष्काभिषव इत्येतदाचक्षते । कथमु खलु रथंतरपृष्ठे माहेन्द्रं ग्रहं गृह्णीयान्महां इन्द्रो य ओजसेत्येतया गायत्र्या माहेन्द्रं गृह्णीयादथ बृहत्पृष्ठे महाँ इन्द्रो नृवदा चर्षणिप्रा इत्येतया त्रिष्टुभा माहेन्द्रमथोभयपृष्ठे[४] यथा पृष्ठं तया गृह्णीयात्पुरोरुचमितरां कुर्यादिति । ॥ २२ ॥ चतुर्दशः ॥

कथमु खलु सवनीयस्य पशोस्त्वर्याया उपक्रमो भवती । डसूनꣳ सꣳस्तीर्य पृषदाज्यं विहृत्य[५] जुह्वाꣳ समानीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य संवदेताभिघारयेदासादयेत्पशुं पञ्चहोत्रा चतसृषूपस्तृणीते । मनोताप्रभृतिनेडान्तेन चरेत्स्विष्टकृत ऊर्ध्वमथोक्थ्यविग्रहेषु य एव प्रातःसवनिको[६]

---

१ ॰र्युन्नीयमानानिसू॰ Ben H, ॰र्युन्नीयमानिसू॰ Be, ॰र्युन्नीयसू॰ C.

२ इति om. G.

३ । Thus, hesitatingly, emended. सवनमुखेष्वाच्छावाकच (॰कस्य॰) मसेच सवनेच C U D; सवनमुखेष्वच्छावाकचमसे च सवनमुखेषु G (sec. m.); सवनमुखेचाच्छावाकचमसे च सवने च Be Ben; सवनमुखेच्छावाकचमसेवसवने च H

४ After माहेन्द्रम् G U D ins. ग्रहम् ।

५ Thus H, विहृत्य the other MSS. (G is indistinct).

६ ॰सावनीको or ॰सवनीको some of the MSS.

ग्रहणमन्त्रः स एव माध्यंदिनीयः स तृतीयसवनिको¹ ।
I. 251. 1. देवतामेव व्यञ्जये।च्चमसायचमसायैव त्रीꣳस्त्रीन्पुरोडाशशक-
लानुपास्येन्नव² होतृचमस इति । त्रयाणामेवैष उक्तो भवत्य।-
थायमाग्रयणस्त्रयस्त्रिꣳशतो देवतानां गृह्यते । क उ खल्वेताः
प्रदाने विज्ञायन्त इति । पात्नीवते । विज्ञायते पत्नीवत-
254. 12. स्त्रिꣳशतं त्रीꣳश्च देवानिति । कथमु खलु पात्नीवतं भक्षये-
।दादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य
जगतीछन्दसो ऽग्निना वैश्वानरेण पत्नीवता त्वष्ट्रा पीतस्य
मधुमत उपहूतस्योपहूतो भक्षयामीति । ॥ २३ ॥

कथमु खल्वन्तरुक्थ्यो भवतीति । प्रसिद्धं तृतीयसवन आग्रयणं गृहीत्वोक्थ्यं गृह्णीयाद।थैनं ध्रुवमुपस्थाप्य त्रिषूर्ध्वपात्रेषु विगृह्णीयादुपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्थायुवं यज्ञस्यायुष इन्द्रावरुणाभ्यां³ जुष्टं गृह्णामीति । पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति । परिमृज्य सादयत्येष ते योनिरिन्द्रावरुणाभ्यां त्वेति । तदानीमेवापरं⁴ गृह्णात्युपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्था-

---

१ ॰सावनीको or ॰सवनीको some of the MSS.

२ Thus D G U (pr. m.) C Ben (pr. m.), ॰पास्येतत्र H, ॰पास्येरन्नव Ben (sec. m.), ॰पास्येरंनव Be.

३ Nearly all the MSS. insert here and infra त्वा before जुष्टं ।

४ MSS., exc. Be once and Ben once (sec. m.), read ॰परेण instead of ॰परं ।

युवं यज्ञस्यायुष इन्द्राबृहस्पतिभ्यां[१] जुष्टं गृह्णामीति। पुनर्ह-
विरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति। परिमृज्य सादयत्येष
ते योनिरिन्द्राबृहस्पतिभ्यां त्वेति। तदानीमेवापरं गृह्णात्यु-
पयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवमुक्थेभ्य उक्थायुवं
यज्ञस्यायुष इन्द्राविष्णुभ्यां जुष्टं गृह्णामीति। नात्र पुनर्हविर-
सीत्युक्थ्यस्थालीं प्रत्यभिमृशति। दशाभिरेवैनां मृष्ट्वा न्युब्जति।
परिमृज्य सादयत्येष ते योनिरिन्द्राविष्णुभ्यां त्वेत्यथैनान्ध्रुवे
ऽवनीय होतृचमसेऽवनयेत्स्तोत्रे स्तोत्राण्यावपेच्छस्त्रे शस्त्राणि।
तस्य प्रत्तस्य[२] भक्ष इन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्रा-
विष्णुभ्यामग्निना वैश्वानरेण मरुद्भिः पीतस्य मधुमत उपहू-
तस्योपहूतो भक्षयामीत्येतेनैव वा भक्षयेदपि वा नित्यपूर्व-
णादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य
जगतीच्छन्दस इन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्या-
मग्निना वैश्वानरेण मरुद्भिः पीतस्य मधुमत उपहूतस्योपहूतो
III. 113. 2. भक्षयामीति। यथो एतदौपमन्यवस्य कल्पं वेदयन्ते पुरस्ता-
न्मिन्द्राहुती जुहुयान्मिन्द्राहुती हुत्वा हारियोजनं ग्रहं
II. 326. 12. गृह्णीयादित्यथ हैके चात्वालदेशेऽवभृथं निधाय दध्ना
पयसा मधुमिश्रेण नैष्ठ्यनैर्ऋजीषमभिजुह्वति यत्ते ग्राव्णा

१ Here begins M (see Introd. to Vol. II, p. IV).

२ Thus U M, प्रतस्य D, प्रब्रस्य Be, thus or प्रत्तस्य Ben., प्रतिर H G. om. the word altogether, प्रत C.

चिच्छिदुः सोम राजन्नित्यवभृथयजूंषि जुहोतीति[1] । कत-
मानि खल्विमान्यवभृथयजूंषि भवन्तीति । यद्देवैनदाहव-
नीये शाकलैश्चरन्ति देवकृतस्यैनसो ऽवयजनमसि मनुष्यकृत-
स्यैनसो ऽवयजनमसि पितृकृतस्यैनसो ऽवयजनमसीत्यवभृथा-
I. 261. 5. कृताविति । कतमा उ खल्वियमवभृथाकृतिर्भवतीत्यप उद्धृत्य[2]
जुहोति यज्ञस्य त्वा यज्ञपते हविर्भिः । सूक्तवाके नमो-
वाके विधेम स्वाहेति । तिष्ठन्त एवावभृथेन प्रचरेयुः ।
261. 17. पराङावृत्ताः प्रपदेनोदकान्तं प्रत्यस्येत्सिद्धमत ऊर्ध्वम् ।

॥ २४ ॥ पञ्चदशः ॥

262. 6. अथायमुदयनीयस्तस्य कः कर्मण उपक्रमो भवतीति ।
बर्हिर्यजुषा कुर्यात्पाणी संमृशीत । परिस्तृणीयात्पात्राणि
निर्णिज्य सꣳसादयेद्ब्रह्माणं दक्षिणत उपवेश्यात्रैवोत्तरत उद-
पात्रं निधाय जघनेन गार्हपत्यꣳ स्फ्यं निदध्यात्स्फ्योपरि
पात्रीं । पात्र्यां व्रीहीनावपेच्छूर्पादानप्रभृति[3] कर्मान्तस्तायत
आ प्रस्कन्दनात्प्रस्कन्दनान्तं कर्म कृत्वा तिरः पवित्रमप
आनीयाधिश्रित्य तिरः पवित्रं तण्डुलानावपेद्यथाज्यं[3] निर्व-
पेद्यथाज्यमधिश्रयेदुभयं पर्यग्नि कृत्वा जघनेन गार्हपत्यमौप-
सदायां वेद्यां स्तम्बयजुर्हरेत्सिद्धमत ऊर्ध्वं । तस्य भूतस्या-
सादनं । दक्षिणं परिधिसन्धिमपरं विमुच्य दक्षिणं वा परि-

---

१ See TS. VI. 6. 3. 1.

२ Thus G U M D C, उद्धत्य Ben हृत्य H.

३ From आवपेच्छूर्पा॰ unto तंडुलान् om. G Be and Ben (sec. m.).

धिमग्रेण प्राञ्चं प्रायणीयमासादयेत्प्रत्यञ्चमुदयनीयमग्निमुखा अत्र देवता इज्यन्ते । शंय्वन्त[1] उदयनीयः संतिष्ठत । ॥ २५ ॥

I. 263. 2. अथ यदि पशुरुपक्लृप्तः स्यात्पाणी संमृशीत । परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेत्प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्फ्यमाददीत । संप्रैषप्रभृति पाशुबन्धिकं कर्म तायते । सिद्धमत ऊर्ध्वं ।
III. 114. 17. यथो एतच्छालीकैः कल्पं वेदयन्ते मैत्रावरुण्यामिक्षया यजेतेति तस्यै सह सवनीयैर्वत्सापाकरणꣳ[2] सह सायंदोहमुदयनीयेन चरित्वा पाणी संमृशीत । परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेत्प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदथ प्रातर्दोहं धेनूर्दोहयेदथैनां[3] गार्हपत्ये श्रपयित्वानभिघारितामुद्वासयेदथाज्यं[4] निर्वपेदथाज्यमधिश्रयेदुभयं पर्यग्नि कृत्वाहवनीये वैदलकान्परिधीन्परिधायाथैनां[5] पुनरधिश्रित्याभिघारितामुद्वास्यान्तर्वेद्यासादयेदथाग्नये सोमायेत्याज्यभागाभ्यां चरेदाज्यभागान्तं कर्म कृत्वा दक्षिणे वेद्यन्ते केशश्मश्रु वपते नखानि

१ Thus write G M U (sec. m.), शंयुवंतः Be U (pr. m.) C, शय्वंतं H, शंयुतं D.

२ Thus M Be Ben, वत्सानामपाक॰ G U D C, वत्सापाक॰ H.

३ ॰नं Ben (pr. m.) Be.

४ Thus H U D C G (pr. m.) Ben (pr. m.); ॰त्वानभिघारितमु॰ M, ॰त्वाभिघारितमु॰ G (sec. m.) Be Ben (sec. m.).

५ वैदल॰ M only.

निष्क्रान्ते[1] ऽथाज्यभागप्रतिपत्केडान्ता[1] संतिष्ठते । ऽथेयमुद्व-
I. 263. 9. सानीयोपाꣳशु भवति पुनराधेयधर्मा[2] हि[2] । सकृन्महावेद्यै स्तम्बयजुषो हरणमसंनद्धा पत्नी यज्ञपुच्छमन्वास्ते । ॥ २६ ॥

षोडशः ॥

अथेममग्निचयं त्र्युपसत्कꣳ षडुपसत्कं द्वादशोपसत्कमिति[3] चिन्वते । स यदि साहस्रं त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताकृती[4] जुहोति । द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताकृती जुहोति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिꣳ षष्ठीं चितिꣳ सपुरीषामुपधाय संचिताकृती जुहोत्यौपवसथ्यिकैव तृतीयाथ यदि साहस्रꣳ षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताकृती जुहोति । श्वो[5] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताकृती जुहोति[5] । स एवमेव पञ्चाहमौपवसथ्यिकैव षष्ठ्यथ यदि साहस्रं द्वादशोपसत्कं चेष्यमाणो भवति यथासूत्रं[6] तथाथ

---

१ ०त स्वाज्य० Ben H.

२ Thus G Ben C D; ०धर्म्याद्धि U, ०धर्म्यद्धि M, ०धर्माद्धिण H, ०यंम्यामाद्ध Be.

३ ०कं वेति Ben H.

४ Here and infra some of the MSS. read ०कृतीर्जुहो० ।

५ The passage from श्वो unto जुहोति om. M Be, in G it is effaced.

६ यथासूत्रमथ H G (sec. m.).

यदि द्विषाहस्रं[1] त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वाहार्याꣳ सपुरीषामुपदधाति[2] । द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वाहार्याꣳ सपुरीषामुपदधाति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिꣳ षष्ठीं चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वाहार्याꣳ[3] सपुरीषामुपदधात्यौपवसथिकैव तृतीयाथ यदि द्विषाहस्रꣳ षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वाहार्याꣳ सपुरीषामुपदधाति । श्वो[4] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वाहार्याꣳ सपुरीषामुपदधाति[4] । स एवमेव पञ्चाहमौपवसथिकैव षष्ठ्यथ यदि द्विषाहस्रं द्वादशोपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिमुपधायाध्यस्तपुरीष[5] एतां रात्रिं वसति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य पुरीषमुपधाय संचिताकृती कृत्वाहार्याꣳ[6] सपुरीषामुपदधाति[6] ।

---

१ द्विषा० and द्विसा० the MSS. promiscue ; thus also त्रिषा०, त्रिसा० ।

२ Thus Be G M, -मुपधाय the other MSS.

३ हार्यꣳ M here and infra each time.

४ From श्वो unto ०दधाति effaced in G.

५ Most of the MSS. ins. सपुरीषाम् after चितिम्, but cp. the following chapter.

६ कृत्वा द्वे द्वे आहार्ये सपुरीषे उप० M.

स एवमेव यथासूत्रं तथा वर्तमानः पुरीषंपुरीषमुपधाय संचिताकृती कृत्वाहार्याꣳ सपुरीषामुपदधात्यौपवसथिकेव[1] द्वादशी । ॥ २७ ॥

अथ यदि त्रिषाहस्रं त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति । द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिꣳ षष्ठीं चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वेद्वे आहार्ये सपुरीषे उपदधात्यौपवसथिकेव तृतीयाथ यदि त्रिषाहस्रꣳ षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति । श्वो[2] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति[2] । स एवमेव पञ्चाहमौपवसथिकेव षष्ठ्यथ यदि त्रिषाहस्रं द्वादशोपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिमुपधायाध्यस्तपुरीष एताꣳ रात्रिं वसति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य पुरीषमुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति । स एवमेव यथासूत्रं तथा

---

१ कृत्वा द्वेद्वे आहार्ये सपुरीषे उप॰ M.

२...२ Effaced in G.

वर्तमानः पुरीषंपुरीषमुपधाय संचिताहुती हुत्वा द्वे आहार्ये मपुरीषे उपदधात्यौपवसथिकेव द्वादशी । कथमु[१] खल्वन्तरुपसत्कं बहिरुपसत्कमन्तर्बहिरुपसत्कमिति विजानीयाद्वै । तस्य संवत्सरस्य द्वादशावशिष्य राजानं क्रीणीयात्सो ऽन्तरुपसत्कः । संवत्सरे पर्यवेते राजानं क्रीणीयात्स बहिरुपसत्को । द्वैतस्य संवत्सरस्य षडवशिष्य राजानं क्रीणीयात्तास्योपसदः स्युरुत्तरस्य षड्रात्रः सो ऽन्तर्बहिरुपसत्कः । ॥ २८ ॥ सप्तदशः ॥

II. 1. 8. मृदमेताᳲ समां बिलेन करोतीति[२] । समां[३] भूम्यां
II. 1. 16. निदधातीत्येवेदमुक्तं भवत्यथैतावश्वगर्दभावुत्तरत उपस्थापयति[४] पुरस्ताद्वा प्रत्यञ्चौ । स यदि पुरस्तात्प्रत्यञ्चौ दक्षिणो ऽश्व उत्तरो गर्दभो । ऽथ यद्युत्तरतः पूर्वो ऽश्वो[५] ऽपरो[५] गर्दभो । ऽग्निभ्यः पशूनालभत इति । पञ्चानां पशूनां ब्राह्मणं भवति । स यद्यु[६] हैतान्पशूनुपाकरोत्या बर्हिष उपासनात्पाशुबन्धिकं कर्म वर्तयित्वा शिराᳲसि प्रच्छिद्यापो देहानभ्यवहरेयुरपो

१ Thus U G (pr. m.) C Ben (pr. m.) H M D, काउ G (sec. m.) Ben (sec. m.)

२ इति given by G U and a citation in the Mahāgnisarvasva.

३ समां D H U (pr. m.) C, समं M U (sec. m.) Ben (sec. m.) Be.

४ Thus (singul.) U (sec. m.) the Viv. and the Mahāgnis., plural the other MSS.

५ Thus ( श्वोपरो ) M D C U (pr. m.) the Viv. and Ms., श्वउत्तरतो Be Ben G U (sec. m.); H corrupt.

६ यद्य M. (i.e. *yady aha*).

देहानभ्यवहरन्तीति विज्ञायते । मासमेतं[1] ब्रह्मचर्यं चरति ।
सो ऽधःसंवेश्यमाꣳसाश्यस्त्युपायो भवति पूर्वदीक्षेत्येतामाचक्षते[2] ।
I. 14. 7. त्रयोदशमेवैतं मासमभि दीक्षमाणो मन्यते । ऽत्र कृष्णाजिने
यजमानं वाचयति मुष्टी चैव न करोति वाचं च न यच्छ-
तीति । कृष्णाजिनप्रभृति कर्मान्त एष भवत्यावेदनात्प्रथमाया-
मुपसदि वेदिं विमिमीते[3] स्तम्बयजुर्हरतीति । कर्मवश-
18. 16. कारितमेवैतद्भवत्यथ[4] संभारेषूषान्निवपन्यददश्चन्द्रमसि कृष्णं
तन्मनसा ध्यायेत्तदपीहेति । ॥ २९ ॥

I. 24. 1. उत्तरमुत्तरं प्रति बलीवर्दमुत्तरामुत्तराꣳ सीतां कृषन्त्स-
I. 28. 9. र्वौषधं वपन्स्वयमातृण्णावकाशं नावक्रामेदित्यथ[5] हैके[6] पुरुषे
I. 37. 8. च स्वयमातृण्णायां च साम गायन्ति । किमु खलु स्वयमातृ-
ण्णानिकोतं भवतीति । हिरण्येष्टका मण्डलेष्टका रेतःसिगित्येव
ब्रूयाद्यंयमिष्टकागणमुपदध्यात्तं न व्यवेयाद्दक्षिणेन दक्षिण-
मुत्तरेणोत्तरꣳ । स यदि दक्षिणतः पुरस्तादिष्टका उपदध्या-
दपसलैरन्वावर्तेताथ यद्युत्तरतः पश्चाद्वा प्रदक्षिणमावृत्य
43. 15. स्वयमातृण्णामेवाभिमुख इष्टका उपदध्यात्कृत्तिका उपदधा-

---

१ Thus D C M (sec. m.) Ben Ms; मासमेकं Be H G U M (pr. m.).

२ पूर्वा दी॰ Ben H.

३ मिमीते Ben H.

४ एव om. M G D C; -नद् instead of एतद् Ben (sec. m.) Be.

५ नावक्रा॰ M D C H U (pr. m.) Ms; नातिक्रा॰ G U (sec. m.) Be Ben.

६ All the MSS. ins. ब्रुवते, only Ms. om.

तीति । कतमा उ खल्विमाः कृत्तिका भवन्तीति । विद्युत इत्येव ब्रूयाद् । स्रवणार्थं[1] बौधायनस्याम्नावग्नौ पुनश्चितिः । सह सा न पुरीषचितिः षष्ठ्या चित्या वृद्धिजेति । वृद्धिजैवेति

II. 45. 17. शालीकिः । षष्ठं प्रच्छादमाहरमाणः कस्मिन्नु खल्वेनत्काल आहरेदिति । नक्षत्रेष्टका उपधायेत्येव ब्रूयात् । त्रिभिः कर्मभिरभिप्रैति पुरीषस्योपधानेन साहस्रवता प्रोक्षणेन धेनुकरणेनेति । सो ऽष्टाभिः कर्मभिरभिप्रैत्युक्तमे संचिताहुती शतरुद्रीयं नमस्काराः परिषेचनं विकर्षणꣳ सर्पाहुतीः सामभिरुपस्थानमनुशꣳसनमिति । ॥ ३० ॥ अष्टादशः ॥

III. 133. 1. अथ किं[2] नानाबीजानां निर्वपणे तन्त्रमिति[2] । स्रुगादानं तन्त्रꣳ शूर्पादानं तन्त्रं [3]धूःप्रभृतयः शकटमन्त्राः सर्वे तन्त्रं भवत्या[4] सावित्राद्बीजंबीजमभ्यावर्तते सावित्रं । तन्त्रं दशहोताभिप्रव्रजनं परिदानमिति तन्त्रं भवति । तन्त्रं कृष्णाजिनावधवनं तन्त्रमुलूखलाध्यूहनं तन्त्रं पुरोडाशीयानामावपनं तन्त्रं मुसलस्यावधानं तन्त्रꣳ शूर्पस्योपोहनं तन्त्रꣳ

---

१ ०दास्रवणा० some of the MSS. and the citation in Viv.; but cp. the vivaraṇa itself: स्रवति वै सा ताꣳ स्रवन्तीमिति (TS. v. 4. 10. 3) दोषनिवृत्त्यर्था पुनश्चितिरिति ।

२ किं and इति only given by U (sec. m.) G (sec. m.), Ms.; the other MSS. om. these words.

३ Before धूः० M Be Ben D C G (pr. m.) ins. प्रत्योषणं प्रत्यौषणं or प्रत्यौषधणं (i.e. प्रत्यौषधं ?).

४ Thus H Be G D C Ms; भवंत्या Ben U M.

हविष्कृदावपनप्रभृतिमन्त्रो बीजंबीजमभ्यावर्तते प्रस्कन्दनान्तो ।
133.13. यथो एतच्छालीकेः कल्पं वेदयन्ते सह स्विष्टकृतात्याक्रामे-
134. 1. दित्येकादशप्रयाज एवैतदुपपद्यते न पञ्चप्रयाजे । यथो एतदौ-
पमन्यवस्य कल्पं वेदयन्ते पुरस्तात्स्विष्टकृतो यावदाम्नातेना-
भिषिञ्चेन्नात्र कृष्णाजिनं न रुक्मौ न पार्थानि भवन्ति
कुशानेव सꣳस्तीर्य तेष्वेनमभिषिञ्चेदिति[1] । कथमु खलु
सत्त्रिणामभिषेक आवर्तत इत्यभिषेक आवेदनं प्रथमे ऽह्न्यभि-
षेकः प्रथमे ऽह्न्यश्वस्यावघ्रापणमादितश्चान्ततश्च बहिष्पवमान-
मास्तावे सुवीरन्नहरहर्यज्ञायज्ञियस्य[2] स्तोत्रे द्वाभ्यामभिमृशे-
दिति । ॥ ३१ ॥

कथमु खल्वेकादशिनानां[3] पशूनां चर्याया उपक्रमो भवती-
ती । डस्तूनꣳ सꣳस्तीर्य पृषदाज्यं विहृत्य जुक्ताꣳ समानीयान्तरेण
चात्वालोत्करावुदङ्ङुपनिष्क्रम्य संवदेताभिघारयेदासादयेत्पशुं[4]
पञ्चहोत्रा चतसृषूपस्तृणीते । मुख्यस्य पशोर्दैवतमवदाय[5]

---

१ Corrected acc. to the Dvaidha; तेष्वेवैनम॰ MSS. (तेषुवैन॰ M, तथैवैन॰ H).

२ Thus, with the Saṃhitā, G Be Ben, ॰यज्ञीय॰ H U D M C.

३ Thus(खल्वेका॰) MSS. (एकादशिनीनाम् M.).

४ ॰दासादये॰ not found in Be and effaced in Ben, but cp. XXV. 23, init.—पशुं seems, here and further on, to have been changed into पशून् in G.

५ ॰दैवतम॰ M U Be, the Viv., ॰देवतम॰ H G D C Ben.—After ॰दाय M. ins. वपा ।

वृक्यमेदो यूषन्नवधाय तेन जुहूं प्रोर्णुयाद्यूष्णोपसिच्याभि-
घारयेद्यथोपभृति स्विष्टकृते[१] सर्वेषां त्र्यङ्गाणाꣳ सकृत्सकृत्स्वि-
ष्टकृते समवदाय वृक्यमेदो यूषन्नवधाय तेनोपभृतं प्रोर्णुया-
द्यूष्णोपसिच्य[२] नाभिघारयेदथ[२] हृदयं जिह्वां वक्षस्तनिम
II. 6 मतस्नौ[३] वनिष्ठुमिति[४] पार्श्याꣳ[५] समवधाय यूष्णोपसिच्य
II. 63 नाभिघारयेदथ कꣳसे वा चमसे वा वसाहोमं गृहीत्वा
II. 6 यूष्णोपसिच्याथाभिघारयेत्संम्प्रेत्यग्नुं । पार्श्वेन वसाहोमं
13 प्रयौयान्मꣳस्नः[५] कुम्भतो । जघनेनोत्तरवेदिं परिक्रम्याश्रावये-
द्याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहुयात्परिशिꣳ-
II. 6 ष्याच्च दिग्भ्यो ऽथेतरद्वसाहोमहवन्याꣳ समवनयेद्वषट्कृते हवि-
II. र्जुहोति । सो ऽनिष्ट्वैव स्विष्टकृतमुदङ्ङत्याक्रम्य जुह्वां चैव
ib. वसाहोमहवन्यां चोपस्तृणीते । द्वितीयस्य पशोर्दैवतमवदाय
ib. वृक्यमेदो यूषन्नवधाय तेन जुहूं प्रोर्णुयाद्यूष्णोपसिच्याभि-
घारयेद्यथोपभृति[६] स्विष्टकृते सर्वेषां त्र्यङ्गाणाꣳ सकृत्सकृत्सम-
ib. वदाय वृक्यमेदो यूषन्नवधाय तेनोपभृतं[७] प्रोर्णुयात्समवत्त-

---

१ Not given by G U D M.

ib. २ °सिच्याभिघा° G, °सिच्यानाभिघा° H.

ib. ३ Thus D Ben C U (pr. m.), मतस्नू G M U (sec. m.), मतस्नू H.

४ Thus we ought to read also IV. 9: 123. 7.

५ Here and further on the MSS. write मंस्नः मस्नः मौस्नः मंस्थः नस्नः।

६ °थैत्तथो° M.

७ After °भृतं G H M ins. यूष्णोपसिच्य नाभिघारयेत्, U ins. यूष्णो-पसिच्य नाभिघारयेदथ हृदयं जिह्वां वक्षस्तनिम मतस्नु वनिष्ठुमिति पार्श्याम्; C is incomplete.

मेतद्यूष्णोपसिच्य[1] नाभिघारयेत् । तथैव[2] कꣳसे वा चमसे वा
वसाहोमं गृह्णीयाद्यूष्णोपसिञ्चेद्यथाभिघारयेत्सम्प्रेत्यपशुं ।
पार्श्वेन वसाहोमं प्रयौयान्मꣳस्तः कुम्बतो । जघनेनोत्तरवेदिं
परिक्रम्याश्रावयेद्याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहु-
यात् । परिशिꣳष्याच्च दिग्भ्यो[3] । वषट्कृते हविर्जुहोति । स एव-
मेव सर्वेषां पशूनाꣳ । स यत्र वारुणस्य स्विष्टकृते ऽवद्येत्त-
द्विरभिघारयेत् । समवत्तमेवैतद्यूष्णोपसिच्याभिघारयेत् । तथैव कꣳसे
वा चमसे वा वसाहोमं गृह्णीयाद्यूष्णोपसिच्याभिघारयेत्सम्प्र-
ष्ठेत्यपशुं । पार्श्वेन वसाहोमं प्रयौयान्मꣳस्तः कुम्बतो । जघनेनो-
त्तरवेदिं परिक्रम्याश्रावयेद्याज्याया अर्धर्चे प्रतिप्रस्थाता वसा-
होमं जुहुयात् । परिशिꣳष्याच्च दिग्भ्यो । ऽथैतरद्वसाहोमहवन्याꣳ
समवनयेत् । वषट्कृते हविर्जुहोति । अथ पुरस्ताद्वनस्पतेः समान्यो
दिशः प्रतियजेत् । अथ वनस्पतिना चरेत् । अथ स्विष्टकृता । सिद्धमत
III. 135. 3. ऊर्ध्वं । यथो एतदौपमन्यवस्य कल्पं वेदयन्ते मैत्रावरुण्यामि-
क्षया निरूढया यजेतेति सिद्धमत्रौपवसथिकं कर्म जानी-
II. 62. 8. याद्यथामावास्यायाꣳ संनयतो ऽन्यत्र पिण्डपितृयज्ञात्संवत्सरं

---

१ समवत्तमेवैत॰ M, समवत्तमेतद् D; Ben om. समव॰ unto ॰घारये॰ (1. 2).

२ एव om. M, probably rightly.

३ Between दिग्भ्यो and वष॰ M H Ben U ins. तथैव कंसे वा चमसे वावनयेद्, in Ben and U these words are effaced; G (partly secunda, partly prima manu) तथैवेतरद्वसाहोमहवन्यां समवनयेद् ।

न कंचन प्रत्यवरोहेन्न शीर्षमाꣳसं खादेन्न वयसां माꣳसं नाग्निं चित्वा रामामुपेयान्नाग्निचिद्वर्षति धावेद्यदि[1] धावेदुपावर्तेतान्नाद्यमेवाभ्युपावर्तत[1] इति ब्राह्मणम् । ॥ ३२ ॥

एकोनविꣳशः ॥

II. 63. 8. अथास्मिन्वाजपेये सप्तदशानाꣳ रथानां त्रयस्त्रयो ऽश्वास्त
II. 63. 11. एकपञ्चाशतमुत्तरतः प्रष्टिं नियुञ्ज्याच्चतुर्विꣳशतिं[2] पशूनि-
II. 64. 4. त्यग्नीषोमीयस्यानूबन्ध्यस्य चतुर्विꣳशौ भवतो । ऽथ वै भवति
सावित्रं जुहोति कर्मणःकर्मणः पुरस्तादिति । दीक्षणीयां
निर्वप्स्यन्सावित्रं जुहोतीति । सवित्रादेव सावित्रं भवति ।
II. 64. 7. दीक्षाहुतीर्होष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा दीक्षा-
II. 64. 8. हुतीर्जुहुयात्प्रायणीयां निर्वप्स्यन्सावित्रं जुहोतीति । सावि-
ib. 9. त्रादेव सावित्रं भवत्यन्तर्हिरण्याꣳ[3] होष्यन्सावित्रं जुहो-
ib. 10. तीति सावित्रꣳ हुत्वान्तर्हिरण्यां[4] जुहुयात्पदेन चरित्वा
राजानं क्रीत्वोह्यातिथ्यं निर्वप्स्यन्सावित्रं जुहोतीति । सवि-
ib. 11. त्रादेव सावित्रं भवति । प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरिष्य-
न्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा प्रथमाभ्यां प्रवर्ग्योप-
ib. 13. सद्भ्यां प्रचरेन्महावेद्यै पूर्वं परिग्राहं परिग्रहीष्यन्सावित्रं
ib. 14. जुहोतीति । सावित्रꣳ हुत्वा स्फ्यमाददीताहवनीयं प्रणेष्य-

---

१ यदि धावेद् om. most of the MSS.

२ Thus G (sec. m.), °विंशतिः Be, °विंशतं Ben, °विंशं D H M G (pr. m.), विंशं U C.

३ °ण्यां G (pr. m.) U (sec. m.) Ben H ; °ण्यं Be U (pr. m.) M.

४ °ण्यां U (sec. m.), °ण्ये the other MSS.

ib. न्सावित्रं जुहोतीति । सावित्रꣳ हुत्वेध्ममाददीत । रथवाहने
ib. सदोहविर्धाने संमेष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा
II. 64. 15. रथवाहने सदोहविर्धाने संमिनुयादग्नीषोमौ प्रणेष्यन्सावित्रं
II. 65. 1. जुहोतीति । सावित्रꣳ हुत्वाग्नीषोमौ प्रणयेद्यूपमुच्छ्रयि-
ष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा प्रोक्षणीराददीत ।
ib. 6. स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरिष्यन्सावित्रं जुहो-
तीति । सावित्रꣳ हुत्वा बर्हिषी आददीत । तस्य प्रसिद्धं
ib. 8. वपया चरित्वा वसतीवरीर्ग्रहीष्यन्सावित्रं जुहोतीति । सावित्रꣳ
ib. 9. हुत्वा कुम्भमाददीत । पशुपुरोडाशं निर्वप्स्यन्सावित्रं जुहो-
तीति । सावित्रादेव सावित्रं भवति ॥ ३३ ॥

II. 63. 5. तूपरश्चतुरश्रिर्भवतीत्यनुदिशमश्री[1] स्थापयित्वाग्निष्ठां च
II. 66. 16. सूर्यस्यां च संमिनुयात्पञ्चैन्द्रानतिग्राह्यान्गृह्णातीति[2] । सर्व
II. 68. 2. एवैते सोपयामा ग्रहीतव्या भवन्ति । मारुत्या प्रचर्यैतान्सं-
ज्ञपयेदिति । तन्त्रमुल्मुकहरणं तन्त्रमध्रिगुप्रैषो ऽभ्यावर्तेत[3]
संज्ञप्तहोम ऊर्ध्वे[4] बर्हिषी[4] भिन्द्यात्स्वाहाकृतिप्रैष आज्यं द्वेधा
II. 71. 9. विभजेदुभयभागिन्य स्तोकीया । अथेदꣳ रथचक्रं प्रादेशमात्रं

---

१ Thus Ben H, ०श्रीः the other MSS.

२ Before गृह्णा० Ben H Be ins. ग्रहान्; the word is missing in M D C and effaced in G.

३ Corrected; ०वर्तन U, ०वतीन Be, ०वर्तते the other MSS.

४ Thus G U (sec. m.) H Ben (pr. m.), ऊर्ध्वबर्हिषि Ben (sec. m.) C, ऊर्ध्वबर्हिषी Be, और्ध्वबर्हिषी M.

II. 75. 8. भूमेरुच्छ्रितं[१] भवत्यपरेण परीत्य पञ्चमी संमृशतीति रथचक्रे
II. 79. 1. एवैते संमृशत्यथाहाजिसृतौ[२] दक्षिणापथेनोपातीत्येति सूत-
ib. 2. राजन्या एवैत उक्ता भवन्ति[२] मारुता अग्रेणाहवनीयं परी-
ib. 14. त्येति क्षत्तसंग्रहीतार एवैत उक्ता भवन्त्यथ यजमानं तार्प्यं
परिधापयतीत्याज्येनैवैतत्तृप्तं[३] वासो भवत्यथाप्युदाहरन्ति तृपा
नाम वृक्षास्तेषामेवैतद्भवत्यथेमं वाजपेयꣳ सर्वसप्तदशमेके[४]
ब्रुवत[५] आदेशादेव बृहत्सामैकविꣳशं वैष्णवीषु शिपिविष्ट-
वतीषु स्तुवीरन्निति[६] ॥ ३४ ॥ विꣳशः ॥

॥ इति पञ्चविꣳशः प्रश्नः ॥

---

१ ॰वत्सन्नं M Ben C.

२ After संमृशति and भवन्ति some of the MSS. इति ।

३ Thus M, ॰वैततप्तं D C, ॰वैतंद्दप्तं G U Ben, वैनंद्दप्तं Be, वैतेंद्दप्तं H.

४ Thus G Ben Be, पर्वस॰ M, सर्वसप्त॰ H U; D C om. सर्वं ।—Before एक Be U D M ins. एव ।

५ ब्रुवतेत M.

६ कुर्वंति instead of स्तुवीरन्निति M C.

अथायं राजसूयो ऽर्धसप्तदशैर्मासैः संतिष्ठते ऽर्धषोड-
शैर्वा । तस्मिन्सोमसंस्थाः पञ्चैकाहा[१] अहीनो द्विरात्रः । षट्
छाला[२] । अष्टौ यूपाः षड् ह्याग्निष्टोमिका द्विपशौ[३]पशुबन्धे[३]
सौत्रामण्यामष्टमस्तावन्त एवावभृथाः । क उ खलु हविषो
II. 86. 3. हविर्निरुप्यत इत्यानुमत इत्येव ब्रूयात्कार्ष्णं वासः कृष्णतूषं दक्षि-
II. 87. 11. णेति । कृष्णदशमित्येवेदमुक्तं भवति । काममिष्ट्वा पशुबन्धेनेति ।
संतन्येष्ट्याग्रयणेन वा पार्वणेन वा यजेत । कथमु खलु साक-
मेधपकर्षीति । महारात्रे पूर्वा संततिः श्वो भूत उत्तरा प्रदोषे ।
किमु खल्वसमुदितं भवतीति । प्रागनूयाजिकात्संप्रैषादित्येव
II. 91. 1. ब्रूयाद्बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृह इति । योऽन्यो
II. 91. 16. याजमानासंयुक्तो[४] ब्राह्मणो[५] भवति । भगाय चरुं वावातायै
II. 92. 1. गृह इति । यान्या महिष्या[६] एव[६] सुभगा भवति । नैर्ऋतं
ib. 7. चरुं परिवृक्त्यै गृह इति । दुर्भगैवैषोक्ता भवति । पौष्णं चरुं

---

१ Thus M only; पंचहै काह H, पंचाहैकाहा (*i.e.* पञ्च अह एकाहाः ?) पंचाहैकाह Ben U, पंचाहैकाह्निनो Be.

२ शाला MSS.—द्विरात्रस्यैका the Vivaraṇa.

३ Thus G (sec. m.) and the Viv. °पशुपशुबंधे Be, °पशूपशुबंधे G (pr. m.) Ben U H, °पशूपशूपशुबंधे M.

४ Uncertain reading; याजमानासं° M Be Ben, याजमानसं° H U G (pr. m.), याजनसं° G (sec. m.). The Viv.: योन्याजनसंयुक्तः and यन्या-जनासंयुक्तः ।

५ After ब्राह्मणो Ben G H U ins. ब्रह्मा, M ब्रह्म; this word is missing in Be and has been effaced in G and Ben.

६ Conjectural reading. महिष्यैव H Be U Ben, महिष्येच M, महिष्यै G (omitting एव).

भागदुघस्य गृह इति । महानसिक[1] एवैष उक्तो भवत्यथाप्युदाहरन्ति यो भागधाभी[2] दोग्धि स एवैष उक्तो भवति । द्वादशाहेन[3] रत्निनाꣳ हवीꣳषि । त्रयोदशे[4] मैत्राबार्हस्पत्यं । द्व्यहो ऽवशिष्ट एतस्यैव[5] पूर्वपक्षस्य । तस्मिन्संतनीभ्यां यजेताथ चेदुक्थ्ये ऽभिषेचनीये ऽग्निं चिन्वीतैतस्मिन्नेव द्विरात्र आग्निकानि सावित्राणि हुत्वोखाः संभृत्य पशुशीर्षाणि च वायव्येन पशुना यजेत । ॥ १ ॥

II. 97. 7. अपां पतिरसीत्यपांपतीयाः । समुद्रियाणामेवैता उक्ता भवन्ति । मरुतामोज स्थेति निवेष्या[6] । आवर्तानामेवैता[7] उक्ता भवन्ति । सूर्यवर्चस स्थेत्यभिदृश्याः[8] । प्रसन्नानामेवैता उक्ता भवन्ति । शक्करी स्थेति[9] गोरु[10] जरायोरेवैता[10] उक्ता भवन्ति ।

II. 111. 15. सो ऽत्रैवाग्नेयेनाष्टाकपालेन यजेतेति । सद्यः संतिष्ठमान उक्थ्य एतत्सूत्रं भवत्यथ चेदतिप्रवर्धेत तदानीमेवाग्नेयेनाष्टाकपालेन

---

१ Thus Be Ben (sec. m.); माहानसिक G (sec. m.) and one copy of the Viv; महानासिक H U G (pr. m.) Ben (pr. m.) and another copy of the Vivaraṇa; महानासीक M.

२ °भी M Ben, °भि Be H G U.

३ शाहो M.

४ °दशो M, दशौ all the other MSS.

५ एव om. M.

६ Thus G U M, °वेष्या Be Ben, °वेष्या H.

७ श्चावृत्तानां or श्चावृतानां MSS.

८ Thus all, against भ्रतिदृश्या: of the text proper.

९ गोरुल्व्या seems to have fallen out.

१० Conjecturally; गोरजरायो° M, गारुजरायो° G (pr. m.), गारुल्व्यायो Ben (sec. m.), गारज्व्यायो Ben (pr. m.), गारजरायो° H Be U, गारुजारयो G (sec. m.).

II. 114. 4. यजेत । श्वो भूते सारस्वतेन । दृषदशाच्च चमसमभिसंजानत
इति । होतृचमसे चोद्गातृचमसे च सप्तसप्ता।थेतरेषु नवनव ।
II. 117. 1. प्रसर्पणप्रभृतय एवैते[१] भवन्त्यप्तुषोमान्ता । अथायं प्रतीचीन-
स्तोमः केशवपनीयो ऽतिरात्रः षोडशिको भवति । तस्य
ह्याग्निष्टोमिकानि स्तोत्राण्यावृत्तानि भवन्त्येकविꣳशो बहिष्प-
वमानः सप्तदशान्याज्यानि माध्यंदिनस्य पवमानः पञ्चदशानि
पृष्ठान्यार्भवस्य[२]पवमानस्त्रिवृद्यज्ञायज्ञियमित्य।थ[३] प्रतीचीन-
स्तोमाय केशवपनीयायातिरात्राय दीक्षते । तस्य षड् दीक्षाः
I. 117. 14. षडुपसदस्त्रयोदश्यां प्रसुतश्चतुर्दश्यामुदवसानम।थैतस्मिन्नेव पक्षा-
वशेषे व्युष्टये[४] द्विरात्राय दीक्षते । स एतां चैकाꣳ रात्रिं
पूर्वपक्षस्य दीक्षितो भवति द्वे चापरपक्षस्य । तासां[५] द्वादशो-
पसदो । ऽथोपवसत्य।थोपवसथीये[६] ऽहन्यमावास्यायां[६] पूर्वमह-
II. 118. 2. र्भवत्युत्तरस्मिन्नुत्तरमिति । संतिष्ठते व्युष्टिर्द्विरात्रो[७] । ऽथो-
त्तराꣳ शालामध्यवस्य।थ मथित्वाग्नीन्विहृत्योदयनीयायाग्नि-

---

१ Thus Ben, एवते M, एते H Be G U.

२ Thus M G (sec. m.), °र्भवतिस्य Ben, °र्भव the other MSS.

३ अथ om. H Ben.

४ Thus M only, व्युष्टि the other MSS.

५ Thus G (sec. m., first hand invisible) and the Viv., which comments: तृतीयप्रभृतीनाम् ; तस्यांसा H U, तस्याशां Be, तस्य M, Ben, defective.

६ Thus, hesitatingly, emended; थोपवसत्यथाहान्यौपवसथ्योभवतिमावा° G (pr. m.), थोपवसत्यथाहीन्यौपवसथ्यममावा° Ben, थोपवसथ्येहन्यमावा° G (sec. m.), थोपवसथाद्दान्यौपवसथ्योमावा H Be M (the last only °सथ्ये-ममा°), थोपवसथाद्दान्यौपसथ्योमावा° U.

७ Thus, here and further on, M only; °ष्टिर्द्वि° all the other MSS.

ष्टोमाय[१] दीक्षते । तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः । संतिष्ठत एष[२] उदयनीयो[२] ऽग्निष्टोमः सहस्रदक्षिणो । ऽथैतस्मिन्नेव पक्षावशेषे क्षत्रस्य धृतिनाभिविधत्ते[३] देविकाहविर्भिस्त्रैधातवीयया सौत्रामण्येति । संतिष्ठते राजसूयो ऽर्धसप्तदशैर्मासै।रथ शालीकेः केशवपनीयान्तस्ते ऽर्धषोडशाः[४] ।

॥ २ ॥ प्रथमः ॥

अथातो ऽन्नसवः । प्रसिद्धमेव प्रथमो ऽर्धमासः संतिष्ठते । पञ्चाहेन चातुर्मास्यानि द्व्यहेन संतनी अष्टमे ऽहनीन्द्रतुरीयं नवमे ऽह्नि पूर्वाणि देविकाहवीꣳषि दशमे ऽह्न्युत्तराण्येकादशे[५] द्वादशे त्रयोदश इति त्रिषंयुक्तैश्चतुर्दशे वैश्वानरो द्वादशकपालः पञ्चदशे वारुणो यवमयश्चरुरिति मासो । द्वादशाहेन रत्निनाꣳ हवीꣳषि त्रयोदशे मैत्राबार्हस्पत्यं द्व्यहेन संतनी अर्धमासेनाभिषेचनीय उक्थ्य इति द्वौ मासाव।र्धमासेन सप्तदशो दशपेयो ऽर्धमासं दीक्षितो[६] दीक्षितव्रतीति त्रयो मासा । अर्धमासेन प्रतीचीनस्तोमः केशवपनीयो ऽतिरात्रो ऽर्धमासेन व्युष्टिर्द्विरात्र इति चत्वारो मासा । अर्धमासेन क्षत्रस्य धृतिरिति । ते ऽर्धपञ्चमा । अथ शालीकेः । सप्ताहेन

---

१ Thus M; °विहृत्योदवसानीयाया° or यया° the other MSS.

२ हवसुषडवधानीया Ben.

३ Thus G (sec. m.) and the Viv.; °भिधत्ते Be U, °भिविद्यते Ben, °भिधीयंते M.

४ Thus M Be G (sec. m.), °षोडशः H U G (pr. m.), °षोडश Ben.

५ ह्न्युत्त° Be Ben.

६ Effaced in M.

पवित्रो ऽग्निष्टोमः स एवमेव पश्चावशेषꣳ सिद्धमा वारुणाद्द्वादशाहेन रत्निनाꣳ हवीꣳषि त्रयोदशे मैत्राबार्हस्पत्यं द्व्यहेन संतनी इति मासो । ऽर्धमासेनाभिषेचनीय उक्थ्यो ऽर्धमासेन सप्तदशो दशपेय इति द्वौ मासावर्धमासेन प्रतीचीनस्तोमः केशवपनीयो ऽतिरात्रो ऽर्धमासेन व्युष्टिर्द्विरात्र इति त्रयो मासा । अर्धमासेन क्षत्रस्य धृतिरिति । ते ऽर्धचतुर्था । अथ पतन्तको । द्वादश दीक्षा द्वादशोपसदः । सप्ताहो ऽहीनो राजसूयो । यथावकाशमितरै राजसूयहविर्भिर्यजते । ऽथ देविकाहविर्भिर्यजते । ऽथ त्रैधातवीयया यजते । ऽथ सौत्रामण्या यजते । संतिष्ठते राजसूयः । ॥ ३ ॥ द्वितीयः ॥

II. 119. 1. अथेममिष्टिकल्पं पञ्चदशसामिधेनीकं च सप्तदशसामिधेनीकं च समामनामस्तत्र[1] सिद्धं[1] याजमानं बौधायनस्य कल्पो[2] । यथाम्नायꣳ शालीके । स्तोꣳस्तृचाननुब्रूयादिति । त्रिः प्रथमामनूच्य तिस्रो ऽनन्तरा अनुब्रूयात्त्रिरुत्तमां । ताः[3] पञ्चदश[3] । पञ्चदशानुब्रूयादित्येकादशेमाः[3] सामिधेन्यः समामनामस्तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां । ताः पञ्चदश । सप्तदशानुब्रूयादेकविꣳशतिमनुब्रूयाच्चतुर्विꣳशतिमनुब्रूयात्त्रिꣳशतमनुब्रूयाद्द्वात्रिꣳशतमनुब्रूयात् षट्त्रिꣳशतमनुब्रूयाच्चत्वारिꣳशतमनुब्रूयाच्चतुश्चत्वारिꣳशतमनुब्रूयादष्टाचत्वारिꣳशत-

---

१ तस्य प्रसिद्धं M.

२ कल्पे M.

३ Thus corrected; ताः पंचदश सप्तदशानु° M Be U H, ताः पंचदशानु° Ben; in M सप्तदश is effaced and G is defective.

मनुब्रूयादिति धाय्यालोक एता धातव्या भवन्त्याग्नेय्यः सर्वा गायत्र्यः । सर्वाणि छन्दाꣳस्यनुब्रूयादपरिमितमनुब्रूयादिति धाय्यालोक एवैता धातव्या भवन्ति । नैताः सर्वा गायत्र्यो । गायत्री पुरोऽनुवाक्या भवति त्रिष्टुब्याज्या । पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवत्युपरिष्टाल्लक्ष्मा याज्या । मूर्धन्वती पुरोऽनुवाक्या भवति नियुत्वत्या यजत्युपाꣳशुयाजमन्तरा यजतीति । दर्शपूर्णमासयोरेवैतदुपपद्यते नान्यत्र । ॥ ४ ॥ तृतीयः ॥

अथेमाः काम्या इष्टयो निष्पुरीषेणैव प्रयोक्तव्या भवन्ति । स[1] संवत्सरं पयोव्रतः स्याद्द्वादशाहं वा यावद्वा[2] शꣳसीत[2] । तासां याः समानसंयोजना एकां चेत्तासां निर्वपेत्सर्वा एवैता निर्वप्तव्या भवन्ति यद्यो एतदनायुक्तो[3] ऽग्निपरिचरो ऽप्युद्धृत्य पुनरप्युद्धरति । कथमत्र प्रायश्चित्तꣳ सिध्यती३ न सिध्यती३ इति । सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति । निर्दिष्टभागो वा एतयोरन्यो ऽनिर्दिष्टभागो ऽन्य इत्युभावु[4]
II. 125. 3. खल्विमावनिर्दिष्टभागौ भवतो । नैव सिध्यतीति । तत्र धृष्टेरादानं । गार्हपत्यस्याकाशाद्धृष्टिमाददीत । तयाहवनीये[5] वैश्वानरस्य कपालान्युपदध्यात् । प्रदक्षिणमावृत्य गार्हपत्ये मारुतस्य

---

१ Found in Ben H, the other MSS. om. the word.

२ Thus G; तावद्वा द्वांसीत Be, यावत्द्वाशंसीत M U, यावत्द्वादशसीत H याव -- सीत Ben.

३ Thus Ben Be G (sec. m.); ॰नुयुक्तो H G (pr. m.) U, ॰नुयुक्तो M.

४ Thus G M U; उभाउ H Be; Ben defective.

५ तया॰ G (sec. m.).

कृतानि पिष्टानि समुप्य[1] संयुत्य[1] व्यभिमृश्य[1] पिण्डौ[1] कृत्वा-
ग्रेण[1] मारुतस्य पिण्डं पर्याहृत्याहवनीये वैश्वानरमधिपृञ्ज्या-
त्संदक्षिणमावृत्य[2] गार्हपत्ये मारुतं त्वचं ग्राहयित्वेमं त्वचं
ग्राहयेदमुं पर्यग्नि कृत्वेमं पर्यग्नि कुर्यादमुꣳ अपयित्वेमꣳ अप-
येदपि वोभयमेवोभयत्र कुर्यात्तस्य शृतस्यासादनं दक्षिणं[3]
परिधिसंधिमपरं[4] विमुच्य दक्षिणं वा परिधिमग्रेण । सिद्ध-
125. 11. मत ऊर्ध्वमेतस्मिन्वा एतौ मृजाते यो विद्विषाणयोरन्नम-
126. 22. त्तीतीतरमितरेणेत्येवैष[5] उक्तो भवति । यं मृधोऽभि प्रवे-
पेरन्राष्ट्राणि वाभि समियुरिति । प्रतिवेशा राजानो मृधः ।
127. 15. स्व एव जनपदा[6] राष्ट्राणि विशो । यो हतमनाः स्वयंपाप
इव स्यादिति । सति बले हतमनाः स्वयंपाप इव स्यादिति ।
127. 21. साधुरूपे कुले स्वयंपापो । यस्मै प्रत्तमिव सन्न प्रदीयेतेति ।

---

१ Thus Be M; संयुत्यव्यूह्याभिमृश्य U G, समुप्यसंयुत्यपिंडौ व्यकृत्वाग्रेण Ben, संयुक्तव्यूह्यभिमृश्य H.

२ Thus (अधिपृंज्यात्) Ben, अधिपृश्यात् M, अधिव्रज्यात् G H U, अधि-प्रपृज्यात् Be, cp. XXVI. 6 : 279. 9 : अधिपृञ्जन; it is synonymous to अधिपृञ्ज्यात् ।

३ Om. Ben.

४ Thus all the MSS. exc. M, which has परिधिसंधिमन्वितरं; is अपरं to be cancelled ? A prayoga omits it.

५ Thus G (sec. m.), °न्नमत्तीतरमितरेणेत्येष U, °न्नमत्तीतिरमितरेणेत्येष Ben, °न्नमत्तीतरिमितीतरंमितीतरेणेत्येवैष M,° न्नमत्तितरमितीतरेणेत्येष एवैष Be, °मितरेणेत्येष H (partly defective).

६ वा ins. G.

CTOR GENERAL

II. 128. 17. प्रत्तमनुपाकृतं[१] प्रतिबध्यमानमेवैतद्भवत्यथास्यामध्वरकल्पाया-
मिडान्तं[२] प्रथमं तन्त्रं कुर्यादेवं द्वितीयं । तृतीयेन सहावशेषं
वर्तयेत्कथमत्र भक्षा इति । तत्रतत्र वा भक्षयेदपि वा
II. 130. 4 सर्वासाꣳ समवदाय हुत्वान्ततो[३] भक्षयेदनड्वान्होत्रा देय इति ।
II. 130. 7. यजमानस्यैवैष गोष्ठाद्दातव्यो भवति । वेदिं परिगृह्यार्धमुद्ध-
II. 131. 6. न्यादर्धं नेति । दक्षिणं वा वेदेरर्धमपरं वेत्यैन्द्रस्यावदाय
वैश्वदेवस्यावद्येदथैन्द्रस्योपरिष्टादिति । द्वे एवैते अवदाने उक्ते
II. 131. 9. भवत । उपाधाय्यपूर्वयं[४] वासो दक्षिणेति । प्रवेणतो[५]
वान्ततो वा ताम्राणि वा नीलानि वा सूत्राण्युपहितानि[६]
II. 131. 13. भवन्त्यपि वोपधानरज्जुरेवैषोक्ता भवत्यथास्याꣳ संज्ञानेष्ट्याꣳ[७]
सकृदेवानुवाचयेत्सकृदाश्रावयेद्द्वे ह्यस्यै याज्यानुवाक्ये भवतः ।
॥ ५ ॥

---

१ Thus Be; °मनापकृतं M G (pr. m.), °मनापापकृतं Ben H U, °मनापाकृतं G (pr. m.); °मनापाकृतमप्रति °G (sec. m.).

२ Thus (प्रतिबध्यमान°) M G U, प्रतिवध्य° the other MSS. (G, अप्रतिब° sec. m.).

३ Thus Ben, हुत्वाततो G U M, हुत्वातितो H.

४ Thus (cp. XIII. 20 : 131. 5) M only, उपधाय्य° the other MSS. and the Viv.

५ Thus M Be, प्रतिवेणतो Ben. प्रवतो H, प्रणवतो G U, प्रणतः the Viv. (both copies).

६ Thus Ben M Be °हतानि G H U.

७ Thus Ben Be U G, संज्ञान्येष्ट्यां M H; the correct reading seems to be (see XXIV. 3 : 187. 7) संज्ञानीष्ट्यां ।

I. 132. 16. अथ वै भवति यदि नावगच्छेदिममहमादित्येभ्यो[1] भागं
निर्वपाम्यामुष्मादमुष्यै विशो ऽवगन्तोरिति निर्वपेदिति निरु-
प्योपरमति[2] । परिदानान्तं कर्म कृत्वाथैतान्व्रीहीन्कृष्णाजिने
समुप्योत्तरार्धे ऽग्न्यगारस्यासञ्जयेद्यथावगते सꣳसादयेत्प्रोक्षण-
I. 133. 15. प्रभृतिना कर्मणा प्रतिपद्येत । सिद्धमत ऊर्ध्वं । यथा नख-
निर्भिन्नायामेवꣳ शतकृष्णलायां । पुरा वा तण्डुलानामावप-
नाद्रुक्ममवदध्याच्छृतमुत्तरमपि[3] वैनꣳ शृतमेव सुवर्णरजताभ्याꣳ
II. 136. 9. रुक्माभ्यां परिगृह्यान्तर्वेद्यासादयेदाग्नेयस्य च सौम्यस्य चैन्द्रे
समाश्लेषयेदिति । व्यभिमृष्टानां पिण्डानां पुराधिपृञ्जना-
I. 138. 12. त्समाश्लेषयितव्यं[4] भवति । सर्वेषामभिगमयन्नवद्यतीति[5] सदै-
I. 140. 17. वतस्य[5] सस्विष्टकृत्कस्येत्येवेदमुक्तं[6] भवत्यथो खलु यावतीः समा
एष्यन्मन्येत तावन्मानꣳ स्यादिति । त्रिꣳशद्वर्षस्येत्यात्मप्रतिमानं
कुर्वीत । चत्वारिꣳशद्वर्षस्येत्यात्षष्टिमानं कुर्वीतैष एवैतस्याभि-

---

१ इदम् instead of इमम् Be Ben H M.

२ Probably इति has fallen out.

३ अवदध्यात् Ben M, उपदध्यात् Be G U H.

४ Thus (°धिष्टंजनात्) M G (sec. m.), °धिव्रजनात् U H G (pr. m.), °धिंजनात् Be; Ben is defective; cp. अधिष्टञ्जनात् XXVI. 5: 277. 2. Bhavasvāmin gives the periphrase: प्रागधिश्रयणात् ।

५ Thus U G Ben; °तीतिसदैवस्य M, °तीतिसदैवतस्य H, °तितीडेदैवतस्य Be.

६ Thus M only; सस्विष्टकृत्स्ये° Be, सस्विष्टकृतस्ये° or स्विष्टकृतस्ये° the other MSS.

II. 142. 12. वृद्धिकल्पो[१] । ऽथ वारुणेषु च संज्ञानेष्ट्यां[२] च सकृदेवानुवाच-
II. 142. 16. येत्सकृदाश्रावयेत्सकृत्प्रदाना: समानदेवता । आपोनप्त्रीयं चरुं
पुनरेत्य निर्वपेदिति । को नु खल्वपां नपाद्भवतीति । वैद्युत
II. 145. 12. इत्येव ब्रूयात्कृष्णमधु चेति । पौत्तिकमित्येवेदमुक्तं[३] भवत्यन-
स्निगधमिति । त्रिवल्मीकमित्येवेदमुक्तं[४] भवत्यथाप्युदाहरन्ति
II. 149. 13. त्रिच्छर्दिष्कमित्येवेदमुक्तं[५] भवति । यथा त्रिधातावेवं[६]
संदिग्धपुरोडाशस्यावदानकल्प: । ॥ ६ ॥ चतुर्थ: ॥
II. 152. 2. स सर्पानसृजतेति । मासा एवैत[७] उक्ता भवन्ति । स
II. 155. 10. वयांस्यसृजतेति । छन्दांस्येवैतान्युक्तानि भवन्ति । स वैव
II. 155. 13. स्यादिति । पुराणगार्हपत्यमभ्युपदिशन्ति । तस्य पशुवेलाया-
मुल्मुकमादाय दक्षिणया द्वारोपनिर्हृत्य दक्षिणेन सद: परीत्य
दक्षिणेन मार्जालीयं धिष्णियं पर्याहृत्यान्तरेण यूपं चाहव-
नीयं चोपातिहृत्यान्तरेण चात्वालोत्करावुदङ्ङुपनिर्हृत्य तेन
पशुं अपयेयुरथ यदाहवनीयादुल्मुकं स्यादपया तत्सहा-

---

१ एतस्य om. M ; Ben Be are defective here.

२ संज्ञान्येष्ट्यां again M G U H, see above.

३ पौतिक° M Ben, वौतिकं the Viv. (one copy), पौतीक° G U, पौत्रीक H Be and another copy of the Viv.

४ °वल्मीक° Ben H, °वल्मिक° Be M G U.

५ Thus Ben ; त्रिच्छदीत्ये° M, त्रिच्छदित्ये° Be, त्रिविच्छतीत्ये° H G U.

६ त्रैधातावेवं Be, त्रिधातवेवं M, त्रि (or त्रे° त्रै°) धातवीयेवं the other MSS.

७ Thus M only, एवैता all the other MSS.

हरेयुः । किंदेवत्यानि खल्वपाव्यानि भवन्तीति । द्वे प्राजा-
I. 156. 14. पत्ये आग्नेयं वायव्यं वैश्वदेवमितीष्टर्गो वा अध्वर्युर्यजमान-
स्येष्टर्ग इत्युष्णाग्रमित्येवेदमुक्तं[१] भवत्यथाप्युदाहरन्त्यध्वर्युरेवैष
उक्तो भवत्यासन्यान्मा मन्त्रात्पाहि कस्याश्चिदभिशस्त्या इत्यनु-
व्याहारो ह[२] वा आसन्यो मन्त्रस्तस्मान्मा पाहीत्येवेदमुक्तं
I. 160. 14. भवति । तस्माद्यज्ञवास्तु नाभ्यवेत्यमित्यहोरात्रावित्येकं । याव-
दग्नयः प्रीताः[३] स्युरित्येतदेकं । यावदेनमभिवर्षेदित्येतदपरं ।
II. 163. 9. द्वौ समुद्रौ विततावजूर्यावित्यहोरात्रावेवैतावुक्तौ भवतः ।
पर्यावर्तते जठरेव पादा इत्युदरे पादा इत्येवेदमुक्तं भवति ।
तयोः पश्यन्तो अतियन्त्यन्यमपश्यन्तः सेतुनातियन्त्यन्यमित्यहः
पश्यन्तो अतियन्ति रात्रिꣳ स्वप्नेन सेतुनातियन्त्यन्यमिति ।
I. 163. 19. द्वे द्रप्सी सततौ वस्त एक इत्यादित्यो ऽहोरात्रे वस्त इत्ये-
वेदमुक्तं भवति । तिरोधायैत्यसितं वसानः शुक्रमादत्ते अनु-
हाय जार्या इति । रात्रिं वसानस्तिरोधायैति शुक्रमादत्ते
II. 167. 8. ऽहरित्येवेदमुक्तं[४] भवति । कीटावपन्नस्येति । कतमो नु
I. 167. 10. खल्वयं कीटो भवति[५] । य एवैष पिण्डान्संवर्तयतीति । नित्ये

---

१ Thus ( उष्णाग्रम् ) M G U H and the Viv. (periphrase : दर्वीं वा उल्मुकं वा ); उल्लप॰ Be, उ–प॰ Ben.

२ Only given by M Be.

३ All the MSS. om. the visarga and Be reads प्रिता ।

४ ऽहरि॰ MSS.

५ इति ins. M G U

ग्रहणे वैष्णवीमृचमनुवर्तयतीति । पृषदाज्य एवैषानुवर्तयि-
तव्या[१] भवति[२] । ॥ ७ ॥

II. 171. 8. अथातो ऽतिग्राह्यान्व्याख्यास्याम । इमे न्वेव[३] पृष्ठ्यातिग्राह्याः पञ्चैन्द्रा वाजपेये । परःसामानस्त्वार्वाक्सामानस्तु सौर्यौ वैषुवते । वैश्वकर्मणादित्यौ गवामयने । प्राजापत्यौ महाव्रते । बार्हस्पत्यौ बृहस्पतिसवे । वैमृधे चोद्भिदि च लिषिमति च वृषा सो अꣳशुः पवत इति च । द्वावश्वमेधे महिमानावार्देशादेवाश्वस्य वपां महिमाभ्यां[४] परिजुहुयात् । कथमु खलु परःसाम्नां भक्षो भवतीति । रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसो[५] ऽङ्गिरोषधीभिः पीतस्यौषधीभिः प्रजाभिः पीतस्य प्रजाभिः प्रजापतिना पीतस्य मधुमत उपहूतस्योपहूतो[५] भक्षयामीत्येष एवार्वाक्सा-

II. 177. 18. म्नामाहृत्तो भक्षो । ऽष्टाप्रूड्ढिरण्यं दक्षिणेत्यष्टापिलकमित्येवेदमुक्तं[६] भवति । द्वौ चेद्गर्भौ स्यातां द्वादशप्रूट् स्यादेको ह

---

१ Thus M; नुवर्ति(र्तौ)तव्या Be G H, °नुवर्तयितव्यं U, नुवर्तव्या Ben.

२ इति ins. M G U.

३ त्वेव MSS.; the Viv. points to न्वेव।

४ Thus (with °मा°) all (only महीभ्यां Ben), also the Vivaraṇa.

५ ...५ Thus acc. to the Viv. and cp. Āp. XXI. 21. 4. The MSS. more or less corrupt.

६ Thus Be G U; °ष्टाफलक° M; °ष्टापूत्यिपिलक° H; Ben altogether corrupt. Is पिलक = पिडक ? or are we to read पुलाक? The same word occurs VII. 6: 209. 18.

महाकोशः स्याद्वाववान्तरकोशौ स्यातामथास्थिगर्भाया[1] आज्येनैवैतान्यस्थानि[2] समुदायुत्य मध्यमेन पर्णेनान्तःपरिधि निनयेद्भूर्भुवः सुवरिति । ॥ ८ ॥ पञ्चमः ॥

180. 5. यदालब्धायामभ्रो भवतीत्यालब्धायां चेदभ्रः स्यात्तमꣳस्थापयेदेवाथ चेदुपाकृतायामभ्रः स्यादन्यमेतस्मिन्स्थान उपाकृत्यो-
180. 12. sqq. त्तरममेघसंपन्नमेतयागमयेरन्नित्यथेमे[3] जया अभ्यातानाः[4] राष्ट्रभृत[4] इत्याहिताग्नेश्चानाहिताग्नेश्चान्यत्र विहाराद्दृष्टा भवन्त्यभिसमारम्भात्त्वेवैनानाचार्याः[5] प्राक् स्विष्टकृत उपजुहुत्यष्टौ वसव इति । कतमे नु[6] खल्विमे वसवो भवन्तीति । पृथिव्यन्तरिक्षं द्यौरग्निर्वायुरादित्यश्चन्द्रमा आप इत्येते ऽष्टौ वसव । एतेषु वा इदꣳ सर्वं प्रतिष्ठितं यदिदं किंच । य एवं वेद प्रत्येव तिष्ठत्येकादश रुद्रा इति । प्राणा एवैत[7] उक्ता भवन्ति । द्वादशादित्या इति । मासा एवैत[7] उक्ता भवन्ति । पञ्च गृह्यन्ते नवनव गृह्यन्ते पञ्चधा विगृह्यन्ते । नवनवाꣳशवो

---

१ Uncertain reading; °गर्भाया the Viv.; °गर्भयाजमाज्येना° Ben, गर्भयागमाज्ये° M, °गर्भमाज्येना° Be G U, गर्भैमाज्येना° H.

२ °स्थानि G Be and the Viv., °स्थीनि M U Ben, °स्थिनि H.

३ Thus ( °त्तरममेघ° ) M, °त्तरंमेघ° or °त्तरमेघ° the other MSS., but cp. the Vivaraṇa: उत्तरस्मिन्मेघवर्जिते ।

४ Thus M; जया अभ्यातानाराष्ट्र° Be G U, जयाभ्यातानाराष्ट्र° Ben H.

५ Thus, in accordance with the Viv., G; °पिसमारंभा° M Be, °विसमारंभा° U Ben H.

६ Om. M.

७ Thus both times M and G (sec. m.); एवैता the other MSS.

भवन्त्यथ य एव दशमो मन्त्र एतेषामेवैषो ऽभिग्रहणार्थो[1]
II. 192. 10. दृष्टो भवति । तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यान्नं नाद्या-
II. 196. 2. दिति । भैक्षाय प्रत्यवस्थितायैवैषा दातव्या भवति । किंदे-
वत्या उ खल्वतिरिक्तसोमा[2] भवन्तीति । यंयं ग्रहमभ्यतिरि-
च्येरꣳस्तत्तद्देवत्या[3] एव स्युरित्येतदेकमथापरं । विज्ञायत उ
खल्वेषां[4] ब्राह्मणमथ कस्मादैन्द्रो यज्ञ आ सꣳस्थातोरित्येतस्मा-
II. 199 5. दैन्द्रावैष्णवा एव भवन्ति । तेन श्रीतीभवता षडहसꣳस्थां
काङ्क्षेयुरिति । षडहब्राह्मणमेवैतद्भवत्यथ चेदहःसंयोग[5] एव-
मापद्येत[5] यथापि नव मध्यमानि सांवत्सरिकाण्यहानि संनि-
गच्छेयुस्तदानीमेवैनꣳ श्रीतीकृत्वा संचिनुयुरथ चेदुदयनीये
ऽतिरात्र[6] एतदेव[6] । प्रजा वै सत्रमासत तपस्तप्यमाना अजु-
ह्वतीरिति । तत्पृच्छन्ति[7] कतमत्तत्सत्त्रं[8] भवतीति । यदेवै-

---

१ Thus M and the Viv. ; all the other MSS. स्य° instead of भि°

२ तिरिक्तः सोमो भवतीति M. Ben (the last without इति), °तिरिक्त-सोमा भवंतीति the other MSS.

३ °देवता MSS.

४ Thus G M U H; खल्विषां खल्वे Be, खल्वेब्राह्म Ben. The last reading seems to point to खल्वेकेषां ब्रा°, cp. the Viv. : अन्येषां ब्राह्मणम् ; but the Brāhmaṇa here cited is to be found TS. III. 3. 7. 3.

५ Thus M and the Viv. ; °संयोगं एवमा° G U, संयोगमेवमा M Be H.

६ Thus M ; तिरात्रे एतदेव H U (sec. m.) तिरा चतदेव G U (pr. m.), तिराचौतदेव Ben, तिराचिएषैतेव Be.

७ इच्छंति M only (cp. XIV. 1 : 152. 5), इच्छति all the other MSS.

८ Thus corrected ; कतमत्स° M Be U H, कतमत्चषत्चं Ben G (sec. m.).

तदनाहिताग्नयो वृथाश्रमꣳ श्राम्यन्त्येतत्सत्त्र[1] भवतीति । ॥ ९ ॥ षष्ठः ॥

I. 204. 2. आश्विनं प्रागाश्विनमिति । कियन्नु खल्वाश्विनं भव-
204. 10. तीति । [2]द्वियोजनं वा यावद्वाश्वो ऽह्ना गच्छेद्विस्तावा[3] वेदि-
र्भवतीत्याग्निकस्य प्रक्रमस्य चतुरश्रकृतस्याच्छायामानमाददीत । स प्रक्रमः स्यात्तेन वेदिं विमिमीतापि वा विꣳशत्यास्य रथाक्षाणामेकविꣳशत्यास्य पदानामष्टाङ्गुलस्य च[4] चतुर्विꣳशं भागमाददीत । स प्रक्रमः स्यात्तेन वेदिं विमिमीते । त्रिस्तावो[5] ऽग्निर्भवतीति[5] । त्रयः सप्तविधाः । स एकविꣳशति-
I. 204. 5. विधो । ऽथैतौ ह्रदौ मध्यतो देवयजनस्य जोषयत इति । किमर्थौ[6] खल्विमौ ह्रदौ भवत इत्यश्वस्नावनो ह दक्षिण
208. 18. आवभृथिक उत्तरो । द्वौ दासावनुजायै च पुत्रो ऽन्वाधेयायै चेति । यो ऽस्य पितुरनुजायाः पुत्रः स पुरस्तान्नयत्यथ यो
208. 19. ऽस्य मातुरन्वाधेयायै पुत्रः सो[7] ऽपरो[7] । जरत्पूर्वया सव्यं
I. 209. 8. जानु वेष्टयित्वेत्युपधानरज्जुरेवैषोक्ता भवति । शतं वै[8] तस्या

---

१ Thus Ben H U G (pr. m.). श्राम्यंतेतत्स M श्राम्यंतेतत्स° Be G (sec. m.).

२ कियन्नु खलु ins. Be M, कथं नु खलु H.

३ स्तावान्वे° M Be.

४ च given only by M and G (sec. m.), cp. XXX. 4 s.fin.

५ त्रिस्तावान्वेदिर्भ° M Be, त्रिस्तावावेदिर्भ° H.

६ नु ins. Ben.

७ Thus G M Be; सोऽग्नो H U, सोऽयमो Ben.

८ Are we to supply वै also XV. 5: 209. 8 or to accept that the Karmānta points directly to T Br. III. 8. 9. 3?

II. 209. 11. राजपुत्रा इति । प्रतिहिता एवैत उक्ता भवन्ति । अतऽ[1]
II. 211. 5. राजान[1]उग्रा इति । राजन्या एवैते नाभिषेच्या[2] भवन्त्यथ
सावित्रमष्टाकपालं प्रातर्निर्वपतीत्येषैव[3] प्रथमा सावित्री ।
वैश्वदेवप्रभृषि द्वितीयापराह्णे तृतीयै तदचैकाह्निकं कर्म
जानीयादुत्तरतस्य देवयजनादुदवस्येच्चातुर्मास्यिकानां पशूना-
II. 217. 18. मेवं[4] वायव्याय[5] पशव एवं तूपराय[6] । सप्ताहान्येतयेष्ट्या यजत
इति । कथमत्र भक्षा इति । तत्रतत्र वा भक्षयेदपि वा पुर-
स्तादेवैतस्मै सप्ताहाय । यूपमाम्नाये[7] राज्जुदालमग्निष्ठं[7] मिनो-
तीति । श्लेष्मातक इत्येवेदमुक्तं भवत्यथाप्युदाहरन्ति राज्जु-
दालमग्निष्ठं मिनोति भ्रूणहत्याया अपहत्यै । पौतुद्रवावभितो
II. 223. 5. भवतः पुण्यस्य गन्धस्यावरुद्ध्या इति । तृतीयं दक्षिणानां ददा-
तीत्याग्निकानामु[8] ह[8] तृतीयं कामप्रेण सह तृतीयमतिराचे
II. 223. 14. तृतीयं । चतुष्टोम एव भवति[9] । चतुरुत्तरीय[10] एष[10] चतु-
ष्टोमो भवति । ॥ १० ॥

---

१ Read अतमराजान ?

२ Conjectural reading; नाभिस्थेया M, नाभिषिच्या the other MSS.

३ Thus G Ben; M om. एव, reading त्वेषा; ०त्येवैषैव U H, त्येवेषेव Be.

४ मेव M G U.

५. ०व्याये Be H U.

६ इति ins. M.

७ Reading and interpunction dubious; ०म्नायेराज्जु० M, ०म्नायेतराज्जु० G, म्नायेत् राज्जु० the other MSS.

८ Thus G M Be; ०कानामुदाहृतं U H, Ben defective.

९ इत्येके ins. M only.

१० ०रीया एष G and the Viv.; ०रीयारेष M Be, ०रया (or ०पा) रेष Ben U H.

225. 7. एकस्मै स्वाहा द्वाभ्याꣳ स्वाहेति । कथमु खल्वेताननु-
226. 8. वाकाञ्जुहुयादिति । यथाप्रकृत्यस्तथानन्तरायꣳ[1] होतव्याश्चतु-
र्विꣳशतिꣳ रशना आदाय यूपानभ्यायन्ति चतस्रश्चतस्र इतरे
परिक्रमिण इति[2] । कथमेतासु नियुञ्ज्यादित्यश्वस्तूपरो
गोमृग इति ते त्रयः समानरशना । ररात्र्येषु तिस्रः । पर्य-
ङ्ग्येषु पञ्चाग्नये ऽनीकवते रोहिताञ्जिरनड्वानित्येतेष्वष्टौ[3] ।
सोमाय स्वराज्ञे ऽनोवाहावनड्वाहावित्येतेषु सप्तायैतेषां त्रय-
स्त्रयः समानरशना । मुख्यस्यैवैषां चतुर्थी भवति । समानं
कर्मा पर्यग्निकरणात्पर्यग्निकृतानामेतेषां पशूनामूनविꣳशति-
रुत्सृज्यन्त[4] एकचत्वारिꣳशतमतिशिष्यन्ते । द्विचत्वारिꣳशत-
मेषाꣳ[5] शासा[6] भवन्त्यश्वे[7] ऽत्र[7] द्वौ समासं गच्छतो । ऽथेत-
रेषां प्रतिपशु[8] संपद्यन्त[9] इन्द्राग्निभ्यामोजोदाभ्यामुष्टाराविति ।
235. 6. प्रासङ्ग्यावेवैतावुक्तौ[10] भवतो । ऽथैतस्मिन्कल्मलिशर्च[11]

---

१ ०तथानंतराय MSS. (only G : ०नंतरा see m. and M : ०तथांतरायं) ।
२ इति supplied by me.
३ ०नितिवेष्वष्टौ G U Be.
४ जन om. M, जना read Be U.
५ एतेषां instead of एषां G U H.
६ Thus M ; शसा G Be, शाखा Ben U H.
७ Thus M Be G (sec. m.) ; ०श्वेन Ben, स्वत U H.
८ Thus Be G, ०पशुꣳ or ०पशुं the other MSS.
९ ०पद्यते Ben H.
१० Thus G M Be ; सप्रसंग्या० Ben, सप्रासंग्या० U H.
११ Thus ( शल्मलिशर्चं वा० ) M, ०शच Be Ben H U, ०वचाशुपि० G (sec. m.).

आशुपिष्टानि[१] संयुत्येत्याशुकानामेवैतानि व्रीहीणां पिष्टानि
शल्मलिश्लेष्मणा संयुतानि[२] भवन्ति। पृथक् प्रतिप्रस्थातारो ऽव-
II. 240. 4 द्यन्ति। तेषां मैत्रावरुणा एवानुब्रूयुस्त्वार्यैवैतानि प्रदानानि[३]
भवन्तीक्षुवर्दाय स्वाहा बलिवर्दाय स्वाहेति। सूर्याचन्द्रमसा-
वेवैतावुक्तौ भवतो। ऽथाप्युदाहरन्ति संवत्सरो वा इक्षुवर्दः
II. 242. 5. परिवत्सरो बलिवर्द इति। तस्य मूर्ध्नि जुहोति[४] जुम्बकाय
स्वाहेति। किंदेवत्या उ खल्वियमाकृतिर्भवतीति। वारुणी-
II. 242. 10. त्येव ब्रूयात्किंकिदीविर्विदीगय इति। विदिदिहीविकीदी[५]ह
II. 243. 4. किकिदीविर्भवति। पृषत उ[६] पतंगो[६] विदीगयो[६]। ऽथैता-
न्पशूनुपाकरोत्याग्नेयमैन्द्राग्नमाश्विनमिति। यमा एवैते छागाः
समानयोनयो भवन्ति। तेषामुक्तं चरणं यथैकादशिनानां
II. 244. 2. पशूनां। किंदेवत्या उ खल्वृतुपशवो भवन्तीत्यृतुदेवत्या
इत्येतदेकमथापरमाग्नेयाः प्रथमा ऐन्द्रा द्वितीया वैश्वदेवा-
स्तृतीया मैत्रावरुणाश्चतुर्था बार्हस्पत्याः पञ्चमाः सावित्राः षष्ठाः
संवत्सराय निवचस इति प्राजापत्याः। ॥ ११ ॥ सप्तमः ॥

---

१ Thus (शल्मलिश्ले॰ ष्मा॰) M, ॰श्च Be Ben H U, ॰वचाशुपि॰ G (sec. m.).

२ संयुता Ben, संयुक्तानि the other MSS.

३ om. Be.

४ All the MSS. exc. G ins. इति।

५ Wholly uncertain reading. I have accepted the reading given by Be; विदीदिहीविही M, विदिट्वदष्टीकिदी U, विदिद्विदष्टीकीदी H, विद - - दिकाकृति Ben, विड्डिभिः किड्डिहेति G (sec. m.).

६ Thus Be, उप्तंगोविंदी॰ M, उपहतंगोविदी॰ the other MSS.

II. 245. 1. अथायं द्वादशाह उभयविधो भवत्यहीनो वा सत्त्रं वा । स[1] यद्यु[1] हैको[1] दीक्षते ऽहीनो भवत्यथ यदि बहवः सत्त्रं । यदि चैवाहीनो यदि च सत्त्रमुभयथैवोभयतोऽतिरात्रो भवत्यन्यतरतो ऽतिरात्रा ह्यहीना भवन्त्युभयतोऽतिरात्राणि सत्त्राण्यादेशादेवोभयतोऽतिरात्रो ऽहीनो भवत्यादेशात्तु[2] सत्त्रमनतिरात्रं यथैतदग्निष्टोमायनꣳ सारस्वतमयनं[3] विश्वसृजामयनमिति ।
II. 245. 7. कथमु खल्वेषाꣳ संनिवापः स्यादिति । सावित्रेभ्यः प्रथमꣳ संनिवपेरन्हुत्वा सावित्राणि विसमारोह्याग्निहोत्राणि जुहुयुरथ वायव्याय पशवे संनिवपेरन्वायव्येनेष्ट्वा विसमारोह्यैवाग्निहोत्राणि जुहुयुरथ यदि[4] दीक्षणीयायै संनिवपेरꣳस्तेषां तत्संन्युप्तान्येव[5] स्वर्युदवसानीयाद्युदवसायैव[6] प्रतिवेशा यज्ञपुच्छानि कुर्वीरन्कथमु खलु संदीक्षिता विष्णुक्रमान्क्रमेरन्निति । महापाशाभिपरीता[7] वा क्रमेरन्नपि वा

---

१ Thus Ben, सयद्येको the other MSS.

२ Before आदेशात्तु G (sec. m.) ins.: आदेशादनतिरात्रोऽहीनो भवति; the Viv. makes no mention of these words.

३ Thus U G (pr. m.) Ben, °स्वतामयनं the other MSS, only H: सारस्वतायनं।

४ यद् M G U H.

५ तत्तत् instead of तत् G U, तेतत् H.

६ स्वर्युदवसाना° Ben, स्युर्द्युदवसानीयात्यु (द्यु) दव° Be M, स्युद्यदवसानीयादुवसाय H, स्युदवसानीयादुद्वसाय G; cp. Āp. XXI. 2. 15.

७ Thus, hesitatingly, emended; °पाशाभिःपरीता MSS. and the Viv.

पाशानभिसंधित्वाभिक्रमः[1] स्यादथाह[2] क्रमस्वाथाह[2] क्रमस्वे-
II. 247. 1. III. 164. 1. त्यतिगुरुस्तथा[2] कल्पः स्याद्यथो एतत्सूत्रं भवति षष्ठ्यामुपसद्यु-
त्तरवेदिं संनिवपन्त्यपि[3] वैकादश्यामित्यनग्निचय एवैतदुप-
II. 247. 11. पद्यते न साग्निचये । कथमु खल्वेषामहीनसंततिर्भवतीति ।
वसतीवरीणामभिग्रहणेनाध्वर्युः संतनोतीध्माबर्हिषोरुपकल्पनेन
च पयसां विशासनेन च वाचो[4] यम्येन[4] ब्रह्मातिप्रैषेण होता
पुनरभ्यासेन च सुब्रह्मण्ययोद्गाता[5] यज्ञस्य पुनरालम्भेन यज-
मानः[6] । प्रचरन्त एवैतद्ध्रुवाज्यं समाददते । ऽथेमानि सव-
नानि बर्हींषि संचिनुयुस्तेषां महारात्र उत्थायाग्नीध्र
आज्यानि गृह्णन्तो ज्वलयेरन्निति । ॥ १२ ॥ अष्टमः ॥

II. 248. 3. कथमु खलु दिवा प्रातरनुवाकस्याह्न उपक्रमो भवतीति ।
तत्पत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा समुपनह्य
राजानं काले वसतीवरीरभिगृह्याहीनसंततिं कृत्वा ग्रावो-
वायव्यं संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं

---

१ Thus H U (without the visarga); पाशानभिः पर्यधित्व॰ Ben, पाशिनीःसंधित्वाभिक्रमः M Be G (the last two omitting the visarga at the end).

२ Thus G (which has only both times ॰थाहं instead of थाह); instead of the second क्रमस्वेति Be H U have: क्रम इति, M: क्रमस्व इति।

३ Thus H only; ॰वपत्यपि G U Ben, ॰वपत्यत्यपि M Be.

४ वाचयम्येन M. Is वाचंयम्येन the correct reading?

५ Thus G (sec. m.), ॰ण्यायोद्गाता all the other MSS.

६ Om. M.

हुत्वा समिद्धारा यन्त्याहृत्य समिध[1] आहवनीय उपसादयन्ति । परिहृतासु वसतीवरीष्वाहुतायाꣳ सुब्रह्मण्यायाꣳ संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्य पयाꣳसि विभिद्याग्नीध्रं हुत्वाग्नीध्रे संवेशनरूपाणि कृत्वा प्रातःकर्मणा प्रतिपद्यते । प्रसिद्धेन महारात्रिकेण । सिद्धमत ऊर्ध्वमुपस्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्याश्चक्रे पृष्ठानीति । त्रिवृच्चैकविꣳशश्च चक्रे आग्नेय उपस्तम्भनं । पञ्चदशश्च त्रिणवश्च चक्रे ऐन्द्र उपस्तम्भनꣳ सप्तदशश्च[2] त्रयस्त्रिꣳशश्च[3] चक्रे सौर्य
I. 165. 5. उपस्तम्भनं । यथो एतद्बौधायनस्य कल्पं वेदयन्ते निर्मन्थ्यो मन्त्रवान्भवतीत्याध्वर्यवा एवात्र मन्त्रा आवर्तन्ते नाग्निमन्थ-
I. 250. 9. नीयाः । स्वयमृतुयाजमेवैतदहर्भवति[4] नैतदहरन्योन्यस्यर्तुयाजं यजतीति । ॥ १३ ॥

आश्राव्याध्वर्युरन्यस्मै ग्रहं प्रदायैतेनैव यथेतमेत्य जघनेन हविर्धाने उपविश्यर्तुसंप्रैषमुक्त्वोपोत्थाय हुत्वा व्यवनीय प्रदक्षिणमावृत्य यत्रायाचीत्तत्प्राङासीनो होतृभक्षं भक्षयेत्प्रत्य-
251. 10. ङासीनो[5] ऽध्वर्युभक्षं । पारुच्छेपीर्होता शꣳसति वालखिल्या मैत्रावरुणो विहरति वृषाकपिं[6] ब्राह्मणाच्छꣳसी शꣳसत्येवया-

---

१ M G Be U ins. आग्नीध्र ।

२ पंचदशस्य Be.

३ Thus Ben; ०त्रिंशतस्य the other MSS.

४ इति ins. U H, it is effaced in G.

५ Thus M; प्रत्यग० the other MSS.

६ ०कपीयं M.

मरुतमच्छावाकः । किंकर्मा¹ तर्ह्यध्वर्युर्भवतीति¹ प्रत्याग्रणा-
252. 11.तीत्येव² ब्रूयाद्या एता अध्वर्युरनुष्टुभ उद्धृत्याहरति तास्तस्रो गायत्र्यस्तास्तिस्रो ऽनुष्टुभः । सोम राजन्नेह्यवरोहेत्येतस्यै गायत्र्यै पदमात्रेण राजानमुपावहरेत्कथमु खलु दशममहर्भक्त्या³ सर्वचतुर्विंꣳशं⁴ च भवति⁵ त्रिष्टोमं⁶ चान्यत्र⁷ तूष्णींꣳस्तोमादिति । चतुर्विंꣳशो बहिष्पवमानः पञ्चदशं ब्रह्मसामं⁸ त्रयस्त्रिꣳशमग्निष्टोमसाम । तासासु⁹ ह नवागच्छन्ति⁹ । तास्तु विंꣳशतिः संपद्यन्त । एतदेवापि दशममहर्भक्त्या¹⁰ सर्वचतु-
II. 256. 8.र्विंꣳशं¹¹ च भवति त्रिष्टोमं चान्यत्र तूष्णींꣳस्तोमादित्यु पसृज-

---

१ Thus emended; किकमतिर्ह्यं॰ Ben, किंकर्मातर्ह्य॰ Be G U, किंकर्मातꣳर्ह्य॰ M, किकर्मातर्ह्यं॰ H.

२ Thus G (sec. m.), प्रत्याग्रह्णाती M Be U H, वस्थायग्राणीतीत्येव Ben.

३ Thus Ben and the Viv. only; ॰र्भवतीति or ॰भवति the other MSS.

४ Thus (and cp. XXVI, 16 init.) M Ben Be, सर्वचतु॰ G U H.

५ Om. G H Be.

६ Thus G M Be; भवतित्रिष्टद्ग्निष्टोमं U H, भवतीत्यग्निष्टोमं Ben.

७ Thus M Be (Ben defective), वा अन्यत्र G U H.

८ ॰साम U (sec. m.) M G.

९ Doubtful and conjectural reading; तसासुहनन्वागच्छति Ben, तासासुहनन्वागच्छती M, तासासुहनगच्छंति G U H; Ben defective. The meaning is clear; त्रयस्त्रिंशानां मध्यं (r मध्यात्) नव पंचदशसु प्रक्षिप्यन्ते। तथा तयोः (i.e. the pañcadaśam brahmasāma or pañcadaśam mādhyandinam paramānam and the trayastriṃśam agniṣṭomasāma) चतुर्विंशं भवति।

१० Thus G only (॰र्भक्त्या), ॰र्भवत्या all the other MSS.

११ सर्वचतु॰ Ben Be H.

न्मात्रे वत्सं धारयन्त्यरुणो धयन्निति । किंदेवत्या उ खल्वियमाकृतिर्भवतीति । प्राजापत्येत्येव ब्रूयादिति । ॥ १४ ॥

॥ नवमः ॥

VII. 2. 8. अथेमं द्वादशाहं यद्यग्रैरेव प्रतिव्यूहामस्तस्य नवाहानि प्रतिव्यूहं गच्छन्ति यान्यन्यानि प्रायणीयोदयनीयाभ्यां दशमाच्चाह्नो । ऽथ[1] छन्दोमास्तत्[1] षडेव[1] । स्वस्थानो[2] ह्रि[3] प्रथमस्त्रिरात्रो[4] । गायत्रीप्रातःसवने[5] प्रथमे त्रिरात्रे[6] ऽष्टौ कृत्वो ऽग्रे प्रथममुपांशुभिषवमभिषुणुयादेकादश कृत्वो द्वितीयं । द्वादश कृत्वस्तृतीयं । महाँ इन्द्रो नृवदा चर्षणिप्रा इत्येतया त्रिष्टुभा माहेन्द्रं गृह्णीयाददब्धेभिः सवितः पायुभिष्ट्वमित्येतया जगत्या सावित्रमष्टाकपालान्प्रातःसवनीयान्कुर्यादेकादशकपालान्माध्यंदिनीयान्द्वादशकपालाँस्तृतीयसवनीयान्वसुमद्गणेन गायत्रच्छन्दसा प्रातःसवनीयानर्चयेद्रुद्रवद्गणेन त्रिष्टुप्छन्दसा माध्यंदिनीयानादित्यवद्गणेन जगती-

---

१ ? Thus Be U H; यच्छंदोमास्ताः षडेव M, यत्छंदस्तत्षडेव G, वछंदस्तत् षडेव Ben; the Vivaraṇa also has छंदस्तत् षडेव ।

२ स्वस्वस्थानो Ben, स्वधानो M.

३ Thus B G M, ह्नि U ह्नित् Ben H.

४ Thus, in accordance with the Vivaraṇa, U; प्रथममद्दस्त्रिरात्रो the other MSS.

५ गायत्रीं प्रा॰ G.

६ Instead of त्रिरात्रे here and in the similar passages further on some of the MSS. (Ben H U) तिरात्रे ।

च्छन्दसा तृतीयसवनीयानित्यथ जगतीप्रातःसवने[1] द्वितीये त्रिरात्रे द्वादश कृत्वो ऽग्रे प्रथममुपांशुमभिषवमभिषुणुयादष्टौ कृत्वो द्वितीयमेकादश कृत्वस्तृतीयं। महाꣳ इन्द्रो य ओजसेत्येतया गायत्र्या माहेन्द्रं ग्रहं गृह्णीयाद्वाममद्य सवितरित्येतया त्रिष्टुभा सावित्रं। द्वादशकपालान्प्रातःसवनीयान्कुर्यादष्टाकपालान्माध्यंदिनीयानेकादशकपालाꣳस्तृतीयसवनीयानादित्यवद्गणेन जगतीच्छन्दसा प्रातःसवनीयाञ्श्रपयेद्वसुमद्गणेन गायत्रच्छन्दसा माध्यंदिनीयान्रुद्रवद्गणेन त्रिष्टुप्छन्दसा तृतीयसवनीयानित्यथ[2] त्रिष्टुप्प्रातःसवने[3] तृतीये त्रिरात्र एकादश कृत्वो ऽग्रे प्रथममुपांशुमभिषवमभिषुणुयाद्द्वादश कृत्वो द्वितीयमष्टौ कृत्वस्तृतीयं। महाꣳ इन्द्रो य ओजसेत्येतां गायत्रीं त्रिरभ्यावर्तयेदनुपथामाꣳ। सा जगती संपद्यते। तया माहेन्द्रं गृह्णीयाद्धिरण्यपाणिमूतय इत्येतया गायत्र्या सावित्रमेकादशकपालान्प्रातःसवनीयान्कुर्याद्द्वादशकपालान्माध्यंदिनीयानष्टाकपालाꣳस्तृतीयसवनीयान्रुद्रवद्गणेन त्रिष्टुप्छन्दसा प्रातःसवनीयाञ्श्रपयेदादित्यवद्गणेन जगतीच्छन्दसा माध्यंदिनीयान्वसुमद्गणेन गायत्रच्छन्दसा तृतीयसवनीयानिति। ॥ १५ ॥

॥ दशमः ॥

---

१ Corrected; जगतींप्रा॰ G M Be, जगत्प्रा॰ H U; Ben has a lacuna.

२ इति om. Ben G U.

३ Thus M Be; त्रिष्टुभःप्रा॰ Ben U H G (pr. m.), त्रिष्टुभंप्रा॰ G (sec. m.).

261. 12. अथायं वैषुवतो लभेत मासगणानामित्येक आहुः सप्त-
262. 8. दश दीक्षा द्वादशोपसदो वैषुवतं त्रिꣳशत्तमं। कथमु खलु
गोआयुष्याꣳ स्तोमा[१] भवन्तीति[१]। गौर्नु खलु पञ्चदशो
बहिष्पवमानस्त्रिवृन्त्याज्यानि सर्वसप्तदशं[२] माध्यंदिनꣳ[३] सवनꣳ
सर्वैकविꣳशं तृतीयसवनꣳ सोक्थ्यमथायोस्त्रिवृद्बहिष्पवमानः[४]
पञ्चदशान्याज्यानि सर्वसप्तदशं[५] माध्यंदिनꣳ सवनꣳ सर्वैकविꣳशं
261. 11, 18. तृतीयसवनꣳ सोक्थ्यमथेमौ विश्वजिदभिजितावग्निष्टोमौ
सत्त्रगतौ भवतः। के[६] नु[६] खल्वेतयो स्तोमा[७] भवन्तीत्यभि-
जिन्नु[७] खलु त्र्युदयश्चतुरावृत्तो। ऽथ विश्वजिच्चतुरुदयस्त्र्या-
वृत्तः[८]। कथमु खल्वेकविꣳशतिगर्भौ भवतीत्यभिजितमुपेत्य
पृष्ठ्यꣳ षडहमुपेयुरथ त्रीन्परःसाम्नो ऽथ वैषुवतमथ त्रीन्प्रत्य-
क्साम्नो ऽथावृत्तं पृष्ठ्यꣳ षडहमथ विश्वजितं। कथमु खलु
गोआयुषी विहृते जानीयादिति[९]। पुरस्तादभिजितो गामु-
पेयात्तत्स्थान एवायुर्भवतीति। कियन्तो नु खलु गवामयने

---

१ Thus Be G U and the Viv.; स्तोमा भवन्तीति H, स्तोमो भवन्तीति M.

२ Thus Be M; सर्वस॰ G U H Ben.

३ Thus G (sec. m.); ध्यंदिनाना all the other MSS

४ ॰मानं MSS.

५ Thus M Be; सर्वस॰ G U Ben, सर्वतःस॰ H.

६ कौनु M H U Be G (pr. m.), काउ G (sec. m.), कानु Ben.

७ Thus M Ben G; ॰मो भवती H U Be.

८ ॰चतुरस्त्र्यावृत्तः M H Be (the last two ॰वृतः), Ben defective.

९ इति Supplied by me.

ऽग्निष्टोमा भवन्तीति । ज्योतिरग्निष्टोमस्त्रिवृदग्निष्टोमो विश्वजिदभिजितावग्निष्टोमौ वैषुवतं दशममहर्महाव्रतमिति सप्तेति ह वा इदं गवामयनं प्रज्ञातस्तोमं ब्रुवते । तस्य होत्तरं पञ्च आवृत्तं भवति यदन्यद्गोआयुर्भ्यां च दशरात्राच्च । अनीकानत्रावृत्तान्यहान्गृह्णीयात् । ॥ १६ ॥

अथेमा द्वात्रिंशतमेकादशिन्यो गवामयने । तेषां[1] पूर्वस्मिन्पक्षसि षोडश निष्ठीयन्ते सप्तदश[2] एकादशिन्यै बार्ह-
II. 265. 11 स्पत्यो वैषुवते[3] सवनीयः संपद्यते । तस्य नवाहान्यपशुकान्यतिरिच्यन्त इति । कतमानि खल्विमान्यहानि भवन्तीति । पृष्ठ्यस्य षडहस्योत्तराणि त्रीणि त्रयश्छन्दोमा दशममहर्महा-
II. 262. 12 व्रतमुदयनीयो ऽतिरात्र इत्यभिप्लवांश्चाचीयन्ति च तदङ्गिरसामयनमिति । पृष्ठ्यानामत्र स्थाने ऽभिप्लवानेव दधाति । पृष्ठ्यांश्चाचीयन्ति च तदादित्यानामयनमित्यभिप्लवानामत्र स्थाने पृष्ठ्यानेव दधात्यग्निष्टोमांश्चाचीयन्ति च तत्प्रजापतेरयनमित्युभयेषामत्र पृष्ठ्याभिप्लवानां स्थाने ऽग्निष्टोमानेव

१ Thus M G Be Ben U, तासां H, cp. Āp. XXI. 23. 2.

२ Thus G (sec. m.) and the Viv.; मध्या ins. M Ben, ध्या ins. Ben U G (pr. m.); H. defective; meaning and interpunction uncertain; cp. Āp. XXI. 23. 2.

३ Thus M U Be H Ben; ०वतः H G (sec. m.), ०वतैः G (pr. m.), ०वतेऽ Ben.

II. 267. 9. द्धात्याघाटीभिः[१] पिञ्छोलाभिः[२] कर्करीकाभिरित्याघाट्यो[३]
ऽह्[३] कोलोष्ठा[४] भवन्ति । पिञ्छोला[५] उ ह वीणाकाणभग्ना[६] ।
II. 267. 5. वीणा[७] उ कर्करीकास्तं[८] काल एव ग्रस्त्याहणन्तीत्याहन्त्यादि-
त्यवेदमुक्तं[९] भवति । ॥ १७ ॥ एकादशः ॥

अथ वै भवति ब्रह्मवादिनो वदन्ति स त्वै यजेत यो
ऽग्निष्टोमेन यजमानो ऽथ सर्वस्तोमेन यजेतेति । चत्वारि
पञ्चदशान्याज्यानि । तौ द्वौ त्रिंशद्वर्गौ । तयोरितरस्मिंस्-
त्रिंशद्वर्गे तिस्र उपास्यति । तौ द्वौ त्रिणवत्रयस्त्रिंशौ ।
II. 269. 16. गायत्रं पूर्वं ऽहन्साम भवति त्रैष्टुभमुत्तर इति होतुराज्य-

---

१ Thus G M U, ॰टिभिः Be H.

२ Thus ( पिंछा॰ ) H U G (sec. m.), पिछो॰ G (pr. m.) Be M, पिखो॰ Ben.

३ कर्करी॰ Ben, कर्करि॰ the other MSS.—॰घाद्योरह Ben H U, ॰ध्योहल Ben, ॰घाटयोरह M, ॰घाद्यउह G.

४ ? कोलोष्ठो H, कौलोष्ठा G, कोलोष्ठो M U, कालोष्टौ Ben, कोलोषो Be (compound of काल-ओष्ठ ? ).

५ Thus M H U, पिछोला Be G पिटखोला Ben.

६ ? ? Thus read U H Be ( with var. ॰भ्रष्टा ), वीणाकाणाकाभ्रष्टा M, वीणाकांडभूषा G.

७ Thus G only ; वीणागा Be H U M, वीणाकां Ben.

८ MSS., exc. Ben, कर्करिका॰ ; perhaps the form with short *i* is, after all, preferable.

९ Emended in accordance with the text proper ; instead of ॰हणन्ती॰ the MSS. read हणंती॰ ।

II. 270. 6.मेतानि[1] संपादयेदेवमेवोत्तरे ऽह्नि होतुरेवाज्ये । अथास्यैषा[2] सहस्रतम्यन्यतएनी कण्डूकृतोपकृप्ता[3] भवतीति । सꣳसेविते-त्येवेदमुक्तं भवति । कस्मिन्नु खलु काले लक्ष्मणां पष्ठौहीं

II. 273. 7.वार्त्रघ्नीं दद्यादिति । संग्रामं जित्वा राजन्य एनां[4] दद्यात्कथमु खलु गर्गत्रिरात्रेणर्तुमुखेषु विहृतेन यजेतेत्याषाढे वा[5] श्रावणे वा पक्षे ऽग्निष्टोमेन वा[6] यजेत । तत्पत्नीसंयाजान्तं वा हृदय-शूलान्तं वाहः कृत्वा समुपनह्य राजानं काले वसतीवरीरभि-गृह्याहीनसंततिं[7] कृत्वा ग्रावोवाचय्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं हुत्वा समिद्धारा यन्त्याहृत्य समिध आहवनीय उपसादयन्ति । परिहृतासु वसतीवरी-ष्वाहूतायाꣳ सुब्रह्मण्यायाꣳ संवेशनीयाः समिधो ऽभ्याधाये-ध्मावर्हिः संनह्याविग्रिष्य[8] पयाꣳस्युपवसन्त्यथ श्वो भूते सव-नेष्वा यजेत । तत[9] स्तम्बयजुर्हरति । स एवमेवाहरहर्वसती-

---

१ Thus G U H, होतुराज्यानि Be, होतुराज्यानि एतानि M, होतुराश्रि-तानि Ben.

२ था॰ M.

३ Thus Ben M U, कंडकृतो॰ Be, ॰कंडूकृतो॰ G H.

४ एतां Be.

५ Om. all exc. Ben.

६ Is वा to be cancelled ?

७ ॰वरोभिः परिगृह्य Ben H.

८ Thus G Be U H; ॰ह्यविग्रि॰ the other MSS.

९ तत om. M. Ben; are we to remove it or to read as infra (k. 19). तत्र न ?

वरीः परिहरमाणश्चतुरो मासः सवनेष्ट्या यजते । नाग्निहोत्रं जुहोति न दर्शपूर्णमासाभ्यां यजते । ऽथ चतुर्षु मासेषु पर्यवेतेषु परिहृतासु वसतीवरीष्वाहृतायाꣳ सुब्रह्मण्यायामहरहः संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्य पयाꣳसि विश्रिष्योपवसन्ति । ॥ १८ ॥

अथ श्वो भूत उक्थ्येन यजते । तत्तथैव पत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा समुपनह्य राजानं काले वसतीवरीरभिगृह्याहीनसंततिं[1] कृत्वा ग्रावोवायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं हुत्वा समिद्धारा यन्त्याहृत्य समिध आहवनीय उपसादयन्ति । परिहृतासु वसतीवरीष्वाहृतायाꣳ सुब्रह्मण्यायाꣳ संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्याविश्रिष्य[2] पयाꣳस्युपवसन्त्यथ[2] श्वो भूते सवनेष्ट्या यजते । तत्र तथैव न[3] स्तम्बयजुर्हरति । स एवमेवाहरहर्वसतीवरीः परिहरमाणो ऽपराꣳश्चतुरो मासः[4] सवनेष्ट्या[4] यजते । नैवाग्निहोत्रं जुहोति न दर्शपूर्णमासाभ्यां यजते । ऽथ चतुर्षु मासेषु पर्यवेतेषु परिहृतासु वसतीवरीष्वाहृतायाꣳ सुब्रह्मण्यायामहरहः संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्य पयाꣳसि विश्रिष्योपवसन्त्यथ श्वो भूते

१ ०वरीभि. परिगृ० G U.

२ Thus M U G; संनह्य पयांसि विश्रिष्योप० the other MSS.

३ न read by all the MSS., but seems to be expunged in M.

४ Thus M U H; सासांत्सव० Ben G, मासास० Ben.

II. 273. 1 *sqq.* ऽतिरात्रेण यजते सयज्ञपुच्छेनाथैताꣳ सहस्रतमीं प्राचीं वोदीचीं वावर्तयꣳस्तथा[1] विहारं चात्मानं च न व्यवेयादिति ।

॥ १९ ॥ द्वादशः ॥

किंदक्षिणा उ खल्वहीना भवन्तीत्यहर्गणोऽहर्गणः सहस्रदक्षिणः स्यादित्येतदेकमेकैकमहः सहस्रदक्षिणꣳ स्यादित्येतदेकं । द्वादशशतदक्षिणꣳ स्यादित्येतदेकं । यथाश्रद्धदक्षिणꣳ स्यादित्येतदपरमादेशादेवैतस्मिन्नतिरात्रे सहस्रमनुविहितं ददाति । द्विरात्रप्रभृतयो ऽहीना भवन्त्यैकादशरात्रादथैमान्यहीनाभिपरीतानि[2] सत्राणि भवन्ति यथैतत्संवत्सरगर्भं[3] एकादशरात्र । उभयविधो हि भरतद्वादशाहो । द्वादशाग्नि-
III. 168. 10. ष्टोमा रथंतरसामानः । स ह भरतद्वादशाहो । ऽथोद्यत्स्तोमेषु त्रिवृत्प्रथममहः स्यात्पञ्चदशं द्वितीयꣳ सप्तदशं तृतीयमेकविꣳशं चतुर्थमितीन्वेकमथापरस्त्रिवृत्प्रथमस्याह्नः[4] प्रातःसवनं पञ्चदशं माध्यंदिनꣳ सवनꣳ सप्तदशं तृतीयसवनमथ[5] द्वितीयस्याह्नः

---

१ Thus M; वावर्तयन्स्तथा G, वावर्तयस्तथा U Ben H.

२ Thus G; °हीनाभिः परी ( or रि ) तानि the other MSS.; अहीनापतितानि or अहीनाचरितानि the Vivaraṇa; cp. infra k. 21 s. fin.

३ Thus Ben; यथैनत्सं° the other MSS.

४ °मितीन्वे° or मितीले° MSS.; the following is doubtful; °कमथापरंसचिष्ट G U Ben U M, but in M स is effaced; °कमथापरं सर्वचिष्ट° Ben. The Viv. has अपरस्त्रिष्ट°; if this is the correct reading, we ought to correct also एकम् into एको।

५ The MSS. here are defective; the passage has been restored by me according to Sāyaṇa on TS. VII. 1. 8 (ed. Calc. Vol. VII, 198).

पञ्चदशं प्रातःसवनꣳ सप्तदशं माध्यंदिनꣳ सवनमेकविꣳशं तृतीयसवनमथ तृतीयस्याह्नः सप्तदशं प्रातःसवनमेकविꣳशं माध्यंदिनꣳ सवनं त्रिणवं तृतीयसवनमथ चतुर्थस्याह्न एकविꣳशं प्रातःसवनं त्रिणवं माध्यंदिनꣳ सवनं त्रयस्त्रिꣳशं तृतीयसवनम् । ॥ २० ॥

I.168.12. अथेम औपसदाः पुरोडाशाः शूर्पादानप्रभृतय आम्नाताः । स्रुवाकृत्या चैनान्सह सकृज्जुहुयादौपमन्यवीयेन[1]
I.275.8. कल्पेनाग्नेयानेककपालाननुसरस्वति[2] प्राञ्चो यान्तीत्याहवनीयसकाशाच्छम्यां प्रास्येत्सा यत्र निपतेत्तद्गार्हपत्यस्यायतनꣳ स्यात्प्राचीनं[3] तत आहवनीयो । ऽथ यद्युपर्याण अप उपाधिगच्छेयुरपोनप्त्रीयं चरुं तृतीयसवनीयानामनुनिर्वाप्यं कुर्युर्यद्योपोत्तरेयुः समाप्लवेव[4] शम्यां प्रास्येत्स्थद्वा भवन्ति पश्चाद्वा
I.170.5. भवन्तीत्यभिप्लवानामेवैते[5] ऽपच्छेदा[5] भवन्त्यष्टमे ऽह्नि वाजपेय इति[6] । तत्र यदेव स्तुत्याभिपरीतं वाजपेयिकं कर्म

---

1 Thus Ben, °न्यवेन the other MSS.

2 Thus G (sec. m.) only; °नुसरस्वती all the other MSS. and my two copies of the Vivaraṇa.

3 कुर्वन्ति instead of स्यात् G (sec. m.).

4 ? Thus M G; °ल्वेव U H; समाप्येत Ben, सःसमाप्यप्लवेव Be; the Viv. gives the periphr.: उत्तीर्य समादे(द्दे)शात् ।

5 Uncertain; °वैतेपच्छदा Be, °वैतेपच्छेदा H, वैते-च्छदा Ben, °वैतेपच्छेदा U and G (pr. m.), °वैतेतपदा G (sec. m.), °वैतपच्छेदा M. The Vivaraṇa periphrases: अभिप्लवानामेवान्ते लोपे (or °वान्तलोपे) न पाश्चाः ।

6 इति Supplied by me.

II. 279. 14. तत्कुर्याद्यद्येदꣳ सꣳसदामयनमच्छन्दोमं[1] भवतीति । विज्ञा-
यत[2] उ खल्वस्य छन्दोमभक्तयश्चतुर्विꣳशं चतुश्चत्वारिꣳश-
मष्टाचतुर्विꣳशमिति । ॥ २१ ॥ त्रयोदशः ॥

II. 283. 1. अथायमतिरात्र उभयविधो भवत्यहीनो वैकाहो वापि
तु खल्वस्याहीनस्यैव रूपं । द्वादशोपसदो ऽनेकमहरभि-
विधत्ते[3] । ऽथैकाहस्यैव रूपꣳ । सकृद्दसतीवरीर्गृह्णाति सकृ-
II. 285. 13. त्पशूनुपाकरोत्येकं[4] क्रतुकरणꣳ । समयाविषिते सूर्ये हिर-
ण्येन षोडशिन स्तोत्रमुपाकरोतीत्यर्धास्तमित इत्येवेदमुक्तं[5]
भवति । तस्य चेदनुपाकृत आदित्यो ऽभ्यस्तमियाद्गार्हपत्ये तिस्रः
स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्यथ यस्योक्थ्ये ऽतिरिच्येतेताति-
रात्रं कुर्वीतेत्यतिक्रान्ताः खल्वस्य दीक्षोपसदो ऽतिक्रान्तं क्रतु-
करणमतिक्रान्तꣳ षोडशिनो ग्रहणमथ तदानीमेव षोडशि-
पात्रमुपकल्प्य तिसृभिर्ऋग्भिर्गृह्णीयादथैतेन[6] पुरस्ताद्रात्रि-
पर्यायेभ्यस्तरेत्तत्रैवमेव संप्रैषः[7] प्रतिप्रस्थातराग्रयणाद्‌तीयं गृद-

---

१ Thus (and cp. TS. VII. 4. 2. 3, Pañc. br. XXIII. 19. 8) M G U H; °यनछंदोमं Be, °यनंमछंदोमं Ben.

२ r. विज्ञायन्त ?

३ Thus G (sec. m.), नेकम° Be, नैकम° M Ben G (pr. m.) U (sec. m.), ण्येकम° H.—Instead of अभिविधत्ते (thus M Be G U), Ben: अभिविधवे, H. अभिधवते । The Viv.: अहीनरूपकं द्वादशोपसत्कत्वमेकस्मिन्नहन्य समाप्तत्वं च ।

४ Thus M G U Be; °त्यकं Ben, त्वेवं H.

५ इति om. all exc. M.

६ Thus M Ben; °थैतेन G Be U.

७ प्रष: M G U.

तृतीयानि[1] जाघनीः पृषदाज्यं गोपायाग्नीदाश्विनं ते द्विक-
290. 11. पालꣳ शृतमप्यपररात्रेऽस्त्विति। कस्मिन्नु खलु काल आश्विनो
द्विकपालो निरुप्यत इति। तार्तीयसवनिकैर्वा पुरोडाशैः[2]
सहापि वा पुरस्तादुत्तमस्य रात्रिपर्यायस्य। त्रिवृद्वै स्तोमाना-
309. 11. मवमस्त्रिवृत्परम इत्यतिरात्रब्राह्मणमेवैतद्भवत्यथैयꣳ सौत्रा-
मणिकी सुरा पादकिण्वा[3] वा[4] भवत्यपि वा पञ्चिका।
शष्पाणि च तोक्माणि[5] चेति। यवानामु[6] ह[6] शष्पाणि
309. 15. भवन्ति व्रीहीणामु ह तोक्माणि[5] माषास्तु नग्नहुरथायं कारो-
तरो दारुमयो वा वैदलो[7] वा मृन्मयो वा चर्मणा त्वेवाभि-
विद्धि[8] स्यादथैयꣳ सुतासुतीति। सुतमु[9] ह्यस्यामुत्र भवत्या-
II. 331. 7. सुतमु[10] ह्यस्येह भवत्यथास्मिन्दाक्षायणयज्ञे कुर्यादुपाꣳशुयाज-
मिति। ॥ २२ ॥ चतुर्दशः ॥

---

१ Om. G U H Be.

२ पञ्चपुरो° H, पौरोडाशैः M.

३ पादकीण्वा H U, पाकीण्वा G, पादच्चिणा M, पादच्चिण्वा Be. The Viv., although corrupt, mentions the word किण्वा ।

४ वा om. H Ben.

५ °णि both times G Be, once °णि once °नि M, °नि both times Ben H U.

६ यवानांह Ben; read perhaps यवानामह ।

७ वैदलो M H U Ben, वै° G Be.

८ Thus all exc. Ben (°विंद्धि). The Viv. seems to give the paraphrase: कर्मणा (r. च°) बन्धोग्रः (var. बन्धोग्रः) ।

९ r. सुतमह्यस्या° ?

१० °भवत्यसुतमु Ben, भवत्यासुतमो M Be H.

II. 292. 1. अथास्यामेकादशिन्यां यूपाहुतिस्तन्त्रं थाग्नौ हूयते । ऽया-
व्रश्चनजा संचारिणी । सꣳस्पर्शकं[1] कर्म तद्भवत्यग्निष्ठां[2] प्रथम-
स्याग्निꣳ[2] सकृदाहन्याद्द्विर्द्वितीयस्य त्रिस्तृतीयस्यैवमेवेतरेषामनु-
पूर्वं छेदनज्ञायाय चाथ वेदिविमानं । दशानां च रथाक्षाणा-
मेकादशानां च पदानामष्टाङ्गुलस्य च[3] चतुर्विꣳशं भागमाद-
II. 293. 9. दीत । स प्रक्रमः स्यात्तेन वेदिं विमिमीताथेमावुपस्थावानौ
चतुरङ्गुलमात्रेण विकृष्टतमौ[4] स्यातामथेतरे रथाक्षान्तराला[5]
II. 293. 10. एव स्युरित्यथ वै भवत्युपरसंमितां मिनुयात्पितृलोककाम-
II. 293. 12. स्येति यावत्यग्निष्ठस्योपरं[6] तावन्मात्रा इतरे भवन्ति । चषाल-
संमितामिन्द्रियकामस्येति यावदग्निष्ठस्य रशना तावन्मात्रा
II. 293. 13. इतरे भवन्ति । सर्वान्समान्प्रतिष्ठाकामस्येति सर्वान्समान्प्रतिष्ठा-
II. 293. 14. कामस्य करोति । ये त्रयो मध्यमास्तान्समान्पशुकामस्येति
II. 294. 1. तान्समान्पशुकामस्य करोति । व्यतिषजेदितरानिति[8] स एवमेव
II. 294. 3. दक्षिणमुत्तरमित्यष्टौ यूपान्व्यतिषजत्यथ वै भवति यं कामयेत
प्रमायुकः स्यादिति गर्तमितं तस्य मिनुयादुत्तरार्ध्यं वर्षिष्ठमथ

---

१ सस्पर्दूक Be. Instead of सꣳस्पर्शकं कर्म a citation in the Mahāgni-sarvasva gives संस्पर्शि कर्म ।

२ Thus according to Ms. (text and comm.); °ग्निष्ठांतस्याग्निꣳ the MSS.

३ Om. Ben Be U; cp. XXX. 4.

४ विप्रकृ° M Ben.

५ °क्षांतस्यादा M Be, क्षांतस्यादा H.

६ Thus MSS.; r. यावदग्नि° ?

८ M Ben ins. व्यतिषजति ।

ह्रसीयाꣳसमित्युत्तरार्ध्यमत्र वर्षिष्ठं मिनोति दक्षिणार्ध्ये ह्रसीयाꣳसमेष वै गर्तमित्यस्यैवं मिनोति ताजक् प्रमीयत इति
I. 294. 6. ब्राह्मणं । दक्षिणार्ध्ये वर्षिष्ठं मिनुयात्सुवर्गकामस्याथ ह्रसीयाꣳसमिति ॥ २३ ॥

अङ्गुष्ठपर्वमात्रेणाङ्गुष्ठपर्वमात्रेणोत्तरमुत्तरं यूपꣳ ह्रसीयाꣳसं मिनुयादपि वा यूपावटानामेवैता मात्रा अतिखनेदपि वोपश्रयमेवोपनिदधते[१] । ताभिर्मात्राभिरभिसंपादयेत्कथमु खलु यूपावटाꣳस्तु परिलिखतो यूपाꣳस्तोच्छ्रयतः[२] पशूꣳस्तोपाकुर्वतः संचरी[३] स्यादित्यन्तरेणाग्निष्ठं[४] चोपस्थावानं चोपातीत्य जघनेनोत्तरवेदिं परिक्रम्यान्तरेणाग्निष्ठं[५] चैवोपस्थावानं[६] चोपातीत्यैकैकं परिलिखेद्वोच्छ्रयेद्वोपाकुर्याद्वापि वा यंयं परिलिखेद्वोच्छ्रयेद्वोपाकुर्याद्वा तंतं न व्यवेयाद्दक्षिणेन दक्षिणमुत्तरेणोत्तरमपि वा सर्वानेवाग्रेण यूपान्परीत्यैकैकं परिलिखेद्वोच्छ्रयेद्वोपाकुर्याद्वा । व्यतिषङ्गं[७] तेन पूर्वाः संपद्यन्त । एवं

---

१ ०निधत्ते U.

२ ०च्छ्रयतां M, ०च्छ्रयतो Ben U.

३ Corrected; कःसचरी M G Be H, कःसंचारी Ben, कंसंचरी U. The Mahāgnisarvasva संचरः (without कः). संचरी (cp. also XXV. 20 : 251. 4) has the meaning of मार्गः (Viv.).

४ ०ष्ठां most of the MSS.

५ Thus M and a citation in the Ms.; ०णाग्निं the other MSS.

६ एव given by Ben only.

७ ०षंगे Ben, ०षग Ben, ०षंजं H.

व्यतिषक्तानामेवैतेषां पशूनां[१] पञ्च दक्षिणार्ध्यान्पशूनुपक्रम्यैव[२]
स्थापयेयुर्वारुणं प्रथममत्यानयेयुरथानुपूर्वमितरानन्तरेण चा-
त्वालोत्करावुदङ्ङुपनिष्क्रम्य[३] प्रस्थान्वा[४] निहन्युरपि वा मण्डली-
कृताꣳस्तेषां वपा उत्खिद्याहरेयुर्यथा[५] वपाभिर्विहारं चात्मानं
II. 296. 3. च न व्यवेयुरथायं पात्नीवतो ऽङ्गुष्ठपर्वमात्रेणोत्तरार्ध्याद्यूपाद्भवी-
यान्स्यादपि वा यथाब्राह्मणमवाङ्नाभिमचषालमनवस्तीर्ण-
II. 297. 15. मथेदꣳ[६] सर्पाणामयनꣳ स्तोमतो विकृतं भवत्यथेदं विश्व-
II. 298. 11. सृजामयनं कथमिदानीन्तनेषु स्यादिति शतं दीक्षाः शत-
मुपसदः सहस्रं[७] प्रसुतः[७] । ॥ २४ ॥ पञ्चदशः ॥

II. 299. 10. अथेदं कुण्डपायिनामयनमग्निहोत्रपूर्वमेके ब्रुवते सोमपूर्व-
मुपयन्ति[८] । तत्पत्नीसंयाजान्तं वा हृदशूलान्तं वाहः कृत्वा

---

१ Om. Ben Be.

२ पशून् ins. all the MSS. exc. Ben (cp. XVII. 14 : 295. 10).

३ ०च्क्रमय्य G U.

४ Thus Ben only and Ms. ( प्रस्थानुक्तक्रमावस्थितान् ), and the Vivaraṇa ( प्रस्थान्यथा स्थितानि (sic) स्युः ); प्रतिप्रथावा U (pr. m.), प्रति-प्रस्थातावा the other MSS.

५ Thus the Ms. (तेषां संज्ञप्तानां वपाः अध्वर्युणा उत्खिन्नाः परिकर्मिण आहवनीयं प्रति नयेयुः ) ; उत्खिदेयुर्यथा the MSS.

६ अनवस्थितम् instead of अनवस्तीर्णम् G (sec. m.).

७ These words are missing in G Be U H ; प्रसुतः M, प्रसूतं Ben.

८ Uncertain reading ; ०मुपयंति G (sec. m.) Ben ; ०मुपसं U H, ०मुभयं M, ०मुपैवसथं Be ; the Viv. : स एव चारक्षणीयमहः ।

समुपनह्य राजानं काले वसतीवरीरभिगृह्याहीनसंततिं[1] कृत्वा ग्रावोवायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं हुत्वा समिद्धारा यन्त्याहृत्य समिध आहवनीय उपसादयन्ति। परिहृतासु वसतीवरीष्वाकृतायाꣳ सुब्रह्मण्यायाꣳ संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्याविशिष्य पयाꣳस्युपवसन्त्यथ श्वो भूत आमावास्येन हविषा यजते। तत्र न स्तम्बयजुर्हरति। त एवमेवाहरहर्वसतीवरीः परिहरमाणा अष्टाविꣳशतिमहान्यामावास्येन[2] हविषा यजन्ते। नाग्निहोत्राणि जुह्वति न पौर्णमासीं यजन्ते। स यत्र तृतीयसवने धिष्णियान्विहरति तदृजस्तं मार्जालीयं करोति। समासन्नेषु हविःषु गार्हपत्ये करम्भपात्राण्यभिपर्यग्नि कृत्वा तैर्मार्जालीये प्रचरति। गार्हपत्य एव पिण्डपितृयज्ञꣳ श्रपयित्वा तेन मार्जालीय एव प्रचरति। प्रतिपूरुषमुवेवैषां[3] प्रवरान्प्रवृणीत। एकैकस्यैवैषां त्रयस्त्रयः पिण्डास्ते पञ्चदश[4]। महापितृयज्ञे स्तीर्णं[5] बर्हिर्भवति न वेदिमालिखति[6] न स्तम्बयजुर्हरति नाध्यानि गृह्णीते। स यत्र

---

१ Emended (cp. XXVI. 18, 19); ०वरीभिः परिगृह्या० U H, वरीरभिपरिगृह्या० M G Ben, ०वरीभिपरिगृह्या० Be.

२ Emended; ०विंशतिरहा० MSS.

३ Thus M G U H and the Viv.; ०पुरुष० Ben Be.—०मुवेवैषां my conjecture (उवेव = उ एव), ०मुवैवैषां MSS. exc. G (०मुद्वैवैषां)।

४ पंचदशा M Ben Be.

५ स्तीर्णं M Be H.

६ After लिखति Ben ins. न खनति।

तृतीयसवने धिष्ण्यान्विहरति तदजस्रं मार्जालीयं करोति।
समासन्नेषु हविःषु गार्हपत्ये महापितृयज्ञहवीꣳषि श्रपयित्वा
तैर्मार्जालीये प्रचरेदाहवनीये माहुत्या प्रचरेदन्तमेवावभृथः[1]
परीयाद्द्वितीया[2] वेदिर्भवति प्रक्रमाणास्तु ह तृतीयं नवमस्तु[3]
भूमेर्भागो भवतीति। ॥ २५ ॥ षोडशः ॥

II. 302. 12. अथ पञ्चहविषमिष्टिमिष्ट्वान्वहं पुनरावृत्तमेकैकेन हविषा
यजेतैकं चेद्द्वे वा हविषी पर्यवेते स्यातामथ संवत्सरः समा-
प्येत कथं तत्र कुर्यादिति। प्रतिकृष्यैतस्य पक्षस्य पञ्चहविष-
II. 302. 16. मिष्टिं निर्वपेदथ संवत्सरतमे ऽह्नि पञ्चहविः स्यादिति। प्रथमे
द्वादशाहे ऽग्निं चिन्वीतेति। प्रथमे द्वादशाहे ऽग्निं चिन्वान-
श्चतुरहं प्रथमयोपसदा गच्छेच्चतुरहं मध्यमयाष्टाहोनꣳ संव-
त्सरमुत्तमयाथेतराꣳश्चतुरहोनाꣳश्चतुरहोनानेकैकया[4] चतुर-
श्चतुरो[5] मासान्प्रत्याददीत। चतुरहं प्रथमयोपसदा गच्छे-
च्चतुरहं मध्यमया चतुरहमुत्तमयापि वा चतुरश्चतुर एव
मासानेकैकयोपसदा गच्छेदित्युत्तमे[6] द्वादशाहे ऽग्निं चिन्वी-
तेत्युत्तमे द्वादशाहे ऽग्निं चिन्वानो ऽष्टाहोनꣳ संवत्सरं प्रथम-

---

१ Thus M (sec. m.) G; ०रेदंतमथावभृथः Be; ०रेदंतमेथावभृथः U H, ०रेदन्त एवावभृथः Ben; cp. the Vivaraṇa: अवभृथोऽन्तं गच्छेत्।

२ Thus (परीयात्) M Ben; प्रतीयात् the other MSS.

३ नवमंच Ben.

४ Instead of इतरान् (thus Ben M the Viv.) इमान् H Be G U.

५ Thus G U M H Be; चतुरहश्चतुरहोनान् Ben.

६ इति om. G.

योपसदा गच्छेच्चतुरहं मध्यमया चतुरहमुत्तमयाथेतराꣳश्चतुरहोनानेकैकया[१] चतुरश्चतुरहोनान्मासान्प्रत्याददीत[२] । चतुरहं प्रथमयोपसदा गच्छेच्चतुरहं मध्यमया चतुरहमुत्तमयापि वा चतुरश्चतुर[३] एव मासानेकैकयोपसदा गच्छेदिति ॥ २६ ॥

393. 6. अथ लोकंपृणा इष्टका उपदधन्मासमेतीति । लोकंपृणा इष्टका उपदधन्मासं गत्वा त्रिꣳशत्तमस्यामहः[४] सर्वं प्रच्छादं प्रच्छादयेदपि वा त्रिꣳशतोऽवकाशं कृत्वा लोकंपृणा इष्टका उपदधन्मासमेतीति । कथमेतं मासं गच्छेदितीष्टिः प्रथमाथ पूर्वाह्णिके प्रवर्ग्योपसदावथेष्टका[५] अथापराह्णिके[५] प्रवर्ग्योपसदौ मासि वसोर्धारेति । मासं पुरीषेण यन्तीति । कथमेतं मासं गच्छेदितीष्टिः प्रथमाथ[६] पूर्वाह्णिके प्रवर्ग्योपसदावथ पुरीषमथापराह्णिके प्रवर्ग्योपसदौ । चतुरो मास उपसद्भिरे-

---

१ Instead of इतरान् some of the MSS. again इमान्;—चतुरहोनान् twice (as above) H, and one of my copies of the Vivaraṇa.

२ ? Thus (and is so to be read also supra, 308. 12?) M U G, चतुरश्चतुरोमासान्प्र° K, चतुरहश्चतुरहोनान्मासान्प्र° Ben, चतुरश्चतुरोनान्मासान्प्र° Be.

३ Thus Ben H and one copy of the Viv.; चतुर the other MSS.

४ Are these words corrupt? The Vivaraṇa periphrases: त्रिंशत्तमेऽह्नि सर्वमुपधेय शेषमुपदध्यात् ।

५ Thus according to the Viv.; °थेष्टकामथाप° G, U Ben; the other MSS. are incomplete.

६ अथ om. the MSS; it is given in the Vivaraṇa.

तीति[१] । यदमुत्र[२] मासेन करोति तदिह दशरात्रेण करोति ।
चतुरो मासः सुनोतीति । कतमे नु खल्विमे मासा भव-
न्तीति । गवामयनस्य प्रथमोत्तमौ च मासौ यौ चाभितो
II. 306. 1. विषुवतः[३] सह वैषुवतेन । वसतीवरीषु मृत्पिण्डमन्ववधायेति[४] ।
किमर्थो नु खल्वयं मृत्पिण्डो भवतीति । संतन्यर्थ एष
भवतीति । भिन्ने कुम्भे ऽन्यस्मिन्कुम्भ एतं मृत्पिण्डमन्ववधा-
याप[५] आनयेत्तत्पत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा
समुपनह्य राजानं काले वसतीवरीरभिगृह्याहीनसंततिं[६] कृत्वा
ग्रावोवायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं
हुत्वा समिद्धारा यन्त्याहृत्य समिध आहवनीय उपसादयन्ति ।
परिहृतासु वसतीवरीष्वाहृतायाꣳ सुब्रह्मण्यायाꣳ संवेशनीयाः
समिधो ऽभ्याधायेध्माबर्हिः संनह्याविशिष्य[७] पयाꣳस्युपवसन्त्यथ
श्वो भूते सवनेष्ट्या यजन्ते । तत्र न स्तम्बयजुर्हरति[८] । त
एवमेवाहरहर्वसतीवरीः परिहरमाणाः संवत्सरꣳ सवनेष्ट्या
यजन्ते । नाग्निहोत्राणि जुह्वति न दर्शपूर्णमासाभ्यां यजन्ते ।

---

१ Thus Ben and the Viv.; उपसद उपसद्भिरेतीति the other MSS.

२ Thus the Viv; यदत्र the MSS.

३ वैषुवतोः Ben.

४ Thus Be U G H M; ०पिंडमवधाय Ben.

५ Thus Ben; the other MSS. om. अनु; Be defective.

६ Thus Be G U H; ०वरीरभिपरिगृह्या० M (sec. m.).

७ Thus M G U Be; संनह्यविभिष्य Ben H.

८ ०हरंति MSS.

ऽथ संवत्सरतम्यां¹ पर्यवेतायां परिहृतासु वसतीवरीष्वाहृतायाꣳ सुब्रह्मण्यायामहरहः संवेशनीयाः समिधो ऽभ्याधायेध्मावर्हिः संनह्य पयाꣳसि विशिष्योपवसन्त्यथ श्वो भूते² ऽभिजितेष्टोत्तिष्ठन्ति² । ॥ २७ ॥ सप्तदशः ॥

Ap. 306. 8. अथ वै भवति छन्दश्चितं चिन्वीत पशुकाम इत्यभ्यादानप्रभृतीन्मन्त्रान्साधयेदा³ वायव्यात्सं प्रत्यञ्चं वायव्येन पशुना यजेत प्रत्यञ्चं दीक्षणीययोखाप्रवृञ्जनप्रभृतीन्मन्त्रान्साधयेदा वात्सप्रविष्णुक्रमेभ्यः । प्रत्यञ्चं वात्सप्रविष्णुक्रमैः क्रमित्वा निगदेदेवेतरान्मन्त्रान्विहरेदग्निꣳ⁴ । रूपाणि⁴ दर्शयेद्वृश्चेदिरिणं । तत्र नैर्ऋतान्मन्त्रान्निगदेत्स⁵ प्रत्यञ्चं गार्हपत्यमुपतिष्ठेत । प्रत्यञ्चं प्रायणीयया । प्रत्यञ्चमातिथ्यया । कार्ष्णाजिनीप्रभृतीन्मन्त्रान्साधयेदा⁶ कर्षणवपनाभ्यां । प्रत्यञ्चं कर्षणवपने । प्रथमां

---

१ Thus emended; ॰वत्सरतस्यां Be U H, ॰वत्सरंतस्या G Ben.

२ Thus Ben and G (sec. m.); भूतेष्वोत्तिष्ठंति U, भूतेयोत्तिष्ठंति H Be, भूते इष्टोत्तिष्ठंति M.

३ Corrected; इत्यभ्यादान॰ Ben, इत्यारभ्यादान॰ the other MSS.; The Vivaraṇa details देवस्य त्वेत्यादिनाभ्यादान॰ (sic), cp. X. 2 : 2. 3.

४ Doubtful; G (sec. m.) reads as given in our text and cp. the Vivaraṇa विहरेत् चिनुयादग्निम्; विहरेदग्निंतत्रूपाणि Ben, विहरेग्नींद्ररूपाणि Be, विहरेदग्नोद्रूपाणि H U, विहरेदग्नोन्रूपाणि M; the comm. on the S'ulba cites the passage with अग्निरूपाणि ।

५ Emended; नैर्ऋतीन्मंत्रा॰ M Be G (sec. m.); नैर्ऋतिमंत्रा Ben U, नैर्ऋतिंमंत्रा॰ H.

६ Thus (कार्ष्णाजिनी॰) M Be H U (cp. X. 23 : 21. 17); ॰जिनि॰ G (sec. m.) ॰जिन॰ Ben.

चितिꣳ सपुरीषां निगदेदेवं द्वितीयामेवं तृतीयाꣳ । सर्वां[१] चितिꣳ सपुरीषाꣳ सवण्डां चितिꣳ सपुरीषां[१] निगदेद्या[२] अहान्तःशालीका[२] आकृतयः स्युर्जुहुयादेव ता । अथ य औत्तरवेदिका मन्त्राः स्युर्निगदेदेव तान् । ॥ २८ ॥

अग्निहोत्रं वै दशहोतुर्निदानं दर्शपूर्णमासौ चतुर्होतुरित्येक आनुपूर्व्यं[३] ब्रुवते । ऽथाप्युदाहरन्त्याग्न्याधेयं पूर्वस्यां ततावेकादशप्रयाजꣳ सर्वꣳ सहोत्पन्नमृतवः षड्ढोतेति । षाण्मास्य[४] एष पशुबन्ध उक्तो भवत्यथाप्युदाहरन्ति षट्सुषट्सु मासेष्वाहिताग्निना पशुना यष्टव्यं भवत्युभे काष्ठे अभियजेत । माघमासे[५] धनिष्ठाभिरुत्तरेणैति भानुमानर्धाश्लेषस्य श्रावणस्य दक्षिणेनोपनिवर्तत इत्येते काष्ठे भवतस्तदन्ततो ऽनीजानस्य[६]

---

१ The reading of this passage is wholly uncertain; I have accepted the reading of M (on वण्ड cp. XVII. 25 and 26); सर्वाश्चितिः सपिंडां चितिं सपुरीषां U H; सर्वाश्चितीः सपिंडां चितिं सपुरीषां G, सर्वाश्चितीः संपिंडां - - - चितेसपुरीषां Be, सर्वाश्चितीः संवशा - - चितिं सपुरीषां Ben.

२ Thus G (sec. m.), which however, as do all the other MSS. exc. U, reads ॰ह्यांताःशा॰ instead of॰ह्यान्तःशां; निगदेदेवंद्यांतः शालिका G (pr. m), निगदेदेवंद्यास्याद्यांताः शालीका M., निगदेद्याद्यांताः शालिका H, निगदेदेवंद्याद्यांतः शालिका U, निगदेदेवंद्यां - - - ह्यांताः शालीका Be, निगदेदेवंद्याभांताः शालीका Ben.

३ Thus M Ben U G (sec. m), ॰पूर्वं Be, अनुपूर्व्यं H G (pr. m.).

४ Thus Be U G and the Viv. (one copy); षण्मास्य M H Ben and the Viv. (another copy).

५ ॰मासेन Ben U (sec. m.).

६ Are we to read with the Vivaraṇa. ऽनीजानꣳ ?

I. 334. 6. संवत्सरो नातीयादथ चातुर्मास्येषु सोमेषु पञ्चहोता सप्तहोतु
स्थानं प्रत्येत्यथ य एष चातुर्मास्यसंयोजनो निर्मन्थ्य उत्सीद-
त्येष पशुसंयोजन एव[1] भवति । परिधौ पशून्नियुञ्जीतेति[2]
340. 17. ब्राह्मणमेतद्यूपा एव तदस्माकं भवन्त्यथ[3] महापितृयज्ञे स्तीर्णं
बर्हिर्भवति न वेदिमालिखति न स्तम्बयजुर्हरति नाज्यानि
गृह्णीते । स यत्र तृतीयसवने धिष्णियान्विहरति तदजस्रं
मार्जालीयं करोति । महाहविर्भिश्चरित्वा समासन्नेषु हविःषु
गार्हपत्ये महापितृयज्ञहवीꣳषि श्रपयित्वा तैर्मार्जालीये प्रच-
रेदाहवनीये मावृत्या प्रचरेदन्तमेवावभृथः[4] परीयात्तस्य प्रथमा
चितिः पुरीषवती[5] मन्त्रवती भवतीति । प्रथमैवास्य चितिः
पुरीषवती मन्त्रवती भवत्यथेतरास्तूष्णीका । यां यां चितिꣳ
सपुरीषां ब्रुवते सासैवास्य चितिः पुरीषवती मन्त्रवती भव-
त्यथेतरास्तूष्णीकाः । ॥ २९ ॥ अष्टादशः ॥
I. 343. 1, sqq. अथेम एकाहास्तेषां यान्यहान्यनादिष्टान्यग्निष्टोमा इत्येव
तानि जानीयादथाहीनरात्रिसत्त्रेषु यान्यहान्यनादिष्टान्युक्थ्या
344. 12. इत्येव तानि जानीयान्माध्यंदिनीया एवैनं चमसा निम्रजन्ती

---

१ एष the MSS.

२ पशुं instead of पशून् M.

३ Thus M G U H Be; एतद्यूपा एवतस्याकं भवत्यथ Ben.

४ Thus Ben (only चरेत् instead of प्रचरेत्); चरेदंतमोवभृथः G H, चरेदंत[illegible]ोवभृथः U, चरेदंतमेनावभयः Be, प्रचरेदंतमेनवावभृथः M; cp. XXVI. 25 : 308. 3.

५ सपुरीषवती MSS.

यन्तीति[1] । सदस्यासीनं माध्यंदिनीया एवैनं चमसा निम्र-
II. 344. 13. जन्तो यन्ति भक्षार्थाश्चतुर्विꣳश एष भवति । शुक्रामन्थिनोः
II. 345. 4. सꣳस्रावेणाभिषिञ्चतीति । यजमानायतन आसीनꣳ शुक्रा-
II. 345. 9. मन्थिनोः सꣳस्रावꣳ समानीयाभिषिञ्चति[2] । चतुष्टोम एष
भवति । सप्त हवीꣳषि प्रातःसवनीयाननुवर्तन्त इत्याग्नेयो ऽष्टाकपालः पौष्णश्चरुः सावित्रो[3] द्वादशकपालस्त्वाष्ट्रो ऽष्टाकपालो वारुणो दशकपालो वैश्वदेवश्चरुर्मारुतः सप्तकपाल
II. 346. 4. इत्यष्टौ हवीꣳषि प्रातःसवनीयाननुवर्तन्त इत्याग्नेयो ऽष्टाकपालः सौम्यश्चरुः सावित्रो[3] द्वादशकपालो बार्हस्पत्यश्चरुरग्नीषोमीय एकादशकपालः सारस्वतश्चरुर्वारुणो[4] दशकपालो द्यावापृथिव्य
II. 346. 17. एककपाल इति । यत्किंच राजसूयमृतेसोमं तत्सर्वं भवतीति । मारुतं चात्रैकविꣳशतिकपालं प्रतिषेधयत्यौपसदा-
II. 347. 14. स्वेष्टीरर्धचतुर्दशैरेष[5] मासैः संतिष्ठते । यत्किंच राजसूयमनुत्तरवेदीकं[6] तत्सर्वं भवतीति । द्विपशुं चात्र पशुबन्धं प्रतिषेध-
II. 348. 19. यति[7] चातुर्मास्यानि चाध्यर्धेनैष[8] मासेन संतिष्ठते । सिꣳहे

---

१ इति om. M Ben U.

२ Thus G H U Be, समवनीया॰ M, स्रवनीया॰ Ben.

३ The words द्वादश॰ unto सावित्रो (incl., l. 6) are given only by Ben, which, however, reads सावित्रो दशकपा॰ instead of सा॰ द्वादश॰ ।

४ Thus Ben, सावित्रस्य the other MSS.

५ Thus M Ben; ॰षेधयंत्यौ॰ Be U H, ॰षेधयतीत्यौ॰ G.

६ ॰वेदिकं all, but cp. T Br. II. 7. 5. 2.

७ Thus Be, ॰यंति the other MSS.

८ Thus G only; नाध्य॰ all the other MSS.

II. 350. 14. व्याघ्र उत या पृदाकाविति । किंदेवत्या उ खल्वियमाहुतिर्भवतीति । ॥ ३० ॥

II. 354. 16. इन्द्राणीदेवतेत्येव[1] ब्रूयात्सयदग्निना पशुबन्धेनेष्ट्वोखाः संभृत्य पशुशीर्षाणि च वायव्येन पशुना यजेतापि वा पुरस्तादेव तूष्णीꣳ[2] संभृताः[3] संभृत्य मन्त्रवतीं मृदꣳ संभृत्य तयानुप्रलिप्य[4] ।
II. 356. 8. नियुनक्त्युक्थ्यस्योपयामगृहीतो ऽस्यग्नये त्वा बृहद्वते वयस्वत उक्थायुवे यत्ते अग्ने बृहद्वयस्तस्मै त्वा विष्णवे त्वा जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरग्नये त्वोक्थायुव इति ।
II. 358. 14. नियुनक्ति ध्रुवस्य मूर्धानं दिवो अरतिं पृथिव्या मघवन्तमृताय जातमग्निम्[5] । कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥ उपयामगृहीतो ऽसीन्द्राय त्वा मघवते जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा मघवत इति ।
II. 359. 3. नियुनक्ति पात्नीवतस्योपयामगृहीतो ऽसि बृहस्पतिसुतस्य त इन्दो[6] इन्द्रियावतः पत्नीवन्तं ग्रहं गृह्णामीन्द्रा३[7] पत्नीवा३ इति । नियुनक्ति हारियोजन-

---

१ इंद्राग्नी॰ Ben.

२ तूष्णीमेव M.

३ संभृतां all, but cp. the Vivaraṇa: तूष्णीं संभृता उखा संभृत्य ।

४ Thus M, तथानुप्रपलिप्य Be, तथानूपलिप्य G (sec. m.), तयानुलिप्य Ben H U.

५ जातमिंद्रमग्निं M.

६ Thus M G U, इंद्रो the other MSS.

७ Uncertain; ॰मींद्रा३इ G (sec. m.), ॰मींष्प्राइ Be, ॰मींद्राग्राइ H ॰मींद्रग्न्याइ U, ॰मीऽद्राग्रा - उ Ben, ॰म्यग्राइ M.

स्योपयामगृहीतो ऽसि रोहिदसि रोहिद्योजनो रोह्यो स्थाता वज्रस्य भर्ता पृश्नेः प्रेता तस्य ते देव सोमेष्टयजुष स्तुतस्तोमस्य शस्तोक्थस्य रोहिद्वन्तं ग्रहं गृह्णामि रोही स्थ रोह्योर्धानाः सहसोमा अग्नये स्वाहेति । यो ऽग्निष्टुतीन्द्रस्पर्शस्तमुत्सादयेद्य इन्द्रस्तुत्यग्निस्पर्शस्तमुत्सादयेन्नित्या अन्या देवताः । किंदेवत्यानि
II. 360. 10. खल्वतिरिक्तस्तोत्राणि भवन्तीत्याश्विनानीत्येव ब्रूयाद्यच्च[1] किंच रात्रिमुपातिरिच्यते सर्वं तदाश्विनमितीन्न्वेकमथापरमाग्नेयं[2] प्रथममैन्द्रं द्वितीयं वैश्वदेवं तृतीयं वैष्णवं चतुर्थमिति ।

॥ ३१ ॥ एकोनविंशः ॥

II. 366. 11. स ग्रीष्मस्य जघन्याहःसु प्रजह्नितेषु[3] यवेष्विति । प्रम्रदि-
II. 366. 12. तेष्वित्येवेदमुक्तं[4] भवत्यधिकरणेनेत्येवेदमुक्तं भवत्यृत्विजः[5] पदे-
II. 367. 1. नाक्रापयतीति[6] तत्पूर्वं[7] वेत्यथैनमभ्यज्य पवयित्वोदानयतीति ।
सिद्धमत्राग्निष्टोमिकं कर्म जानीयादोत्तरस्मादुपघातादेतस्मिंश्च काले त्रीणि बर्हींषि यजुषा कुर्याद्दीक्षणीयायाः

---

१ ०यच्चि M.

२ ०मितीन्न्वेक०, मितीचेक०, मितिन्न्वेक० the MSS.

३ Thus M G (sec. m.) and the Viv.; व्रजितेषु Be, व्रजन्तितेषु H U G (pr. m.), व्रजंतितेषु Ben.; the meaning is, acc. to the Viv., प्रपक्वेषु।

४ प्रमुदिते० Ben.

५ भवतीत्युत्विजः Ben.

६ पदंना-पयतीति Ben, पदंनाक्रायंतीति Be U, पदंनाक्रयंतीति G, पदंवाक्रवंतीति H, पदंनासीदयतीति M, but द cancelled.

७ Conjectural reading. तत्पूर्ववत्यथै० Ben G (sec. m), तत्पूर्वंत्यथै० Be H U M G (pr. m.).

प्रायणीयाया आतिथ्याया इत्यथ निर्वपेद्दीक्षणीयां प्रायणी-
यामातिथ्यादाज्येन[१] वर्तयेद्यावद्रथा[२] आगच्छेयुः[२] सहनिरुप्त-
माज्यं तिसृषु स्थालीषु विगृह्णीयाद्धा दीक्षणीयायै सᳲस्था[३]
तया[३] दीक्षणीयाᳲ संतिष्ठापयिषेत्प्रणीताभिः प्रायणीयस्य
II. 368. 2. प्रतिपद्येतैष[४] एवातिथ्याया उपक्रमो भवतीति । त्रिवत्सेन
साण्डेन वत्सतरेण राजानं क्रीत्वोह्यातिथ्यं निर्वपतीति । त्रि-
हायणेनेत्येवेदमुक्तं[५] भवति[६] । कथमु खल्वस्य मन्त्रानभिनमये
II. 368. 3. च्चिदसि[७] मनो[८] ऽसि[८] धीरसि दक्षिणो ऽसि यज्ञियो ऽसि
क्षत्रियो ऽस्यदितिरस्युभयतःशिराः[९] स नः सुप्राङ् सुप्रत्यङ्
संभवेत्येकगणा[१०] उपसदो भवन्तीति । पूर्वाह्णिका एवैता उक्ता
II. 368. 13. भवन्ति । खलेवाली यूपो भवतीत्येतामेवैषां[११] मेथीं कुर्वन्ति ।

---

१ ? Thus Be U H, ०थ्यामाज्येन G, ०थ्यांपृषदाज्येन M, Ben utterly corrupt.

२ Thus the Vivaraṇa; all the MSS. are hopelessly corrupt; G has the least corrupt reading यावद्रथमागच्छेयुः ।

३ Thus M G U Be, संस्थाया H, संस्थान Ben.

४ Thus M G U, प्रतिपद्यद्यतैष Be Ben, प्रतिपद्यतेसणया H.

५ ०हायनेने० MSS. exc. Ben.

६ भवतीति MSS. exc. M.

७ ०भिसंनमये० G.

८ मनासि MSS. exc. H.

९ Thus Be G U Ben, ०शिरो H, ०शीर्षासि M.

१० ०गुणा MSS.

११ ०त्येतयैवैषां Ben; are we to correct: ०त्येतामेवेषां (iṣā)? Viv. एतामेव हवीर्वामार्धं कुर्वन्ति ।

स खल्वेवाक्षौ यूपस्तस्यै कटे परमिव चषालभाजनं भवतीत्या-
II. 369. 1. कुट्ट[1] इत्येवेदमुक्तं भवत्यथैतान्पशूनुपाकरोत्यग्नीषोमीयमाग्नेय-
मनूबन्ध्यमिति । यमा एवैते छागाः समानयोनयो भवन्ति ।
तेषामुक्तं चरणमथास्याः सद्यस्क्रियामनुक्रियां परिक्रियामति-
क्रियामवभृथप्रभृत्यस्तमिते[2] यज्ञपुच्छं । तासां प्रथमैव सरथा[3]
प्रथमा चित्तसोमक्रयणी प्रथमाग्निहोत्रोच्छेषणव्रताथास्याः[4]
सद्यस्क्रियामनुक्रियां परिक्रियामतिक्रियां त्रिस्तनद्विस्तनैक-
स्तनव्रतस्य[5] रूपाणि[5] कुर्वन्ति । क[6] उ[6] खल्वेकाह्ने दृष्टः[7]
संनिवापो भवतीति । व्रात्यस्तोमे चैन्द्राग्न्योश्च कुलाय इत्येव
II. 371. 5. ब्रूयादथास्मिन्व्रात्यस्तोमे[8] बहव एकस्मै दीक्षन्ते[9] । ऽदीक्षिता[10]
II. 373. 8. एवैनान्याजयन्ति[10] । दण्डोपानहं[11] ग्रामुलाजिनमिति । ग्रा-

---

१ Thus G M Ben, ०कुट्ट U H, ०छुट्ट Be ; the Viv. reads आकुट and details : आहतस्थानं निम्नकृतम् ।

२ Instead of अतिक्रियाम् here and l. 7 the MSS. read अभि०, अवि० or इति० ।

३ Thus corrected ; सरथाः Be M G, सुरथाः H U, सपथाः Ben.

४ Corrected ; ०षणव्र(इ) तोमंथास्यां M G U Be, ०षणवसतमथास्यां H Ben.

५ Corrected ; ०कस्तनव्रतरूपाणि Ben H, ०कहतस्य रू० M Be G U.

६ Thus M G Be U, कउ H का Ben.

७ दृष्टीः Ben, दृष्टं Be.

८ Thus M Ben, ०थैतस्मिन्व्रा० the other MSS.

९ Thus M G ; दीक्षते Be U H, एकस्मिन्नदीक्षंते Ben.

१० दीक्षित ... जयति H.

११ ? दंडोपानद्दनं G (sec. m.) Ben, दंडोपद्दननं G (sec. m.), दंडोमन-द्दनं Be, दंडोपनद्दन H, दंडोपिगद्दनं M.

सुखकानामु[1]ह दर्भमिश्राः[2] कम्बला भवन्ति स च भवति[3]
श्वेतं[4] चौरक्षाजिनम्[5] । ॥ ३२ ॥
374.3.4. स एष[6] ज्येष्ठानामग्निष्टोम । एष एव सन्कनीयसामुक्थ्य
386.6. स्त्रिवृत्स्तोमं पूर्वमहर्भवति पञ्चस्तोममुत्तरꣳ[7] । रथो[7] हविर्धानं ।
386.8. कुर्यात्तत्स्वरूपमुत्तरं हविर्धानमुत्सीदेयुः प्रकटमन्त्रा । द्वौ त्रय-
स्त्रिꣳशौ मध्यत स्तोमौ भवत इति । पृष्ठ्यस्तोमावेवैतावित-
स्त्वामुतश्च[8] प्रतिलोमौ[8] भवतो । ऽथामावास्यायां[9] प्रतिमसस्य
383.10. चान्द्रमसं पिण्डपितृयज्ञं दद्यात्तं ब्रह्मणः सन्तं पर्युपविश्य
भक्षयन्ति यद्हुतं मन्यन्ते तेन ब्राह्मणं । ब्राह्मणो वै वर्णानाꣳ
श्रेष्ठो[10] ऽग्निर्देवानामित्येतेन वा भक्षयेदपि वा व्याहृतीभि-
383.12. स्त्रिवृत्स्तोम एष भवतीति[11] चतुरुत्तरीय[12] एष[12] दिशां चतु-

---

१ Thus M Be and Viv.; शासुलाका° the other MSS.

२ Corrected according to the Viv., दर्भमिश्रा M G (sec. m.), दर्भमि Ben, गर्दभमिश्रा Be U H.

३ भवंति MSS.

४ श्वेतां MSS.

५ चोर° Ben ( च-चौरम-अजिनम् ) ।

६ एष Ben and Viv. ; एव the other MSS.

७ Thus M only ; °मुत्तरमथो the other MSS.

८ Thus M G (sec. m.) Be Ben ; °तश्चाप्रति° U H G (pr. m.).

९ Refers acc. to the Vivaraṇa to the दुरश (XVIII, 37).

१० Thus M Ben, ज्येष्ठो G U Be H.

११ Ben om. इति, rightly ?

१२ Corrected ; °त्तरीयादेष M G U Be, °त्तरीयादष H, °त्तरायावदष Ben.

II. 392. 6. ष्टोमो भवत्यथास्मिन्कानान्वयज्ञे[१] ऽवभृथप्रभृत्यस्तमिते यज्ञ-
II. 395. 8. पुच्छं। तस्य दशसु बहिष्पवमानः शते सहस्रे ऽयुते नियुते प्रयुते[२]
ऽर्बुदे न्यर्बुदे समुद्रे मध्ये ऽन्ते परार्धे पद्दे[३] पल्वे नित्यमुक्ता[४]
मनसैव स्तुवानो मन्यत एतावति[५] मे[५] स्तुतमित्यथ सक्तप्रवर्ग्य
II. 405. 18. एकमेवाग्निहोत्रमथास्मिन्कुनस्कर्णयज्ञे। तिलमिश्रमशित्वा म-
त्याग्खादित्वा[६] चारमाचं[७] पिबेदथ सामपथे संविशेत्स्वप्नादेव
II. 406. 8. स्वप्ने गच्छति। राशिकृतं[८] धान्यं ददाति मरायकृतं धान्यं
II. 407. 4 ददातीति। मूतकृतमित्येवेदमुक्तं भवति। प्रचरन्ति प्राञ्चः
प्रत्यञ्चः प्रचरन्तीति। यः प्रत्यङ् विहारो दक्षिणतउपचार
एष भवत्येतेनैवापि सर्वतोमुखो व्याख्यात। एतेन सहस्र-
शालो। ऽथैनमिह[९] पवयित्वामुत्र पवयन्तीति[१०]। सिद्धमत्रा-

---

१ कानांड॰ (or कानांद्र॰ ?) M.

२ Om. G U.

३ पद्दे G U Ben and probably also M; पद्म Be, द्दे H; are we to correct here and XVIII. 43. बद्दे ?

४ Thus Ben; नित्यमुक्थ्य the other MSS.

५ Thus M G U; एतावतिमेव H, एतावतीमे Be, एतावतीमेव Ben.

६ ॰खादित्वा H.

७ Thus G U; ॰माच M, चारमाच H, चरमच Ben, मत्तारमाचं Be.

८ राशी॰ G Be U H.

९ Conjectural reading; वैनमिह MSS (वैरनपृह M). I have not been able to point out the passage in the text proper here referred to.

१० ॰यतीति G (sec. m.) Be.

412. 4. ग्निष्टोमिकं कर्म जानीयादुत्तरस्यैव[1] शालायै । स द्वौ त्रिरात्रौ[2] कुरुत एकं च द्विरात्रमिति[3] । दीक्षोपसद्भिरेवास्यैतान्यहान्यभिविधत्ते । ऽहौनविधो[4] ऽति यज्ञं दद्यात्तदिदं[4] प्रोक्तं यदकृत्स्नं सूत्रतः । सामयिकं त्वेव क्रतुयोगं[5] यज्ञे यज्ञमुपलक्षयेतेति बौधायनो यज्ञे यज्ञमुपलक्षयेतेति बौधायनः । ॥ ३३ ॥ विंशः ॥

## ॥ इति षड्विंशः प्रश्नः ॥

। कर्मान्तं समाप्तम् ।

---

१ Thus the MSS. ; read ०दुत्तरस्यै च ?

२ द्विरात्रौ G U.

३ त्रिरा० MSS. exc. M.

४...४ Wholly uncertain ; ०हौनविधोतियज्ञदयात्तदिदं G, हौनविधोतियज्ञं दद्यात्तदिदं U, हौनविधोतियज्ञदयात्तदिदं Ben Be, हौनविधोतियज्ञं दधातोदं H, हौनवियोनियज्ञं दद्यात्तिदिदं M. The Viv. seems to point, at least also to the reading यज्ञं दद्यात् ।

५ Thus M G U H, क्रतुयेसंगं Be, क्रतुयेसंग Ben.

## प्रायश्चित्तसूत्रम् ॥

अथातो मन्त्रगणाम्नातानि प्रायश्चित्तानि व्याख्यास्यामः । सर्वत्रोपरिष्टान्मन्त्रकृतं यद्यधस्तान्निपतेद्ब्रह्म प्रतिष्ठा मनस इत्येतया प्रतिष्ठाप्यैतयैव स्रुवाहुतिं जुहुयाद्धुत्वा वा[1] प्रतिष्ठापयेद्धुत्वानन्तरं[2] कर्म कुर्यादेवमन्येष्वप्यतिक्रान्तं कर्म नाद्रियेत यद्यर्थलुप्तं भवति । सर्वत्राश्रावितप्रत्याश्रावितवषट्काराणामत्युक्तानुक्तहीनेष्वाश्रावितमत्याश्रावितमित्येतया स्रुवाहुतिं जुहुयात्सर्वत्र देवोच्चारणेषु[3] भागिनीं देवतामनुच्चारयित्वा[4] योन्यामुच्चारयेद्यदो देवा अतिपादयानीत्येतया स्रुवाहुतिं जुहुयात्सर्वत्र देवतावाहनेषु भागिनीं देवतामनावाहयित्वा योन्यामावाहयेदेतयैव स्रुवाहुतिं जुहुयाद्यत्र स्मरेत्तदुपोत्थायैनां मनसावाहयेद्यथातिरिक्तामाज्येन यथोढां यजेत । सर्वत्र प्रणीतानां प्रणीयमानानां प्रणीतानां[5] वा यदि[6] विप्रुषो[6] विपतेयुः[6] सवेदा चमस[7] आपो[7] हि ष्ठा मयोभुव इति तिसृभिरद्भिः पूरयित्वा ततं म आपस्तदु तायते पुनरित्ये-

---

१ Om. H.

२ Thus H U C′ B Viv., °हुत्वावानन्तरं Tr.

३ Thus H U B, देवतोच्चरणेषु C′, °च्चारणे Tr.

४ देवतामुच्चा° B.

५ प्रणिहितानां H B.

६ Thus Tr., विप्रुषो यदि पतेयुः the other MSS.

७ Thus C′ H, चमसं आपो U, चमसमापो B, चमसामापो Tr.

तया स्रुवाहुतिं जुहुयात्सर्वत्र वितते यज्ञकर्मणि यदि सूर्यो नाविर्भवत्यन्यत्रादेशादुद्वयं[1] तमसस्पर्युदु त्यं चित्रमित्येताभिः स्रुवाहुतीर्जुहुयाद्यदि सूर्याचन्द्रमसोर्ग्रहणं[2] विद्यत एतदेवाथ यदि यजमानस्यालिङ्गं वा स्वप्ने रेतोविसर्गः स्यादिमं मे वरुण तत्त्वा यामीत्येताभ्याꣳ स्रुवाहुती जुहुयात्सर्वत्र[3] हविर्दैवतायाज्यापुरोनुवाक्याहुतीनाꣳ हुताहुतभ्रेषेष्वन्तरिते विपर्यासे च त्वं नो अग्ने स त्वं नो अग्न इत्येताभ्याꣳ स्रुवाहुती जुहुयात्सर्वत्र दर्विकूर्चप्रस्तरपरिधिबर्हिर्विधृतिपवित्रवेदोपवेषेध्मद्रव्यसंभाराणां[4] छेददाहोपघातेषु नाशे विनाशे वान्यं यथालिङ्गं कृत्वा यथालिङ्गमुपसाद्य त्वमग्ने अयासि प्रजापत इत्येताभ्याꣳ स्रुवाहुती जुहुयात्सर्वत्र वितते यज्ञकर्मणि ॥ १ ॥

यदि पुरा प्रयाजेभ्यो बहिःपरिध्यङ्गारा अभिपर्यावर्तेरन्ब्राह्मणोक्तं प्रायश्चित्तं कृत्वेमं जीवेभ्यः परिधिं दधामीत्येतया स्रुवाहुतिं जुहुयात्सर्वत्र वितते यज्ञकर्मणि यदि यज्ञभ्रेष आगच्छेदिष्टेभ्यः स्वाहा[5] वषडनिष्टेभ्यः[5] स्वाहेत्येतैरष्टाभिः[6] स्रुवाहुतीर्जुहुयात्सर्वत्र वितते यज्ञकर्मणि यदि जन्यं भयमा-

---

१ Thus U C′ Tr Viv.: ॰न्यत्रदेशा॰ B, न्यत्रादृशा° H.

२ Thus C′ U Viv.; सूर्याचद्रमसोर्ग्र° B, °सूर्याचंद्रमसोग्र॰ Tr H.

३ B U ins. वितते यज्ञकर्मणि ।

४ दर्वि॰ Tr C′ U Viv., दर्वी B H and Prāy. candrikā.—Instead of ॰वेदोपवेषेध्म॰ Tr B read वेदेध्मोपवेष॰ ।

५ Om. Tr.

६ ॰त्यष्टभिः C′, ॰त्येताभिः Tr.

गच्छेयत इन्द्र भयामहे स्वस्तिदा विशस्पतिरित्येताभ्याꣳ स्रुवाहुती जुहुयादभये वा पुनर्यजेत । [1]सर्वत्रोपाꣳश्वप्रभृति वाच[2] स्थानानाꣳ स्वराक्षरपदवृत्तभ्रेषेष्वाभिर्गीर्भिर्यदतो न ऊनमित्येतया स्रुवाहुतिं जुहुयात्सर्वत्रानाज्ञातप्रायश्चित्तेष्वनाज्ञातं पुरुषसंमित इत्येताभ्याꣳ स्रुवाहुती जुहुयात्सर्वत्रेध्माबर्हिषः प्रयाजानूयाजानां[3] पाकत्राकर्मसु[4] यत्पाकत्रा मनसेत्येतया स्रुवाहुतिं जुहुयात्सर्वत्र स्कन्ने भिन्ने छिन्ने भग्ने[5] नष्टे[5] क्षामे विपर्यास उद्दाह[6] ऊनातिरिक्ते वा[7] यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादित्येताभ्याꣳ स्रुवाहुती जुहुयात्सर्वेष्वग्न्युपघातेषु पुनस्त्वादित्या रुद्रा वसवः समिन्धतामित्येतया समिधमादध्यादेतयैव स्रुवाहुतिं जुहुयात्सर्वेषु यज्ञक्रतुषु पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य ध्रुवातः सर्वप्रायश्चित्तानि जुहोति ब्रह्म प्रतिष्ठा मनस इत्येतेनानुवाकेन प्रत्यृचमथ वै भवति समिष्टयजूꣳषि जुहोति यज्ञस्य समिष्ट्यै । यद्वै यज्ञस्य क्रूरं यद्विलिष्टं यदत्येति यन्नात्येति यदतिकरोति यन्नापिकरोति

---

१ In H U the prāyaścitta सर्वत्रेध्माबर्हिषः (l. 5) is given here, but cp. T. Br. III. 7. 11. 5.

२ वाचि U, वावि H.

३ ॰नुयाजा॰ H Tr.

४ पाकत्रकर्मसु B Tr.

५ Om. Tr. B; the last om. also भिन्ने छिन्ने ।

६ ? उद्दाह Tr, वुद्दाहो H, उद्वाह B U, विपर्यासेदूरदाहे C′; the Vir. explains as उत्सेचने ।

७ Om. Tr.

तदेव तैः प्रीणातीति ब्राह्मणमेतान्येव ब्राह्मणविधिविहितान्याप्यायनानि[१] मन्त्रवन्ति[२] भवन्तीति बौधायनो । मन्त्रगणाम्नातानि नैमित्तिकानीति शालीकिः । ॥ २ ॥ **प्रथमः** ॥

अथ कपालकरणे रथचक्रचित्याकृत्यश्वशफमात्रꣳ स्थानं कल्पितं भवति । संकल्पो[३]ऽधिकारः कपालवृद्धिः कपालह्रासौ वा कपालानामनभिप्रथने व्याहृतीभिराहवनीये स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्येतावदेव नानाप्रथने चातिप्रथने चाथ हविषामशृतद्रवदाहोत्सेकनिस्रावे[४] प्रायश्चित्तिरशृते रुद्राय स्वाहेत्याहवनीये[५] स्रुवाहुतिं जुहुयाद्भवे वायवे विदग्धे निर्ऋत्यै । यदि दग्धꣳ स्याद्यत्तत्र[६] शृतꣳ स्यात्तेन[७] प्रचरेदथ यदि सर्वमेव दग्धꣳ स्यादपोऽभ्यवहृत्य भिन्दाहुती जुहुयादथान्यं निर्वपेदाज्येन वा प्रचरेत्तस्यैव ततः प्रायश्चित्तिर्यस्यैयस्यै[८] दिश्युत्सिच्येत तस्यैतस्यै देवतायै स्रुवाहुतिं जुहुयाद्यदि प्रागग्नये यदि दक्षिणतो यमाय यदि पश्चाद्वरुणाय यद्युत्तरतः

---

१ U ins. sec. m. नित्यानि. B ins. प्रायश्चित्तानि नित्यानि ।

२ मंत्रवर्णवंति B and U (sec. om.)

३ संकल्पे B.

४ ०स्रावेषु Tr.

५ आहवनीये om Tr. B.

६ Thus C′ Tr. and Viv., स्यात्तत्र H, स्याद्यत्र B U.

७ अथ Tr. ins. after स्यात् ।

८ Thus also the Vivaraṇa.

सोमायाथ[१] यदि सर्वत एवोत्सिच्येतैताभ्यः सर्वाभ्यो देवताभ्यः स्रुवाहुतीर्जुहुयात्तमाज्येनाप्यायनीभ्यामाप्याययत्याप्यायस्व सं त इत्यथ हविषामुद्वासनकाले पतनफालनखण्डनोद्वर्तनसंसर्पणविपरीतव्यवायकरणेषु[२] [३]व्याहृतीभिराहवनीये स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्यथान्तरेण वेद्युत्करावुदङ्ङुपनिष्क्रम्या तमितोरुदङ्ङुपनिःसृप्य[४] व्याहृतीरुक्त्वा व्याहृतीभिरेव प्रतिपद्यते[५] । ॥ ३ ॥

व्याहृतयस्तु[६] चतुष्पादा नवांशाश्च षडक्षराः ।
चतुर्णामपि वेदानामादिमध्यावसानिकाः[७] ॥
मन्त्रोनं वातिरिक्तं वा दुरिष्टं वापि यद्भवेत् ।
व्यपोहयन्ति[८] पाप्मानं तस्माद्व्याहृतयः स्मृता इति ॥

यद्यृक्तो यज्ञभ्रेष आगच्छेद्भूरिति गार्हपत्ये जुहुयाद्यदि यजुष्टो भुव इत्यन्वाहार्यपचने । यदि सामतः सुवरित्याहवनीये । यदि सर्वतः सर्वा जुहुयाद् ।

---

१ अथ om. B U.

२ Instead of °फलन° B: कालन° ।— Before संसर्पण° B U have वल्लनबेपन° ।

३ Before व्या° A B ins. प्रायश्चित्तं, C′ प्रायश्चित्तिर् ।

४ Thus U C′, °परिसृप्य H (pr. m.), °पसृप्य Tr H (sec. m.), सञ्चरथाप्य B.

५ °पद्यवे Tr H, °पद्येते B U C′ (प्रविशेत् the Viv.)

६ व्याहृतीस्तु U only.

७ °सानकाः H U.

८ Thus H U B C′, पोहति च Tr.

उद्धूते तु पुरोडाशे वेपिते स्यन्दिते[1] तथा ।
भिन्ने सꣳसर्पणे चापि[2] प्रायश्चित्तं कथं भवेदिति ॥

विज्ञायते

उद्धूते तु[3] कुलꣳ हन्याद्वेपिते नश्यति प्रजा[4] ।
भिन्ने सꣳसर्पणे चापि यजमानः प्रमीयत इति ॥

अथ[5] पतनफालनखण्डनोद्वर्तनसꣳसर्पणेषु[6] प्रसिद्धमुद्वास्य बर्हिषदं कृत्वा प्रभूतेन सर्पिषावसिच्याभिमन्त्रयते किमुत्पतसि किमुत्प्रोष्ठाः शान्तः शान्तेरिहागहि[7] । अघोरो यज्ञियो भूत्वासीद सदनꣳ स्वमासीद सदनꣳ स्वमिति । ब्राह्मणे वरं दत्त्वान्तर्वेद्यासादयेत्तस्याꣳ सꣳस्थितायाꣳ सुरभिमतीं निर्वपेत्तस्याꣳ सꣳस्थितायां तन्तुमतीं निर्वपेद् ।

आयुष्मत्यस्तु कर्तव्या उत्तराश्छन्दसः[8] क्रियाः ।
हविर्भ्रेषविधिस्त्वेष[9] विहितस्तत्त्वदर्शिभिरिति ॥

---

१ स्यंदिते Tr. C′.

२ वापि U.

३ Thus C′ U Tr, नु H, B om.

४ प्रजाः U C′.

५ Instead of अथ Tr ब्राह्मणम् ।

६ B again ॰कालन॰ instead of ॰फालन॰ ।

७ शांतेरि॰ Tr.

८ ? Thus U Viv. (sec. m.), ॰राःछंदसः H, ॰राश्छांदसः C′, ॰राछंदसः Viv. (pr. m.) Tr B.

९ हविर्भ्रेष॰ Tr.

स्कन्ने ग्रहणनिर्वापे[1] द्रव्याणां चानुमन्त्रणे ।
यस्मिन्काले विजानीयात्तत्कुर्यात्कर्मसꣳस्तरे[2] ॥
प्रणवो व्याहृतयश्चैव[3] यज्ञ एष परो ऽवरः ।
तस्माद्यज्ञस्य यत्स्कन्नं विपरीतं च यद्भवेत् ।
तत्सर्वं व्याहृतीभिः[4] कुर्यादन्यत्र च वषट्कृतात् ॥
अजानद्भिः कृतं यच्च त्वरमाणैश्च यत्कृतम् ।
व्याहृतीनां प्रयोगेण यत्कृतं कृतमेव तदिति ।
कपालानां प्रमाणानि ब्रूयादाध्वर्यवे विधौ ।
समानि चतुरश्राणि द्व्यङ्गुलानि समन्ततः ॥

हविर्विकाराणां प्रमाणेन समविषमाणि[5] वर्धयन्तीति[6] बौधायनः ॥ ४ ॥ द्वितीयः ॥

अथारणिगतानामात्मगतानामजस्राणामन्वाहितानाꣳ[7] सवनगतानां चाग्नीनामुद्वातानां[8] प्रायश्चित्तिररणिगतं मथित्वा विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतु-

---

१ ग्रहणंनि° Tr.

२ ? Thus Tr B, सꣳस्मरेत् C′, संचरेत U H

३ Thus H Tr C′, °हृतिश्च B U.

४ Thus Tr, °तिभिः H C′ U (pr. m.), °हृतिः B, °हृति U (sec. m.)

५ च ins. Tr B U (sec. m.).

६ Thus Tr U (sec. m.), वर्धयतीति B, वर्धयेदिति C′ H U; the Vivaraṇa periphrases छेदयन्ति ।

७ अजस्राणाम् om. Tr.

८ चाग्नी° U H.

गृहीतं गृहीत्वाहवनीये संतनीं[1] जुहोति मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु। या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहेत्येतत्प्रायश्चित्तमनुगते ऽक्तते ऽभ्युदिते ऽभिनिम्रुक्ते चैतत्परिवित्तस्यैतत्परिविन्नस्यैतत्परिविविदानस्यैतत्सोमवामिने[2] सोमातिपविताय[3] भद्मान्तरितस्यैतद्व्रत्यरहितस्यैतत्परीष्टस्यैतत्परियष्टुरेतदेव यस्य पुरुषो रथो ऽश्वो गौर्महिषो वराहो ऽहिर्मृगः श्वा वान्यद्वा श्वापदमन्तराग्नीन्गच्छेदेतदेव[4] [5]यस्याग्नेरेकदेशमपहरेयुरेतदेव सर्वास्वेवाग्निहोत्रस्यार्तिषु मनस्वत्या प्रायश्चित्तिः क्रियत इष्ट्वा वसीयान्भवतीति ब्राह्मणम्॥ ५॥ तृतीयः॥

अथ दर्शपूर्णमासयोश्चत्वार ऋत्विजस्तेषामेकस्मिन्नविद्यमाने त्रयः प्रचरेयुर्द्वौ वाथ[6] यद्येक एव स्यात्पुरा प्रयाजेभ्य आज्यस्थाल्याः स्रुवेणोपघातमेकाध्वर्यवप्रायश्चित्तानि जुहोति जुष्टो वाचो भूयासं जुष्टो वाचस्पतये देवि वाक्। यद्वाचो मधुमत्त-

---

१ Thus Tr, संतनिं C′, संतनि B U, संतति H.

२ Thus (and cp. Āp. IX. 12. 11) B; after परिविन्नस्यैतत् Tr H C′ U ins. परिविदानस्यैतत्; Tr reads instead of परिविविदान॰ परिविदान॰।

३ ॰पवितस्यैतत् U C′.

४ After गच्छेत् H C′ and U ins. the following passage (which however, is put between brackets in U): एतदेव विण्मूत्र (H. C′ विष्ठामूत्र) पुरीषलोहितरेतोमांसास्थिमज्जामेध्याभ्याधाने समारोप्य मथित्वा पवमानेष्टिर (॰नेष्टिस्तद्द U).

५ Before यस्य B U H C′ ins. अथ।

६ थ found only in Tr C′ and the Vivaraṇa.

स्विन्मा धाः सरस्वत्यै स्वाहा ॥ इमामेवाश्विना यज्ञस्य यद्वाचो यद्दुरिष्टम् । तदश्विनौ भेषजेन संदधाताꣳ[1] स्वाहा ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् । हुवे नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः स्वाहा । यन्मे मनसश्छिद्रं यद्वाचो यच्च मे हृदः । देवास्तच्छमयन्तु सर्वꣳ सोमो बृहस्पतिश्च स्वाहा ॥ यद्विद्वाꣳसो यदविद्वाꣳसो मुग्धाः कुर्वन्त्यृत्विजः । अग्निर्मा तस्मादेनसः श्रद्धा देवी च मुञ्चताꣳ स्वाहा ॥ यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिꣳसिम । अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेहसꣳ स्वाहा ॥ ब्रह्मत्वे हौत्र आध्वर्यव आग्नीध्रे याजमाने[2] चैक एव यज्ञे यत्पर्याणि[3] तन्मे[3] देवा रक्षन्तां प्राणान्मे मा हिꣳसिषुः स्वाहा ॥ अहं ब्रह्माहꣳ होताहमध्वर्युरहमाग्नीध्रो ऽहं यजमान एक एव यज्ञे पर्याणि[3] तन्मे[3] देवा रक्षन्तां प्राणान्मे मा हिꣳसिषुः स्वाहेत्यैकाध्वर्यवप्रायश्चित्तानि हुत्वान्तर्वेद्यासीनः सर्वा देवता यजतीति विज्ञायते ।

अतिक्रान्तेषु होमेषु पर्वस्वाग्रयणेषु च ।
अरण्योर्भ्रियमाणेषु कथं तन्त्रं न लुप्यते ॥

---

१ Thus H C′, संधातारौ Tr, संदधातारौ B U.

२ Om. H C Tr.

३ Thus Tr B; पर्वैणितंमे or तन्मे C′ H U. I take पर्याणि as standing for परियाणि, 1st conj. praes. cp. अपर्याण ।

शुचिश्च पावमानी च तन्तुमानय पाथिकृत् ।
एता इष्टयः[1] प्रयोक्तव्यास्ततस्तन्त्रं[1] न लुप्यते ॥
शुचिः शोधयते पापं तन्तुस्तन्त्रं न लोपयेत् ।
पथिकृत्पन्थानमारोहेत्[2] पावमानी तु पावयेदिति नु[3]

बौधायनस्य कल्पो दर्शे व्यतीते पाथिकृती कार्या पौर्णमासे व्यतीते वैश्वानरी कार्योभये व्यतीत उभे[4] कार्ये बहुषु व्यतीतेष्वन्वारम्भणीया[5] स्यादिति[6] शालीकिः ॥ ६ ॥ चतुर्थः ॥

अथ यद्यरणी जीर्णे स्यातां जन्तुभिर्मन्थनेन वा समाने नवे अन्ये अरणी आहृत्यामावास्यायामुपोष्य[7] श्वो भूते दार्शेनेष्ट्वा तस्मिञ्जीर्णे शकलीकृत्य गार्हपत्ये प्रक्षिप्य प्रज्वाल्य दक्षिणेनोत्तरारणिमादाय[8] सव्येनाधरारणिमुपर्यग्नौ धारयञ्जपत्युद्बुध्यस्वाग्ने प्रविशस्व योनिमन्यां देवयज्यां वोढवे जातवेदः । अरण्या अरणिमनुसंक्रमस्व जीर्णां तनुमजीर्णया निर्णुदस्वेत्ययं[9] ते योनिर्ऋत्विय इत्यरण्योरग्नीन्समारोह्य[10] मन्थन-

---

१ इष्टीः प्रयुञ्जीत तत० Tr.
२ Thus Tr, ०त्पंथानारोहेत् C′, ०त्स्थानमारोहेत् B, ज्ञानमारोहयेत् H U.
३ नु given by U C′ only.
४ उभये B U.
५ ०भणी Tr.
६ कार्येति U.
७ ०मावास्यायामुपोष्य om. Tr B.
८ ०रणीमादाय H.
९ निर्नु० Tr; after °दस्वेति H U C′ ins. अथ ।
१० ०ग्निं instead of ०ग्नीन् B; ०रोप्य Tr B.

स्याहृता गार्हपत्यं[1] मथित्वा[1] विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये संतनीं[2] जुहोति मनो[3] ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु। या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहेत्यथाग्नये तन्तुमते पुरोडाशमष्टाकपालं निर्वपति शरावं[4] दक्षिणां ददाति सा प्रसिद्धेष्टिः संतिष्ठते ॥ ७ ॥
पञ्चमः ॥

अथारण्योर्व्यापत्तिं[5] व्याख्यास्यामोऽष्टाभिर्निमित्तैर्विनश्यत्यमेध्यश्वचाण्डालशूद्रवायसपतितरासभरजस्वलाभिश्च[6] सꣳस्पर्शनेऽरण्योर्विनाशस्तयोरुत्सृज्य[7] समाने नवे अन्ये[8] अरणी आहृत्याग्निसहमन्थ्याधेयमरणिगतं[9] पुनराधेयं नष्टारणी अप्सु निमज्जति[10] भवतं नः समनसावित्यथोत्तरां छित्त्वा भित्त्वा

---

१ Tr om. गा॰ म॰, B om. गा॰।

२ Thus Tr B U, संततिं H C′.

३ All the MSS. abbreviate the mantra.

४ Thus Tr C′ H and the prāy. candrikā; शारावं B U.

५ अथातोरण्यो॰ H U C′;— ॰र्व्यापत्ती॰ Tr.

६ ष्टभि॰ instead of ष्टाभि॰ Tr B U.— ॰चण्डाल॰ Tr.

७ ? Thus (°स्तयोरु°) Tr C′ and the Viv., °प्रायोरु° H, °स्तायोरु° B U.

८ Om. H U.

९ ? ॰सह॰ Tr C′ H B and the Viv., ॰गत॰ U— ॰माग्न्या॰ Tr.— ॰रणिगतं Tr and the Viv., ॰रणीगतं C′ H U ॰रणगतं B.

१० निमज्जति B C′, निमज्य Tr H B and the Viv.

प्रकृतीकृत्य मन्थनसामर्थ्यꣳ समारोपणसामर्थ्यं मन्थनशेषं वा प्रमन्थनं[१] च कुर्यात्समस्तप्रत्यवर्जꣳ । संतिष्ठते ऽरण्योर्व्यापत्तिः ।

॥ ८ ॥ षष्ठः ॥

अथ हविर्दोषान्व्याख्यास्यामो यथैतन्नीलमक्षिकाश्रातिका[२] मत्कुणश्चैलशिरसोर्यूके[३] कीटो वा पिण्डकारी स्यात्क्षुद्रकीट-मक्षिकापिपीलिकावर्जꣳ श्वमार्जारनकुलकुक्कुटमर्कटध्वाङ्क्षाखु-पुरीषसिक्थपदकेशश्मश्रुतनखकुनखपूतिद्रप्सस्वेदासृक्स्नेहाश्रुकासक्ष-वथ्वार्द्रव्रणैर्वोपहतमन्यैर्वोपहतꣳ[४] रजस्वलया वा स्पृष्टं तथाप्रय-तेन[५] भ्रूणघ्नेन वा दृष्टं तथापपात्रेणामेध्ये वा देशे । स्कन्नं दुष्टꣳ हविरपो ऽभ्यवहरन्ति । शीते[६] भस्मनि वा निधापयति[७] । मिन्दाहुती कृत्वाथान्यन्निर्वपेदाज्येन[८] वा प्रचरेदपि[९] तु[१०]

---

१ Thus B H and the Viv.; प्रथनं U C′, प्रमंथं Tr.

२ Thus (°श्रातिका i. e. आम्रातिका according to the Viv.), B and the Viv., °श्रांतिका H C′. °शीतिका U.; Tr om.

३ Thus (°चैल°) U H C′ and the Viv., °चेल B, °चेल° Tr.

४ °क्षवथ्वा° my conjecture; °क्षवध्वा° Tr, °क्षवथा° H, °क्षवक्षा° U, °क्षवथा C′, °वध्वा° B.; the Viv.: क्षवथुः क्षुतं ।

५ °प्रपतेन H; अप्रयतो नामाशुचिः the Viv.

६ शीत Tr C′.

७ °यंति Tr H U.

८ °थान्यन्नि° Tr, °थान्यनि° B, °थान्यंनि° C′ U, °थाज्यंनि° H.

९ After प्रचरेत् H U C′ ins. सैव तत्र प्रायश्चित्तिर् ।

१० Thus Tr C′ Viv. (sec. m.), नु H U B Viv. (pr. m.).

खलु क्षिप्रसꣳस्कारमाज्यं[1] ब्रुवत इति। भिन्दाहुती हुत्वा मनस्वतीं जुहोति। सैव ततः[2] प्रायश्चित्तिः[3]। ॥ ९ ॥ सप्तमः॥

अथातो ऽग्नीनामुद्वातानां प्रायश्चित्तिराहुतयः सꣳस्कारार्था दृष्टा भवन्ति। चतुर्होतार इत्येके। व्याहृतय इत्येके। भिन्दाहुती इत्येके। मनस्वतीत्येके। महाव्याहृतय[4] इत्येके[4]। ऽथ यदि सर्व एवोद्वायेयुरायतनेभ्यो ऽरण्योरग्नीन्समारोह्य[5] मन्थनस्यावृता गार्हपत्यं मन्थतीतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि जातवेदाः। स गायत्रिया[6] त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति। छन्दोभिरेवैनꣳ स्वाद्योनेः प्रजनयतीति ब्राह्मणमथ[7] यदि मथ्यमानो न जायेत यत्रान्यं पश्येत्तत आहृत्य होतव्यमित्यथान्यमत्वरमाणः[8] पुनर्मन्थेदथ यदि जात एवोद्वायेत्समारोपणमन्त्रं जपित्वा पुनरेव मन्थेदथैनमुप-

---

१ ॰संस्कारतममा॰ U (pr. m.) Viv. (sec. m.), ॰सꣳस्कारतमा॰ C′.

२ ततः Tr, तत U B H C′.

३ H U C′ add इति विज्ञायते।

४ Om. Tr C′.

५ ॰रोप्य B U H.

६ गायत्र्या MSS.

७ After ब्राह्मणम् H C′ insert the passage (l. 11-12): अथ यदि... पुनरेव मन्थेत्।

८ Instead of the words: अथान्यमत्वरमाणः... पुनरेव मन्थेत् (l. 11-12) H C′ have (and cp. Rudradatta on Āp. IX. 2, 3): लौकिकमग्निमाहृत्य विहृत्याग्नीनन्तरारणी निधाय कुर्यात्पुनरेवात्वरमाणो मन्थयेदुक्तं मन्थनम्; these last two words not in C′.

तिष्ठत दृषे रय्यै रमस्व सहसे द्युम्नायोर्जे ऽपत्यायेत्यथैनमुपसमिन्द्धे सारस्वतौ त्वोत्सौ समिन्धाताᳬ सम्राडसि विराडसीत्यथैनमुपसमाधायान्वाहार्यपचनमाहृत्य ज्वलन्तमाहवनीयमुद्धृत्य न्युप्योपसमाधाय[1] गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा दशहोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथ प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य[2] गार्हपत्ये दशात्मकं ब्राह्मण एकहोतेत्येतस्यानुवाकस्य दश स्रुवाहुतीरथ यद्यन्वाहार्यपचन उद्वायेद्गार्हपत्यादेनमुद्धृत्यान्वाहार्यपचने चतुर्होतारं जुहोति गार्हपत्ये दशात्मकमथ यद्याहवनीय उद्वायेद्गार्हपत्यादेनमुद्धृत्याहवनीये पञ्चहोतारं जुहोति[3] गार्हपत्ये दशात्मकमथ[3] यदि सवनगतानामग्नीनामाग्नीध्रीय[4] उद्वायेच्छालामुखीयादेनमुद्धृत्याग्नीध्रीये षड्ढोतारं जुहोति शालामुखीये दशात्मकमथ यद्यौत्तरवेदिक आहवनीय उद्वायेदाग्नीध्रीयादेनमुद्धृत्यौत्तरवेदिक आहवनीये सप्तहोतारं जुहोत्याग्नीध्रीये दशात्मकम् ॥ १० ॥

एतयैवावृतैकस्मिन्नुद्वाते द्वयोर्वा प्रतिविभज्य होतॄञ्जुहुयाद्व्याहुतींश्चेद्व्यस्ताः समस्तांश्च जुहुयात्तथा भिन्दाहुती जुहुया-

---

१ These two words found in C′ H U (in U they are cancelled), U ins. अथ after ०धाय।

२ These two words om. Tr C′ H.

३ H B read हुत्वा and insert जुहुयात् after दशात्मकम्।

४ सवनगतानामग्नीनाम् om. Tr.

न्मनस्वतीं चेदाहवनीये जुहुयात्तेषाजस्राणामन्वाहितानाꣳ सवनगतानां चाग्नीनामुद्वातानां प्रायश्चित्तिरेतदेव[1] होमकाले ऽन्वाधानवर्जमथ यस्याग्निरुद्धृतो[2] ऽहुते ऽग्निहोत्र उद्वायेदिति यथासूत्रं[3] वा कुर्यादपि वा गार्हपत्यादिध्ममादीप्य[4] मन्थनमधिमन्थनमुपसमिन्धनमित्येतान्मन्त्रान्निगदेपि[5] वा ज्योतिष्मतीमिष्टिं निर्वपेदपि वा ज्योतिष्मतीभ्यामृग्भ्यां पूर्णाहुतिं जुहुयादपि वा ज्योतिष्मतीꣳ स्रुवाहुतिं जुहुयादग्नये ज्योतिष्मते स्वाहेतीष्टिपूर्णाहुतिस्रुवाहुतीनां पूर्वंपूर्वं विधिं बलीयाꣳसमाचार्या ब्रुवते । तत्रोदाहरन्ति

ये ये विशेषा लघवो यत्र यत्रोपलक्षिताः ।
कर्म तैर्न प्रसङ्गेन कुर्यादापत्सु तद्धुनम्[6] ॥
विशेषान्सर्ववेदेभ्यः[7] प्रयत्नेनोपधारयेत्[8] ।
कर्मणां प्रविचारार्थमापत्सु[9] च समाप्नुयादिति ॥

---

१ Thus C′ H B U (pr. m.) and the Viv.; ०त्तिषैव Tr, ०त्तिरेवाथ यदि U (sec. m.).

२ यद्यस्याग्नि० Tr.

३ Viz. according to the ritual exposed in XIII. 7 : 124. 1.

४ Instead of चादीप्य H U उद्धृत्य ।

५ चाधिमंथनम् found in C′ Tr H U (pr. m.).

६ तद्धुतं H U.

७ ०देवेभ्यः H Tr and once in the Viv.

८ प्रपत्नेनो० B.

९ प्रतिचारा० B U.

यदि प्रसङ्गेन कृतं च[१] लौक्ये[१] मुग्धैर्वा[२] बालैर्हुतꣳ स्यादिहुतं[३] च पत्न्या तानरण्योरग्नीन्[४] समारोह्योदवसाय[५] मथित्वाग्नीन्विहृत्य पूर्णाहुतिस्तन्तुमती च कार्येत्यथ यद्यप्रसङ्गेन कृतं च[६] लौक्ये[६] मुग्धैर्वा[७] बालैर्हुतꣳ[८] स्यादिहुतं च पत्न्या तान्व्याहृतीभिर्विहृत्य पूर्णाहुतिस्तन्तुमती च कार्येति । ॥ ११ ॥ अष्टमः ॥

अथ वै भवति[९] निर्ऋतिर्वा एतस्य यज्ञं गृह्णाति यस्या कस्यां च हविः चायति[१०] यद्यवदानानि विन्दन्ति नात्र प्रायश्चित्तं कुर्वन्ति । दहति ह वा एषो ऽध्वर्युरवदानानि । समू[११]ह्यैतान्येष[११] तर्पयति[११] । दहति ह वा एष य[१२] आज्यं[१२]

---

१ ? चलौक्ये Tr U, चलोक्ये C′ the Viv., चेलौवे H, चेलौक्ये B.

२ Thus B C′, सुग्धैर्नवा H, सुग्धेनवा Tr U the Viv.

३ विहुते H U.

४ Thus Tr and the Viv., त्वानारण्यो॰ H, थारण्यो॰ B U, तारण्यो॰ C′.

५ समारोप्योदवसाय H U, समारोप्य B, समारोह्य Tr C′.

६ Thus Tr C′ the Viv., चैलोक्ये B, स्याल्लोक्ये H, लौकिक्ये U.

७ Thus B, सुग्धैनवा H, सुग्धेनवा U C′, सुलेग्धनवा Tr.

८ Thus Tr B, वालैर्हुतꣳ C′, बालैर्वाहुतं H U.

९ These three words not in H Tr.

१० Thus (and cp. Āp. IX. 1. 17) Tr B U the Viv. चारयति C′, चपर्यंति H.

११ समूहैतान्येष संतर्पयति U, समूह्यैतान्येष तर्पयति Tr, समूहैर्नान्येष संत॰ H, समूहैर्नतान्येष संत॰ B, समूहैतान्येषः संत॰ C′.

१२ Thus Tr and the Viv., यदाज्यं the other MSS.

पुरस्तादहुत्वाथावदानानि जुहोत्याज्येनोपरिष्टान्नाभिघारयति। तेषाꣳ संदग्धानां न देवास्तृप्यन्ति[1] न यजमानो। ऽथ हैनान्येष संतर्पयति य आज्यं पुरस्ताद्धुत्वाथावदानानि जुहोत्याज्येनोपरिष्टादभिघारयति। तेषाꣳ संदग्धानां तृप्यन्ति[2] देवास्तृप्यति[2] यजमानो[2]। ऽथ यद्याग्नेयात्पुरोडाशादग्नीषोमौ यजेताग्नीषोमीयाद्वाग्निं यजेत नैतत्प्रदानमित्याहवनीये स्रुवाहुतिं जुहुयाद्यद्वो देवा अतिपादयानीति। देवपवित्रमाग्नेय्यो याज्यापुरोनुवाक्या देवपवित्रमैन्द्रियो[3] देवपवित्रं प्राजापत्या देवपवित्रं व्याहृतय इत्यथ यदि होता याज्यापुरोनुवाक्यासु मुह्येत सर्वाभिराग्नेयीभिर्यजेतेति। विज्ञायतेऽग्निः सर्वा देवता इत्यैन्द्रीभिर्विज्ञायत[4] इन्द्रो वै सर्वा देवता इति। प्राजापत्याभिर्विज्ञायते प्रजापतिः सर्वा देवता इति। व्याहृतीभिर्विज्ञायते सर्वा वा ऋचः सर्वाणि सामानि सर्वाणि यजूꣳषि यद्व्याहृतय इत्यथ यदि यजमानो याजमानेषु मुह्येत व्याहृतीभिरेवान्तरेण वेद्युत्करौ प्रपदन[5] व्याहृतीभि-

---

१ देवतास्तृ° U (sec. m.).

२ Thus Tr, देवा (or देवता) स्तृप्यंत्यथ यज° U (sec. m.) B, देवास्तृप्यंति यजमानो H; C′ incomplete.

३ Thus U, °मिंद्रियो C′, °मैन्द्र्यो Tr U the Viv., °मैन्द्रिया H.

४ After the instrumental here and infra some of the MSS. ins. वा।

५ प्रपादनं Tr. C′.

रेवोपनिष्क्रमणं व्याहृतीभिरेवानुमन्त्रणं । विज्ञायते[१] सर्वा वा ऋचः सर्वाणि सामानि सर्वाणि यजूꣳषि यज्ञाहृतय इत्युपासते ह वै यज्ञं देवा[२] अन्तरिता[३] इदमु नो हविर्न कृतं तद्धोष्यत[४] इत्या स्विष्टकृत इत्येक । एडाया इत्येक । आनुयाजेभ्य[५] इत्येक । आ शंयुवाकादित्येक । आ समिष्टयजुष इत्येक । ऊर्ध्वं चेत्समिष्टयजुषः स्मरेत्सꣳस्थाप्यैतामिष्टिमन्यामिष्टिमनुल्बणां तन्वीत । यज्ञो ह[६] वै[६] यज्ञस्य प्रायश्चित्तिरिति विज्ञायते ॥ १२ ॥ नवमः ॥

अथ सांनाय्यदुहो[७] धयेयुस्तेद्वत्सा वायव्यया[८] यवाग्वा[८] सायं यजेतायैकस्यां दुग्धायां न[९] धीतां[९] दोहयेद्दुग्धाभिः सꣳस्थाप्यादुग्धानां[१०] वत्सानपाकृत्य श्वः सांनाय्येन यजेत ।

---

१ च ins. H U C′.

२ देवता H C′.

३ Thus H U C′, अंतर्हिता Tr B.

४ तस्माद्धो° Tr.

५ Thus, not आनू° the MSS.

६ हैव Tr.

७ सान्नायोहो Tr, साय्यदुहो H.

८ Thus C′ Tr and the Viv.; वायव्यावा यवाग्वा B C′, वायव्यया-यंवाग्वा C′.

९ ? नाधीतां Tr, नधीता B, नपीतां H U C′. The Vivaraṇa periphrases: अन्दामानीय तां दोहयीत (sic) ।

१० °स्थाप्य दुग्धानां Tr H.

सायंदोहस्येदार्तिमार्छेदिन्द्राय[1] व्रीहीन्निरुप्योपवसेदिति यथासमाम्नातमपि वा प्रातर्दोहं द्वैधं कृत्वान्यतरदातञ्च[2] सायंदोहस्थाने कुर्यात्कृतस्थान[3] इतरत्प्रातर्दोहस्येदार्तिमार्छेदैन्द्रं वा माहेन्द्रं वा पुरोडाशं निरुप्य तेन दध्ना सह प्रचरेदुभयं चेदार्तिमार्छेदैन्द्रं[4] पञ्चशरावमोदनं निर्वपेदिति। प्रसिद्धमाग्नेयेन प्रचर्यैन्द्रेण प्रचरेत्। सर्वाणि चेद्धवींषि दुष्येयुर्नश्येयुरपहरेयुर्वाज्येनैता देवताः प्रतिसंख्यायमिष्ट्वैतामिष्टिमन्यामिष्टिमनुसवणां[5] तन्वीत। यज्ञो ह[6] वै[6] यज्ञस्य प्रायश्चित्तिरिति विज्ञायते। ॥ १३ ॥ दशमः ॥

अथातश्छन्दस्यनाम्नातानि[7] हुतानुमन्त्रणानि व्याख्यास्यामो। वैमृधमिष्टमनुमन्त्रयत इन्द्रस्य वैमृधस्याहं देवयज्ययेन्द्रियाव्यसपत्नो वीर्यवाञ्छ्रीमान्भूयासित्यसपत्नो वीर्यवान्भूया-

---

१ After इन्द्राय C′ H U and the Viv. ins. वा महेन्द्राय वा but cp. T Br. III. 7. 1. 6.

२ ॰न्यतरमातञ्च B U, ॰न्यतरदाविञ्च C′.

३ कृतस्थान इतरत् only in H U C′.

४ चार्तिमार्छेत् om Tr H C′.

५ प्रतिसंख्यामि॰ Tr; C′: प्रतिसंख्ययामि॰; the Viv. and B U as given in the text.

६ हैव Tr.

७ The Prāyaścitta candrikā makes the interesting statement, that these anumantraṇa formulas are taken from the Kāṭhaka (कंठोक्तः sic). Some of them occur indeed in the Kāṭhaka (v. i: 44. 5 sqq.).

समिति वा[1] । पर्जन्यस्याहं देवयज्यया सुयवसो[2] भूयासꣳ । सोमस्याहं देवयज्यया प्र प्रजया च पशुभिश्च जनिषीय सुरेता रेतो धिषीयेति वा । सवितुरहं देवयज्यया स्वस्ति-मान्पशुमान्भूयासꣳ । सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयꣳ । सरस्वतो ऽहं देवयज्यया श्रद्धामना भूयासं । पूष्णो ऽहं देवयज्यया पुष्टिमान्पशुमान्भूयासं[3] । मरुतामहं देव-यज्यया प्राणैर्ऋध्यासं । विश्वेषां देवानामहं देवयज्यया प्राणैः सायुज्यं गमेयं । द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयो-र्ऋध्यासं भूमानं प्रतिष्ठां गमेयमिति वा । वाजिनामहं देवयज्यया रेतस्वी भूयासं । वरुणस्याहं देवयज्यया धर्म-भाग्भूयासं । कस्याहं देवयज्यया प्रविष्ठो[4] भूयासं । विश्व-कर्मणो ऽहं देवयज्यया विश्वानि कर्माण्यवरुन्धीयादित्या अहं देवयज्ययाꣳहसो मुच्येय । वायोरहं देवयज्यया रत्नभाग्भू-यासꣳ । सूर्यस्याहं देवयज्यया सुदृशीको भूयासमग्नाविष्णवो-रहं देवयज्यया वीर्यवान्भूयासं । विष्णोरहं देवयज्यया

---

१ H U C′ ins. पर्जन्यमिष्टमनुमन्त्रयते H U C′, and thus each time further on, mutatis mutandis, before each formula (e.g. after सुयवसो भूयासमिति सोममिष्टमनुमन्त्रयते सोमस्याहं etc.). But cp. the expression (p. 342. 2.) यथादेवतमिष्टमनुमन्त्रयते ।

२ सूयवसो Tr only.

३ पशुमान् in Tr C′ and Prāy. candrikā only.

४ प्रचिष्ठो Tr B.

ग्निपिविष्टो भूयासमर्धुको ऽहं देवयज्यया सुवर्गं[१] लोकं गमेयमिति । यथादेवतमिष्टमनुमन्त्रयत[२] एवमनादिष्टानष्टाकपालानाग्नेयविकारानाचक्षत एकादशकपालानग्नीषोमीयविकारान्द्वादशकपालान्वैश्वदेवविकारानेककपालं भूमिकपालं च द्यावापृथिव्यविकारावतो[३] ऽन्यानाग्नेयविकाराꣳस्स्विष्टकृत्सौम्यविकारान्दधिपयश्चामिक्षापशवः[४] सांनाय्यविकारा[५] वनस्पतिः स्विष्टकृद्विकार । उपाꣳशुयाजानुपाꣳशुयाजविकारानाचक्षत[६] इत्यथाप्युदाहरन्ति[६] हविःसामान्यं देवतासामान्यं कपालसामान्यमिति हविर्देवताकपालसामान्ये हविःसामान्यं बलीय[७] इत्यपि[७] वास्य यज्ञस्यागुर उदृचमशीयेति सार्वत्रिकम् ।

॥ १४ ॥ एकादशः ॥

॥ इति सप्तविꣳशः प्रश्नः ॥

---

१ Thus U C′ Prāy. candr., स्वर्गं Tr B H.

२ ०दैवत० H U C′.

३ Thus B U H Viv., ०विकारानतो Tr C′.

४ Thus (०विकारान्दधि०) U C′ and Viv.; ०विकारांदधि० Tr, ०विकारादधि० H, ०विकारानिति शालीकिर B. — C′ breaks off after पयश्चामिक्षापशून्स (sic).

५ Thus Tr U B, ०विकारान् H.

६ Thus U; ०कारावक्षत इत्य० H, कारानित्यथा Tr B.

७ Thus B H U and the Viv., बलीयोऽपि Tr.

अथ वै भवति यः पापयक्ष्मगृहीतः स्याद्यो वापरुध्येत देवेभ्य ऋषिभ्यः पितृभ्यो गोभ्यो ब्राह्मणेभ्य[१] स्तेनाभिशस्तोऽभिशस्यमानो वा रहस्येष्ट्या यजेतेत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते हिरण्यं। तस्याः प्रज्ञात उपवसथो। ऽथ प्रातर्हुतेऽग्निहोत्रे पुरापां प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने येन देवाः पवित्रेणात्मानं पुनते सदा। तेन सहस्रधारेण पावमान्यः पुनन्तु मा स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोति प्राजापत्यं पवित्रꣳ शतोद्यामꣳ हिरण्मयम्। तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोतीन्द्रः सुनीती सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या। यमो राजा प्रमृणाभिः पुनातु मां जातवेदा मोर्जयन्त्या पुनातु स्वाहेत्यथ पृष्ठ्याꣳ स्तीर्त्वापः प्रणीयाग्नये ऽꣳहोमुचे ऽष्टाकपालं इति दशहविषमिष्टिं निर्वपति अपचित्वासादयति। तस्याः सप्तदश सामिधेन्यः। समिध्यमानां च समिद्धां चान्तरेण पावकवत्यौ धाय्ये दधात्यपामिदं न्ययनं नमस्त इति द्वे[२]। पावकवन्तावेवाज्यभागावग्नी[३] रक्षाꣳसि सेधति शुक्रशोचिरमर्त्यः। शुचिः पावक ईड्य इति

१ B U ins. पशुभ्य, which is neither found in the Prāy. pradīpa देवेभ्यः पितृभ्य ऋषिभ्यो गोभ्यो ब्राह्म॰ Tr, देवेभ्य ऋषिभ्यो ब्राह्मणेभ्यः पितृभ्य H.

२ द्वाभ्यां Tr B, द्वे H.

३ एव given by Tr only.

पुरोनुवाक्यामनूच्य यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा। ब्रह्म तेन पुनीमह इति यजति। यो धारया पावकया परिप्रस्यन्दते सुतः। इन्दुरश्वो न कृत्विय[1] इति पुरोनुवाक्यामनूच्या कलशेषु धावति पवित्रे परिषिच्यते। उक्थैर्यज्ञेषु वर्धत इति यजत्यथ हविषामग्नेर्मन्वे प्रथमस्य प्रचेतस इत्येतस्मिन्ननुवाके याज्यापुरोनुवाक्याः सहसंयाज्या भवन्त्यथ[2] पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोति पवमानः सुवर्जन इत्येतेनानुवाकेन प्रत्यृचं। प्रसिद्धेडाथान्वाहार्यमासाद्य हिरण्यं ददाति। समानं कर्मा पत्नीसंयाजेभ्यो ऽथ पुरस्ताद्गृहपतेः स्रुवाहुतीरुपजुहोति यद्देवा देवहेडनमित्येतेनानुवाकेन प्रत्यृचं। संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा। विसृजते व्रतमेतयैव यजेतर्तुव्यतिक्रमे[3] दारव्यतिक्रमे ऽयोनौ वा रेतः सिक्त्वैतयैव यजेत पातकोपपातकसंयुक्तो[4] द्वादशाहं महापातकसंयुक्तो मासं पुण्यमिच्छन्संवत्सरमृतं वा तामेतां महापवित्रेष्टिरित्याचक्षते मृगारेष्टिरिति वा रहस्येष्टिरिति बौधायनः[5]। ॥ १ ॥ प्रथमः ॥

---

१ Thus Tr U H, कृत्व्य B.

२ भवन्तीत्यथ Tr.

३ यजेतर्वेतिक्रमे Tr.

४ पातकोवपातक॰ Tr, पातकोपातक॰ B. The Viv.: पातकोपपातकः महापातकानां रहस्यकृतानाम्।

५ Tr B H repeat the last three words.

अथो एतस्मो ऽपरिमितं प्रवसतीति[1] न संवत्सरमति प्रवसतीत्येवेदमुक्तं भवति स उ चेदति प्रवसेत्यविन्नेष्ट्या यजेतेत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते हिरण्यं । तस्याः प्रज्ञात उपवसथो । ऽथ प्रातर्हुते ऽग्निहोत्रे पुरापां प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने येन देवाः पवित्रेणात्मानं पुनते सदा । तेन सहस्रधारेण पावमान्यः पुनन्तु मा स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोति प्राजापत्यं पवित्रं शतोद्यामꣳ हिरण्मयम् । तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोतीन्द्रः सुनीती सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या । यमो राजा प्रमृणाभिः पुनातु मां जातवेदा मोर्जयन्त्या पुनातु स्वाहेत्यथ पृष्ठ्याꣳ स्तीर्त्वापः प्रणीयाग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपति सरस्वत्यै प्रियाया उपाꣳश्वाज्यमग्नये पावकाय पुरोडाशमष्टाकपालं निर्वपति सवित्रे सत्यप्रसवायोपाꣳश्वाज्यमग्नये शुचये पुरोडाशमष्टाकपालं निर्वपति वायवे नियुत्वत उपाꣳश्वाज्यमग्नये व्रतपतये[2] पुरोडाशमष्टाकपालं निर्वपति विष्णवे शिपिविष्टायोपाꣳश्वाज्यमग्नये वैश्वानराय पुरोडाशमष्टाकपालं निर्वपति दधिक्राव्ण उपाꣳश्वा-

---

१ इति not in the MSS., but cp. III. 14 : 85. 2.

२ ०तय इति Tr.

ज्यमिति ˈ श्रपयित्वासादयति ˈ तस्याः सप्तदश सामिधेन्यः ˈ समिध्यमानां च समिद्धां चान्तरेण पावकवत्यौ धाय्ये दधात्यपामिदं न्ययनं नमस्त इति द्वे[1] ˈ पावकवन्तावेवाज्यभागावग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्य इति पुरोनुवाक्यामनूच्य यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनीमह इति यजति ˈ यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्विय इति पुरोनुवाक्यामनूच्या कलशेषु धावति पवित्रे परिषिच्यते । उक्थैर्यज्ञेषु वर्धत इति यजत्यथ हविषामग्न आयूंषि पवसे ऽग्ने पवस्वेत्यग्नेः पवमानस्योत नः प्रिया प्रियास्विमा जुह्वाना युष्मदिति सरस्वत्याः प्रियायाः अग्ने पावक स नः पावकेति पावकस्या विश्वदेवमा सत्येनेति सवितुः सत्यप्रसवस्याग्निः शुचिव्रततम उदग्ने शुचयस्तवेति शुचेर्वायुरग्रेगा वायो शुक्रो अयामि त इति वायोर्नियुत्वतस्त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतानीति व्रतपतेः प्र तत्ते अद्य किमित्ते विष्णो परिचक्ष्यं भूदिति विष्णोः शिपिविष्टस्य वैश्वानरो न ऊत्या पृष्टो दिवीति वैश्वानरस्य दधिक्राव्णो अकारिषमा दधिक्रा इति दधिक्राव्णो ˈ ऽथ कृतानुमन्त्रणमग्नेः पवमानस्याहं देवयज्यया शुचिः पूतो मेध्यो विपाप्मा ब्रह्मवर्चस्यन्नादो भूयासमग्नेः पावकस्याग्नेः शुचेरग्नेर्व्रतपतेरग्नेर्वैश्वानरस्याहं देवयज्यया शुचिः

---

१ द्वाभ्यां Tr B.

पूतो मेध्यो विपाप्मा ब्रह्मवर्चस्यन्नादो भूयासमित्यु पाꣳशुयाजायामुपाꣳशुयाजवदित्यथ[1] पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोति पवमानः सुवर्जन इत्येतेनानुवाकेन प्रत्यृचमतिथिवत्यौ[2] दमूनवत्यौ संयाज्ये जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुपयाहि विद्वान् । विश्वा अग्ने अभियुजो विहत्य शत्रूयतामाभरा भोजनानि ॥ मर्जाल्यो मृज्यते स्वे दमूनाः कविप्रशस्तो अतिथिः शिवो नः । सहस्रशृङ्गो वृषभस्तदोजा विश्वाꣳ अग्ने सहसा प्रास्यन्यानिति प्रसिद्धेडायान्वाहार्यमासाद्य हिरण्यं ददाति समानं कर्म पत्नीसंयाजेभ्यो ऽथ पुरस्ताद्गृहपतेः स्रुवाहुतीरुपजुहोति यद्देवा देवहेडनमित्येतेनानुवाकेन प्रत्यृचꣳ संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा विसृजते व्रतमेतयैव यजेताभिशस्तो ऽभिशस्यमानो वैतयैव यजेतर्तुव्यतिक्रमे[3] दारव्यतिक्रमे ऽयोनौ वा रेतः सिक्त्वैतयैव यजेत संवत्सरमर्धपादमेकविंशतिरात्रं[4] वा तिर्यग्योनिगताञ्ज्ञातीञ्जात्यन्तरे[5] वर्तमानान्दुष्कृतैरपरुद्धान्दश पूर्वा-

---

१ °शुयाजविकारवदित्यथ H U.

२ °मत्यौ U.

३ Thus B U H and Prāy. candr.; Tr. omits the passage.

४ Thus (अर्धपादम्) H and Prāy. candr., °मूर्ध्वपाद° U, मध्यपाद° Tr B. The meaning acc. to the Vivaraṇa is: द्वौ मासौ।

५ ज्ञातीन Tr and the Viv. °ज्ञातान् U; B and H. om.

न्दशापरानात्मानं चैकविंशं[1] पङ्क्तिं च पुनाति न[2] च[2] पुनरावर्तत[2] इत्यथाप्युदाहरन्ति

वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैव च ।

ऋतावृतौ प्रयुञ्जानः पुनाति दशपूरुषमिति[3] । ॥ २ ॥

द्वितीयः ॥

अथातो नक्षत्रेष्टीर्व्याख्यास्यामो । ऽग्निर्वा अकामयतान्नादो देवानाꣳ स्यामिति ता ब्राह्मणेन[4] व्याख्याताः । सा या वैशाख्याः पौर्णमास्याः पुरस्तादमावास्या भवति स सकृत्संवत्सरस्यापभरणीभिः[5] संपद्यते तस्यामारभेतेति । तस्या उपवसथे ऽरण्योरग्नीन्समारोह्योदवसाय[6] मथित्वाग्नीन्विहृत्याजस्रान्वापि वा[7] पौर्णमास्याममावास्यायां वोपवसेद्यस्यां[8] तस्याम्

---

१ Thus B U, विंशति H Tr and Prāy. candr.

२ These words omitted by Tr as also the following इति; the Prāy. candrikā reads न स पुन॰ ।

३ Thus (and cp. Baudh. dhś. I. 2. 17, Vas. dhs. XXII. 10) Tr B (the last only ॰पुरुष॰ and U (sec. m.) and Prāy. candr.; पवित्रेष्टिमृतावृतौ । स्वगारेष्टिं प्रकुर्वाणः पुनात्याविंशतिं (or पुनाति वि॰) कुलमिति H and U (pr. m.).

४ See T Br. III. 1. 4 sqq.

५ Thus Tr B U (sec. m.) ॰भरणा H U (pr. m.) Prāy. candr.

६ ॰रोप्यो॰ B U H Prāy. candr.

७ Om. U B.

८ उपवसेत् om. Tr.

संपद्यते । तत्रैषो ऽत्यन्तप्रदेशो । हविरुच्छिष्टव्रतो[1] यजमानो[2] भवतीति विज्ञायते ऽपि वा जन्मनक्षत्रे कुर्यादायुष्कामस्य[3] यावज्जीवं[3] त्र्यवरार्ध्यो वा प्रयोगो । जीववन्तावाज्यभागौ यजत्या नो अग्ने सुकेतुना[4] त्वꣳ सोम महे भगमित्यथ[4] निर्वपत्यग्नये कृत्तिकाभ्यो जुष्टं निर्वपामीत्यग्निं[5] कृत्तिका यजेति संप्रेष्यत्याग्नेयमष्टाकपालमनुमत्यै चरुमिति[6] सर्वत्रानुषजति नक्षत्रहविर्मध्ये । अपर्यित्वासादयति । तस्याः सप्तदश सामिधेन्यः । समिध्यमानां च समिद्धां चान्तरेण श्रीमत्यौ धाय्ये दधाति स्वाहा यस्य श्रियो दृशे ऽदाभ्यः पुरएतेति । रयिमन्तौ पुष्टिमन्तावाज्यभागौ[7] यजत्यग्निना रयिमश्नवद्वयस्फानो अमीवहेत्यथ हविषामग्निर्मूर्धा भुवो ऽनु नो ऽद्यानुमतिरन्विदनुमते त्वमिति संचरयोर्याज्यापुरोनुवाक्या ।

---

१ ॰व्रतोपायी H U.

२ Om. Tr.

३ Thus reads Tr; the three other MSS. : ॰दायुष्कामस्त्र्यवरार्ध्यो; the manuscript tradition, however, seems to be defective, the Vivaraṇa runs : अपि वा जन्मनि क्रियेतायुष्कामः किं तत्र स्वजन्मनक्षत्रदैवत्यामिष्टिं यावज्जीवमथ वा त्र्यवरार्ध्यः प्रयोगः । जन्मनक्षत्रदैवत्यामिष्टिं जन्मनक्षत्रे चिरावर्तयेदायुष्कामोऽत ऊर्ध्वं यथाश्रुतमायुष्कामस्य ।

४ The two mantras are given Sakalapāṭhena in B.

५ इति om. U B H.

६ इति om. Tr B H.

७ पुष्टिमन्तौ om. Tr.

नक्षत्रहविषाग्निर्नः[१] पातु कृत्तिका[२] इति यथासमाम्नातमथ पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोत्यग्नये स्वाहा कृत्तिकाभ्यः स्वाहेति यथासमाम्नातꣳ[३] । स्विष्टवत्यौ[४] संयाज्ये हव्यवाहꣳ स्विष्टमिति । संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा । विसृजते व्रतम् । ॥ ३ ॥

एवमुत्तरमुत्तरं[५] प्रतितन्त्रमुत्तरउत्तरेऽहनि यजेत । विशेषान्व्याख्यास्यामः । प्रजापतिः सवितेत्युपाꣳशु सर्पेभ्य आश्रेषाभ्य[७] आज्ये करम्भमिति । सर्वे यवा भवन्त्यधिश्रयण-काले तिरः पवित्रमाज्यमानीयाधिश्रित्य[८] तिरः पवित्रं कर-म्भानात्रपति[९] । पितृभ्यो मघाभ्यः पुरोडाशꣳ षट्कपालमिति । पैतृयज्ञिकेन निर्वपणप्रोक्षणाधिवपनसंवपनादीनि[१०] व्याख्यातानि भवन्ति । तार्तीयसवनिकेन[११] सौम्येन प्रचरणकल्पो व्याख्यातो ।

---

१ ॰हविषोऽग्नि॰ H.

२ Tr gives a longer citation of the pratika.

३ Tr. ins. अथ ।

४ ॰कृतौ U H.

५ एवमेवसु॰ U H.

६ Thus Tr; प्रतिसंचसु॰ H U, संचसु॰ B and the Viv.

७ Thus (॰श्रे॰) B and Prāy. candr. as T Br. III. 1. 4. 7; ॰स्रे॰ U H Tr.

८ अधिश्रित्य given only by Tr.

९ Thus Tr B H and Prāy. pradipa; ॰भमानयति U.

१० ॰संवपन॰ om. Tr; ॰संयवनादीनि the Viv.

११ ॰सवनीयेन Tr.

ऽथैतदायवे निष्ट्यायै गृष्ट्यै दुग्धमिति । पयसः प्रातर्दोहवत्संस्कार[1] । आ[1] विशाखाभ्यामिष्ट्वा तदानीमेव पौर्णमासीमाज्येन यजेताथ श्वो भूते मित्रायानूराधेभ्यश्चरुमित्युत्तराभिरषाढाभिरिष्ट्वा[2] तदानीमेवाभिजिता यजेताथ श्वो भूते विष्णवे श्रोणायै पुरोडाशं त्रिकपालमित्युत्तरेषु प्रोष्ठपदेषु पुरोडाशं भूमिकपालमिति । कपालमात्रं[3] भूमौ परिलिख्याङ्गारमधिवर्तयति[4] । तस्यैककपालवत्संस्कार[5] । आपभरणीभिरिष्ट्वा[5] तदानीमेवामावास्यामाज्येन यजेताथ श्वो भूते चन्द्रमसे प्रतीदृश्यायै पुरोडाशं पञ्चदशकपालमित्यभिनीयैवाहनि[6] निर्वपेदुदिते चन्द्रमसि प्रचरेत् । एतमहोरात्राभ्यां चरुं निरवपतां द्वयानां व्रीहीणां शुक्लानां च कृष्णानां न सवात्योर्दुग्धे श्वेतायै च कृष्णायै चेत्यभिनीयैवाहनि[6] निर्वपेदस्तमिते प्रचरेदपि वा सन्ध्यावेव निर्वपेत्सन्ध्यावेव प्रचरेन्निर्वपणन्यायेन[7] प्रचरेदथैतमुषसे चरुमित्यभिनीयैव रात्रौ निर्वपेदुषसि प्रचरेदथैतस्मै नक्षत्राय चरुं निर्वपति । यथा त्वं देवानामस्येवमहं मनुष्याणां भूयासमिति निर्वपण-

---

१ ? Thus Tr B; ॰रोथावि॰ H, ॰रोथवि॰ U.

२ ॰यानुराधे॰ Tr.

३ ॰मंत्रं Tr.

४ प्रलि॰ U H.

५ ? Thus B; ॰रोथापभ॰ U, ॰रोपभ॰ H Tr.

६ हविर् ins. H.

७ निर्वपणन्यायेन प्रचरेत् in Tr only.

काले यजमानायतन आसीनो यजमानो जपत्यभिनीयैवाहनि[1] निर्वपेदुदितेषु नक्षत्रेषु प्रचरेदथैतꣳ सूर्याय नक्षत्रेभ्यश्चरुमित्यभिनीयैव रात्रौ निर्वपेदुदिते सूर्ये प्रचरेदथैतमदित्यै चरुमथैतं विष्णवे चरुमिति यजति[2]। यज्ञो वै विष्णुर्यज्ञ एवान्ततः प्रतितिष्ठतीति ब्राह्मणं। वरो[3] दक्षिणा भवतीति[3] विज्ञायते ऽपाघावद्धा[4]। प्रसिद्धः पशुः। पाथिकृत्येष्ट्वा दर्शपूर्णमासाभ्यां यजेत नक्षत्रसत्त्रेण द्युतिरानन्त्याय। [5]ज्योतिषामयनेनेष्ट्वा पापं निर्णुद्य[6] ज्योतिष्टमुपजायते ऽप पुनर्मृत्युं जयतीति ह[7] स्माह[7] बौधायनः। ॥ ४ ॥

तृतीयः ॥

नवैरेवामावास्यायां[8] पौर्णमास्यां[8] वा यजेत नवैर्वाग्नि-

---

१ हविर् ins. H.

२ Om. Tr.

३ वरा दक्षिणा भवन्तीति Tr.

४ Thus (and cp. the Journal of the German Oriental Society, Vol. LVII, p. 742) U Tr, पाद्यावद्धा B, पाकदा H. The Vivaraṇa runs: अपाघावद्धा दक्षिणा इति शेषः। यथा अपावास्तु श्रूयन्ते दक्षिणाः तास्त्विह पष्ठौही वरान्द्याक्कꣳसं च स्त्रियै चाभारꣳ सन्नह्या इति (cp TBr. III. 12. 4. 7).

५ Tr ins ज्योतिषां।

६ निर्नुद्य Tr.

७ Om. B.

८ Thus Tr H and the Viv.; ०मावास्यां पौर्णमासीं वा U, नवैरेव पौर्णमासीममावास्यां वा B; the accus. instead of the locat. also Ap. VI. 30. 13.

होत्रं[1] जुहुयाद्पि वाग्निहोत्रीं वा[2] नवानादयित्वा[2] तस्याः पयसा जुहुयाद्पि[3] वा[3] नवानां[3] यवाग्वा[3] सायंप्रातरग्निहोत्रं जुहुयाद्पि वा गार्हपत्ये चतुःशरावमोदनꣳ श्रपयित्वाग्रयण-देवताभ्यः स्विष्टकृच्चतुर्थीभ्यो[4] जुहुयाद्पि वा नवैरेव ब्राह्मणान्भोजयेत्स[5] एष[5] दृब्ध्युपचारकल्पो[6] हरितयवशमीधान्यौषधि-वनस्पतिमूलफलशाकानामनिष्ठाग्रयणं[7] याथाकामी[8] स्यात्पङ्क्ति-वैषम्याद्व्रीहिभिरिष्ट्वा[9] व्रीहिभिरेव[10] यजेता यवेभ्यो यवैरिष्ट्वा यवैरेव[10] यजेता व्रीहिभ्यो । ऽपि वा व्रीहिभिरेव[11] यवैर्वा यजेत । संतिष्ठन्त आग्रयणानि । ॥ ५ ॥ चतुर्थः ॥

---

१ Thus H U and the Viv.; नवैरेवा० B Tr.

२ Thus U and the Viv., वा नवानदयि० Tr, वावानादयि० H, वैनानादयि० B.

३ Om. Tr; cp. Āp. l. c. 15.

४ Thus (as gṛhyasūtra and Hir. śrs. III. 8. 23) Tr B, ०र्थीभ्यो (as Āp. l. c. 16,) H U.

५ Thus U and the Viv., ०स एवैष Tr, H B om. स ।

६ Thus Tr; दृछ्युपचार० B U, दृछ्युपचारि० H.

७ ०शिंबी० instead of ०शमी० H; ०फलमूल० instead of ०मूलफल० U; ०निष्ठापि instead of ०निष्ठाग्रयणं (thus B U H and Viv.) Tr.

८ Thus B H, यथा० Tr U Viv.

९ Thus U and the Viv.; स्यासक्तिवै० B, स्याताम्पंक्तिवै० H, स्याक्तान् पङ्क्तिवै० Tr.

१० एव om. Tr.

११ एव om B U.

अथातः पशुप्रायश्चित्तानि व्याख्यास्यामः । स यदि पशुरुपाकृतो वाश्येत यदस्य पारे रजस इत्येताꣳ हुत्वा नैमित्तिकीं[1] द्वितीयां जुहोति यस्माद्भीषावाशिष्ठास्ततो नो अभयं कृधि । प्रजाभ्यः सर्वाभ्यो मृड नमो रुद्राय मीढुषे स्वाहेति[2] । यस्माद्भीषावेपिष्ठाः पलायिष्ठाः समज्ञास्थाः शकृदकृथा मूत्रमकृथा इत्येतेषु[3] निमित्तेषु य इदमकस्तस्मै नमस्तस्मै स्वाहेति तृतीयाꣳ । स यदि निषीदेद्यस्माद्भीषा न्यषद इत्येताꣳ हुत्वा तं मैत्रावरुणदण्डेनोत्थापयेदन्येनौदुम्बरेण वोर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्द्ध इति ब्राह्मणमुदुस्र तिष्ठेत्युस्रमुदश्वेत्यश्वमुच्छागेति छागमुन्मेषेति मेषमुद्वश इति वशां । स उ चेत्प्राक् पर्यग्निकरणान्म्रियेत याश्वमेधे प्रायश्चित्तिस्तां कृत्वाथान्यं[4] तद्दैवत्यं[5] तद्वर्णं[6] तद्वयस[6] तद्रूपं तज्जातीयं पशुमालभेत । तस्योपाकरणादि सर्वमावर्तते निर्मन्थ्य सामिधेनीतच्छेषाघारसंप्रैषसंमार्गप्रवरप्रयाजवर्जमथ[7] यदि तज्जातीयं न विन्देताजावयो[8] गोअश्वा इत्यन्योन्यस्य प्रति-

---

१ ०त्तिकां H U.

२ इति only in U (sec. m.)

३ Thus U (pr. m.) इत्येषु B, इत्येवमेतेषु Tr, इत्येवमेतेषु H.

४ Thus (and cp. XVIII. 11 : 355. 15.) Tr B ; H U om. अथ ।

५ तद्दे० Tr and the Viv.

६ तद्वयसं तद्रूपं H U.

७ ०सामिधेनित्त० Tr, ०सामिधेनीस्त० H U.

८ Thus Tr, ०साजोवयो H U, ०सांजावि B.

निधयो भवन्तीति[1] । तेषां छागस्य[2] मेषस्योपाकरणीयावालभे[2]ऽन्यतममालभेत[2] । त्वाष्ट्रेण प्रचरणकल्पो व्याख्यातो[3] । ऽथास्य[3] शरीरमप्सु प्रवेशयति न वा उवेतन्म्रियस आशानां त्वा विश्वा आशा इति द्वाभ्याम् । ॥ ६ ॥

अथ यद्यङ्गहीनः पशू रूपतो वर्णतो वाग्नेयीमाग्नावैष्णवीमैन्द्रीं वायव्यां प्राजापत्यामिति च हुत्वा तमेवोपाकुर्यादथ यदि वपामाह्रियमाणां श्येनो ऽपहरेन्नश्येद्वा[4] पात्र्यां हिरण्यमन्तर्धाय[5] चतुर्गृहीतं[5] गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमान उद्यन्त्सुपर्णो[6] न विभाति सर्वं हिरण्यकुक्षिः सप्तशिराः पुरस्तात् । सर्वेषु लोकेषु विभुः प्रविष्टो गातुमस्मिन्यज्ञे यजमानाय विन्द[7] स्वाहेत्यथैतस्यै[7] वपायै स्थाने यत्किंचिन्मेदोरूपमवशिष्टं स्यात्तदुत्पाद्य[8] तेन प्रचरे-

---

१ भवंति B U H.

२ Partly conjectural reading; छागस्य मेषस्येदुपाकरणीयावुपाकरणीयानमन्यतम॰ U, छागचेदुपाकरणीया उपाकरणीयानामन्यतम॰ H, छागं च मेषं चोपाकरणीयावावालभेदन्यतम॰ Tr, छागमस्यमेषस्योपाकरणीयावलाभेन्यतम॰ B. The Viv. तेषां छागस्य मेषस्योपाकरणीयाविति ।

३ U ins. after थास्य : षट्तयमभिविदर्शयति, H ins. before थास्य : (व्याख्यात)रेथास्य षट्चयमभिविदर्शयति (cp. IX. 19 : 296. 3).

४ Thus B Tr U; H corrupt.

५ Om. Tr.

६ उद्यंस्तु॰ H, उद्यत्सु॰ U Tr, उद्गुत्सु॰ B.

७ Thus Tr, विंदत्स्वा॰ B H U.

८ Thus B, ॰दुत्पाद्य Tr U H.

द्यथ यद्येनां पुनर्विन्देत नैनामाद्रियेताथ यदि वपा हविरवदानं वा स्कन्देदा त्वा ददे यशसे वीर्याय चास्मास्वग्निया यूयं दधायेन्द्रियं पय इत्यादाय जुहोति यस्ते द्रप्सो यस्त उदर्षो दैव्यः केतुर्विश्वं भुवनमाविवेश । स नः पाह्यरिष्ट्यै स्वाहेत्यथ यद्यसंस्थिते पशौ शकुनिस्त्रुषात्त उपविशेत्त्रुषात्तं प्रक्षाल्य यूपं प्रोक्ष्य तथैवाज्येन जुहोत्यापवस्व वदस्व[1] वा[1] सोमपीतये गातुमस्मिन्यज्ञे यजमानाय विन्द[2] स्वाहेति[2] ।

॥ ७ ॥ पञ्चमः ॥

अथातश्चातुर्मास्यान्तरालव्रतानि व्याख्यास्यामस्तस्यैतद्व्रतं[3] नानृतं वदति । न मांसमश्नाति । न स्त्रियमुपैति । नास्य[4] पल्पूलनेन वासः पल्पूलयन्त्यमृन्मयपाय्यशूद्रोच्छिष्टो । स्वयं पादौ प्रक्षालयते[4] । न लवणमश्नाति । न कौशीधान्यमन्यत्र[5] तिलेभ्यो । नासन्द्यां शयीत । न स्त्रियमुपेयात्कामन्तौ जायामुपेयाद्यद्यजातपुत्रः स्यादुभयोः कालयोर्मधुपूर्वं व्रत-

---

१ ? Thus U, वदस्व H, वदसुवा B, वदस्यसुवा Tr.

२ Thus Tr again, विंदन्स्वा॰ B U H, विदस्स्वा॰ Prāy. candr.

३ Thus B ; व्याख्यास्यामो व्रतं चरेदिति तस्यैतद्व्रतं Tr ; after व्याख्यास्यामः H and U have a passage which seems to be interpolated (from XXI. 1. : 69. 2, 3) : तान्यस्य (these two words only in H) यावज्जीवप्रयोगीत्येवं चातुर्मास्यानाम(न)न्तरस्मिन्नहनि प्रथमे त्वेव संवत्सरे व्रतं चरेदिति ।

४...४ om. Tr.

५ Thus (and cp. II. 20 : 67. 1) B, कौशी॰ H U Prāy. candr. कौशि॰ Tr.

मुपैति । मध्वश्नातीति ब्राह्मणं[1] । घृतमित्येवेदमुक्तं[1] भवति[1] । दैव्यं मध्विति । विज्ञायते ऽञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येनेति । नान्यस्योच्छिष्टं भुञ्जीत । नान्यस्यार्त्विज्यं कुर्वीत । नाश्नीत । नाभ्यञ्जीत । न श्राद्धं[2] भुञ्जीत । न लोमानि वापयीत[3] । न दतो धावते[4] । न नखानि निकृन्तते[4] । कामं पर्वसु[5] केशश्मश्रुलोमनखानि[6] वापयीत । चतुर्षुचतुर्षु मासेषु निवर्तयेतेति ब्राह्मणम् । संवत्सरादूर्ध्वं दार्शपौर्णमासिकमेव[7] व्रतमुपदिशन्ति तस्य चेद्देवदेवस्य कालो[8] नातीयाद्यद्यतीयादग्नये[8] व्रतपतये पुरोडाशमष्टाकपालं निर्वपति[9] । सा प्रसिद्धेष्टिः संतिष्ठत आमावास्यकालादिति[10] व्याख्याताः । कालातिक्रमेष्वापदि[11] यजेत । ॥ ८ ॥ षष्ठः ॥

---

१ Thus Tr B; ०णं वेदमुक्तं भवति घृतमित्येतद्दै H. ०णं चेवेदमुक्तं भवति घृतमित्येतद्दै U; on this passage cp. Rudr. on Āp. VIII. 4. 11.

२ श्राद्धानि Tr.

३ Thus U H. वापयते B, छिंदीत Tr.

४ Thus MSS., we expect the optat.

५ पर्वांते Tr.

६ लोमनखानि om. Tr.

७ दार्शपूर्णमासिकं Tr.

८ Thus is the reading of U sec. m. U (pr. m.) B and Tr. om. the words यद्यतीयात् and B has कालोतीयाद् instead of कालोनाती० ।

९ मरायं दक्षिणां ददाति U ins. on the margin.

१० ०स्यस्य कालादिति Tr.

११ Thus also the Vivaraṇa, काला अतिक्र० H. (rightly ?).

अथातो ऽध्वरदीक्षाप्रायश्चित्तानि व्याख्यास्यामो दीक्षितश्चेदनृतं वदेदिदं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्न इति चतस्रो वारुणीर्जपेत्कृष्णाजिनाद्यवच्छिन्नो दण्डाद्वा देवाञ्जनमगन्यज्ञस्ततो मा यज्ञस्याशीरवतु । वर्धतां भूतिर्दध्ना[1] घृतेन मुञ्चतु यज्ञो यज्ञपतिमंहस इति जपेदमेध्यमनिष्टं वा दृष्ट्वा जपतीत्युक्तमेतदभिवृष्टो ऽभिवृष्यमाणो वा[2] जपतीत्युक्तमेतद्व्रतयित्वाप आचम्य जपति शिवाः पीता भवथ यूयमापो ऽस्माकं योनावुदरे सुशेवाः । इरावतीरनमीवा अनागसः स्वस्ति नो भवथ जीवस इति छर्दयित्वा निष्ठीव्य वा जपति यदत्रापि रसस्य मे निरष्ठविषमस्तृतः[3] । अग्निष्टत्सोमः पृथिवी पुनरात्मन्दधातु म इति रेत स्कन्नमनुमन्त्रयते यन्मे रेतः परीतोषात्तदर्पिथ[4] । अग्निहोत्रमिव[4] सोमेन तदहं पुनराददे इति मूत्रं करिष्यन्पुरीषं वा पृथिव्या[5] लोष्टमादत्त इयं ते यज्ञिया तनूरिति करोत्यपो मुञ्चामि न

---

१ दध्ना om. H.

२ om Tr.

३ निरष्ठविषम् B U H and the Prāy. candrikā, निरष्ठीविषम् Tr and a prayoga of the collection Burnell;—अस्तृतः or अस्तृत Tr B H and the same prayoga, अस्मृत B and the Prāy. candrikā.

४ परीतो° Tr B, परितो° U H Prāy. candrikā—°र्पिथ अग्नि° Tr, र्पिथा । अग्नि° prayoga Burnell, °र्पिथेग्नि° H, °र्दियाग्नि° U, °र्पिताग्नि° B, cp. Āp. X. 13. 10.

५ पृथिव्यां Tr U.

प्रजामंहोमुचः स्वाहाकृताः पृथिवीमाविशतेति । लोष्टं प्रतिनिदधाति पृथिव्या संभवेति । बीभत्सा नाम[१] स्थापः[१] स्वाहाकृताः पृथिवीमाविशतेत्यश्रु[२] । कफस्था[३] नाम स्थापः स्वाहाकृताः पृथिवीमाविशतेति स्नूहानं[४] । तपस्या नाम स्थापः स्वाहाकृताः पृथिवीमाविशतेति स्वेदं । दुःस्वप्नं दृष्ट्वा जपत्यभिपर्यावर्तते[५] दुःस्वप्न पापस्वप्नादभूत्यै[६] । ब्रह्माहमन्तरं करवै न हि स्वप्नमुपगय[७] इति । स्वप्ने ऽन्नं भुक्त्वा जपति यदन्नमद्यते नक्तं न तत्प्रातः क्षुधो ऽवति । सर्वं तदस्मान्मा हिंसीन्न हि तद्ददृशे दिवेति । लोहितमुत्पतितं दृष्ट्वा कण्डूय[८] वा जपति नमो रुद्रियाभ्यो ऽद्भ्यः स्वाहेति । न वर्षति धावेद्यदि धावेन्नमो रुद्राय[९] वास्तोष्पतय[९] इत्येतामृचं जपेन्नान्येन दीक्षितेन समेयाद्यदि समेयात्कया नश्चित्र आभुवदित्येतामृचं जपेद्देव-

---

१ Thus (and cp. Âp. X. 14. 1) Tr, नामाप स्थः H U Viv. and Prāy. candrikā ; B om. this passage.

२ Thus the prayoga Burnell ; ॰श्री Tr, ॰श्रुपाते U ; H totally corrupt and B defective.

३ Thus Tr, Viv. and prayoga Burnell ; कफे निर्गते कफस्था U.

४ Thus the prayoga Burnell, स्नोहं Tr, स्नेहं B and Viv, स्नस्था H.

५ Thus MSS., read with Av. VII. 100 जपति पर्यावर्ते ।

६ The original reading of Baudh. is difficult to restore. ॰म्नावपभुज्यते B, ॰म्नोभुङ्क्ते Tr, ॰म्नोपभुक्तै U Prāy. candr. ॰म्नोपसुक्तै H.

७ Thus B U Tr and Prāy. candr., ॰प्रथ H.

८ Thus MSS.

९ वायवे Tr.

यजनादन्यत्राभ्युदितो ऽभिनिर्मुक्तो वा सूर्यो मा देवो देवेभ्यः पात्विति जपेदितीन्वा[1] इमानि[2] सर्वास्वेवाध्वरदीक्षासु प्रायश्चित्तानि भवन्तीति[2] बौधायन । आवान्तरदीक्षायै विसर्गादिति शालीकिः । ॥ ९ ॥ सप्तमः ॥

अथातः सर्वयज्ञानां प्रायश्चित्तानि व्याख्यास्यामः । सर्वत्र स्कन्नच्छिन्नभिन्नभग्ननष्टदुष्टविपरीतहीनेषु[3] [4]हविःस्यन्दनास्रावितपतितस्फुटितेष्वद्विजश्वानबिडालकाकखरमृगपशुपक्षिसरीसृपादीनामन्यत्कीटानामृत्विजो[5] ऽग्नीनामन्तरागतानां[5] द्वादशगृहीतेन[5] स्रुचं पूरयित्वा दुर्गां[6] मनस्वतीं[6] महा-

---

१ Thus Tr (reading only ०न्वा), जपेदितीमानि B U H.

२ इ स्माह ins. H U.

३ Thus the Prayāscittapradipa, and H and the Viv., the last two omitting, however, ०छिन्न०; स्कन्नेछिन्नेभिन्ने भग्न० B U, स्कन्नेभिन्नेछिन्नेभग्न० Tr; ०हीन B.

४ हविस्यंदना० B, हविस्यंदता० H, हविस्पन्दना० Tr, हविर्विस्यंदन० U.

५ One of the most difficult passages! स्फुतिवेष्वविर्द्विज० U, स्फुतितेषुद्विज B U, ०स्पुदिताद्विज० Tr. The Viv. reads ष्वद्विज० (द्विजातिरिक्ताः शूद्रादयः) – श्वानवि (or वि)डाल० all, but the Viv. ०श्वानोविडाल० explaining अनः शकटम्; this points to ष्वद्विजश्वानोबिडाल० – Before खर H U have शुक० – ०सरीसृपादिर् H U and the Viv., सरीसृपादि० Tr, सरीसृपादीनाम् B. – अन्यत्कीटानाम् the Viv., अन्यत्कीटो B, अन्यत्कीटानाम् H U. – ग्नीनामंतरागतानांद्वा० U (sec. m.), ग्नीनंतरागतानांद्वा० H U (pr. m.) ग्नीनामंतरागकेद्वा० B Tr, ग्नीनामंतरामखेद्वा० Viv.—Read perhaps instead of अन्तागतानाम्: अन्तरागमने। In the Gṛhyasūtra (IV. 8) this passage also is to be found equally corrupt.

६ Thus Tr, दुर्गामनस्वती B U H.

व्याहृतीस्तिस्रो जुहुयाज्जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः स्वाहेति[1] । कार्यविपर्यासे च[2] मन्त्रब्राह्मणमात्रं[3] दर्भेध्माबर्हिःपरिधिविष्टतिपवित्रहविःकपालस्रुक्स्रुवारणिकृष्णाजिनप्रणीताग्न्युदासनेन[4] यत्किंचित्कार्यविपर्यासः स्याद्ये चान्ये चाज्यस्थाल्याः स्रुवेणोपघातं प्रायश्चित्तानि जुहोति प्रजापतये स्वाहा हिरण्यगर्भाय स्वाहेत्यथ पितामहां जुहोति भृगूणां पतये स्वाहाङ्गिरसां तपसे स्वाहेत्यथ महाव्याहृतीर्जुहोति भूरग्नये च पृथिव्यै च महते च स्वाहा भुवो वायवे चान्तरिक्षाय च महते च स्वाहा सुवरादित्याय च दिवे च महते च स्वाहा भूर्भुवः सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहेत्यथ व्याहृतीर्जुहोति भूः स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवः सुवः स्वाहेति ॥ १० ॥

॥ अष्टमः ॥

मन्त्रहीने ऽतिरिक्ते वा दुरधीते दुरागते ।
अनागते ऽवषट्कारे[5] अतीते[6] वापि[7] यद्धुते[8] ॥

---

१ दुर्गा ins. B.

२ च found in H Tr and the Vivaraṇa.

३ Thus B, ॰मात्र Tr, ॰मंत्रभेदे च U, ॰मात्रोभेदे च H.

४ This whole passage is incomprehensible to me; हविः om. B K. – ॰कपालनाशस्रु॰ H U – ॰वरणी॰ B K U – प्रणीतानामग्न्युद्वासनादि H U.

५ ॰ट्कृते H.

६ Thus Tr, ऽतीते H U, प्यतीते B.

७ चापि Tr, B.

८ ? ॰ते B Tr, ॰तं H U.

हविषः[१] स्यन्दनादग्नेर्होतुर्हौनस्वरेण[२] च।
अतिदाहे च हविषां यत्किंचित्पात्रभेदने॥
कपालनाशे भेदे च चतुष्पाद्यन्तरागते[३]।
प्रणाशे च पवित्रस्य[४] आज्यस्यैवावलोडने[४]॥
हविषां च विपर्यासे स्खलिच्चप्रयतेषु च।
यज्ञप्रसारणीकाले[५] द्वैधीभावे समुत्थिते॥
भिन्दाहुती च होतव्ये व्याहृत्यः प्रणवादिकाः।
वारुण्यस्त्वन्नुमत्यश्चान्वग्निश्च[६] मनस्वती॥
महाव्याहृतयः सप्त प्राजापत्या तथैव च।
प्रसंधानाय यज्ञस्य[७] वेते[७] मन्त्राः प्रकीर्तिताः॥
अप्रायश्चित्तिको यज्ञो ह्यसुरैः संप्रभुज्यते।
असुरैर्भुक्तयज्ञस्तु[८] देवान्दोषेण[९] सं्श्रयेत्॥

---

१ Thus Tr and the Viv. हविषाऽ U, हविषां B, हवि H.

२ होत्र॰ Viv.

३ Thus Tr B and the Viv., ॰ष्पादंतरागतौ U, ॰ष्पादांतरागतो H.

४ Thus U, ॰त्रस्याज्य॰ Tr H, ॰त्रस्यचाज्य B.

५ ? Thus U H, प्रसारणा॰ Tr, प्रासारणा॰ B; प्रसारणिकाले यज्ञप्रसारिणिं (sic) यज्ञविस्तार: the Vivarana.

६ Thus Tr H T U, ॰मत्यश्चाथान्व॰ B.

७ Thus Tr, यज्ञस्यैते U (pr. m.) and H, स्येचंते U (sec. m.). स्यतत्ते B.

८ Thus H U B, ॰यज्ञस्य Tr.

९ Thus Tr B, यज्ञेन U, इयज्ञन H.

ऋत्विजो यजमानं[1] च[2] आयुषो[2] ब्रह्मवर्चसात्[3] ।

प्रच्यावयेद्दुरिष्टं तत्तस्माद्दोषान्प्रणाशयेदिति[4] ॥

॥ ११ ॥ नवमः ॥

अथातो ऽनुग्रहान्व्याख्यास्यामः[5] । सायंहोमं चोपोदयं[6] जुहुयात्प्रातर्होमं चोपास्तमयं[6] कालेन कालमनतिक्रम्य । कालो[7] दर्शपूर्णमासयोरग्निहोत्रस्य च न[8] स्कन्दते[8] न व्यथत इति[9] विज्ञायत । आ प्रातराहुतिकालात्सायमाहुतिकालो नातीयादा सायमाहुतिकालात्प्रातराहुतिकालो । ऽथ यदि सायं सायं दोषा वस्तोर्नमः[10] स्वाहेत्याहुतिं हुत्वाग्निहोत्रं जुहुयाद्यदि प्रातः प्रातर्दोषा वस्तोर्नमः[10] स्वाहेत्याहुतिं हुत्वाग्निहोत्रं जुहुयादथ यदि पूर्वस्यामाहुत्यां हुताया-

---

१ Thus B K U (pr. m.), ०मानश्च Tr, मानं वा U (sec. m.).

२ ह्यायुषो Tr.

३ ०वर्चसः Tr.

४ Thus H U; ततस्मा० B, तुतस्मा० Tr.—The last words repeated in B Tr.

५ Thus Tr B and the Viv., नुकल्पान्व्या० H U.

६ Thus U H, वो० B Tr and the Viv.

७ Thus H; काले U, कालेन B कालेन च Tr.

८ Thus H U, नस्कंदते B, स्कन्ने Tr; ०होत्रस्य च स्कंदनं व्यथते Viv., cp. the citation of Bhāradvāja in Rudradatta's comm. on Āp IX. 7. 3.

९ च ins, H U.

१० वस्तर्दोषा U and Prāy. candrikā.

माहवनीयो ऽनुगच्छेदग्निर्दारौ दारावग्निरिति वदञ्छकले[1] हिरण्यं निधायोत्तरामाहुतिं जुहुयात्कालातिक्रमेष्वापद्धोम[2]। आमावास्यस्य[2] कालात्पौर्णमासस्य कालो नातीयादा पौर्णमासादामावास्यस्यां व्रीह्याग्रयणस्य कालाच्छ्यामाकाग्रयणस्य कालो नातीयादा यवाग्रयणस्य[3] कालाद्व्रीह्याग्रयणस्या[3] श्यामाकाग्रयणाद्यवाग्रयणस्यां[4] वरुणप्रघासानां कालाद्वैश्वदेवस्य कालो नातीयादा साकमेधेभ्यो[5] वरुणप्रघासानामा शुनासीर्यात्साकमेधानामा वैश्वदेवाच्छुनासीर्यस्यां दक्षिणायनपशोः कालादुत्तरायणपशोः कालो नातीयादोत्तरायणपशोर्दक्षिणायनपशोर्वोत्तरवसन्तज्योतिष्टोमस्य[6] कालात्पूर्ववसन्तज्योतिष्टोमस्य[7] कालो नातीयात्समस्तस्य संवत्सरस्या[8] निज्यासुत्या[8]। ऋषयो ह स्म तत्प्रयोयुगा[9] आसंस्ते ऽर्धमासायार्धमासायाग्निहोत्रमजुहवुः[10]। प्रतिपदि सायं चतुर्दशगृहीतानि गृह्णाति।

---

१ Thus U, वदञ्छ॰ Tr, वदेंश॰ B H.

२ Thus Tr, ॰द्धोममामा॰ U, द्धोमामा॰ B U.

३ Thus Tr, ॰ग्रयणाद्व्रीह्याग्र॰ B H, ॰ग्रयणकालाद्व्रीह्याग्र॰ U.

४ श्यामाकाद्यवा॰ Tr.

५ Thus U, ॰धानां H B, ॰धानां कालाद्य॰ Tr.

६ Thus Tr, ॰पशोवत्तरवसंत॰ B U.

७ Thus Tr, ॰त्पूर्ववसंतस्यज्यो॰ B, ॰त्पूर्ववसंतज्यो॰ U.

८ ? Thus Tr U, ॰त्सरस्य यानी॰ B; H om. this passage.

९ तत्प्रयोयुगा Tr, प्रयोगा H and the Viv. (pr. m.) तत्प्रयोगा B, प्रयोग U, प्रयोयुगा Viv. (sec. m.) which explains अतिशयेन प्रयोगविदः।

१० Thus Tr B, र्धमासेर्धमासेग्नि॰ H U – ॰त्रमजुहवुः Tr, ॰चंजुहुयुः U H, ॰चंजुहवुः B; on this passage cp. Hir. pi. sū. II. 9 : 56, 11.

सकृदुन्नयते हविरेका[1] समित्सकृद्धोमः[1] सकृदुपस्थानꣳ । सकृत्पाणिनिमार्जनमेवं प्रातरथ षण्मासानकृते ऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वाग्रयणैश्चातुर्मास्यैः पशुबन्धेन चाग्नये पथिकृते ऽग्नये तन्तुमते ऽग्नये वैश्वानरायाग्नये व्रतपतय इति[2] पुरोडाशान्निरुप्याग्निहोत्रꣳ हुत्वा[3] दर्शपूर्णमासाभ्यामिष्ट्वाग्रयणैश्चातुर्मास्यैः[4] पशुबन्धेन चाथ संवत्सरमकृते ऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वाग्रयणैश्चातुर्मास्यैः पशुबन्धेन चाग्नये पवमानायाग्नये पावकायाग्नये शुचये ऽग्नये पथिकृते ऽग्नये तन्तुमते ऽग्नये वैश्वानरायाग्नये व्रतपतय इति पुरोडाशान्निरुप्याग्निहोत्रꣳ हुत्वा[3] दर्शपूर्णमासाभ्यामिष्ट्वाग्रयणैश्चातुर्मास्यैः पशुबन्धेन च । ॥ १२ ॥

अथ हविषामर्थे व्रीहियवौ । तयोरलाभे[5] प्रियङ्गवः कोद्रवोदारवरकवर्जꣳ[6] श्यामाकनीवारवेणुयवास्तरसंपाककन्दमूलफलान्यापः[7] सक्तुमिति[8] । घृतमाज्यार्थे । गव्यमिति प्रत्यय-

---

१ Thus Tr B, एकाꣳ समिधꣳस० U H.

२ B U H put व्रतपतये before वैश्वानराय ।

३ Tr ins. अग्निहोत्रं जुहुयाद् ।

४ ०र्मास्यैश्च Tr.

५ Thus B Tr, the Viv. and the Prāy. candr.; ०रभावे H U.

६ ? Thus Tr H U, ०वोद्दारक० B; ०वोदारकमाषवर्जं the Prāy. dīpikā.

७ Uncertain reading; ०संवादकंदमू० Tr, ०संवाकंदमू० B U, ०संयाकेमू० H, ०सकंदमू० Prāy. pradīpa.

८ Thus H U, सक्तमिति B ०सक्तूनिति Tr.

तस्यालाभे माहिषमाजं वा घृतमाज्यार्थे प्रयुञ्जीत[1] । भोजनेष्वविरुद्धं मन्यन्त[2] एके । तयोरलाभे तैलं प्रतिनिधिस्तस्यालाभे जर्तिलतैलमतसीकुसुम्भसर्षपवार्त्तहेरा[3] इति[3] शिष्टप्रामाण्यादत ऊर्ध्वमलाभे यवपिष्टानि व्रीहिपिष्टानि श्यामाकपिष्टानि वाद्भिः संसृज्याज्यार्थे प्रयुञ्जीत । कुशा स्तरणार्थे[4] । तेषामलाभे शरमयकुशपाश्ववालमुञ्जसुगन्धितेजनार्जुनादारदूर्वाश्यामाकाः[5] क्षीरवृक्षा इक्षव इत्येतेभ्यः । प्रस्तरबर्हिर्विधृतिपवित्रयूपरशनाशलाकपरिस्तरणान्तर्धानासनग्रथनस्तोत्रोपाकरणार्थाः कार्याः सर्वतृणेभ्यो वा शुष्कशुण्ठिनलवल्वजकृष्णतूलतृणवर्जं[6] । पालाशः खादिरो वेध्मस्तयोरलाभे याज्ञिकानां वा[7] वृक्षाणामन्यतमस्तेषामलाभेऽरलुकपित्थकोविदारशल्मलिश्लेष्मातकनीपनिम्बतिल्वकबाधकविभीतकराजवृ-

---

१ Thus B U, प्रयुंजवे Tr., H. omits the passage.

९ B U ins. इति ।

२ Emended; ०वार्त्तहेराभिशष्ट० Tr, ०वार्त्तावाहेदाच्छष्ट० B, वार्त्तवाहेद्दा इति शिष्ट० H U.

४ ०आस्तरणा० H U.

५ शरमय० Tr, शरमय्य० U, शरमय्यः H U – ०र्जुनादार० Tr, ०र्जुनादारा० B U, र्जुनशरा H.

६ Thus Tr (reading only शूर्ण instead of शुण्ठि); शुक० H U, ०शीर्णविल्वकृष्ण० B; ०शुडिनवल्वकृष्ण० H, ०शुंडिनवल्वन० U. Sāyaṇa (citing in his bhāṣya on the darśapūrṇamāsa) gives शुंब instead of शुण्ठि० ।

७ Om. by Sāyaṇa in his citation.

चकरञ्जपलाण्डुवर्जं[1] । सर्वंवनस्पतीनामिध्मो भवतीत्येके[2] । दक्षिणानां काले गौर्हिरण्यं वासस्तेषामलाभे फलानां मूलानां भक्ष्याणां[3] दद्यान्न त्वेव न यजेत ।

नित्यं[4] नित्येषु युक्तः स्यात्तथैवाजस्रिकेषु च ।
यस्य नित्यानि लुप्तानि[5] तथैवाजस्रिकाणि च ॥
विपथस्थो[6] न स[7] स्वर्गं गच्छते पतितो हि सः ।
तस्मान्मूलैः फलैर्वापि[8] मधुना तरसेन[9] वा[9] ।
नित्यं नित्यानि कुर्वीत न च नित्यानि लोपयेत् ॥

न च नित्यानि लोपयेदिति ॥ १३ ॥ दशमः ॥

॥ इत्यष्टाविंशः प्रश्नः ॥

---

१ Thus Tr and B (B reading, however, ०श्लेष्मलौ० and ०पर्णार्जुन instead of ०पलाण्डु० ; both have ०वार्श्रीणस० insead of ०वाधक०). Säy. in a citation agrees with the above given reading, putting only करञ्ज between कपित्थ and कोविदार ; U reads : नौपनिंबतिलकवाधक विभीतकराजवृक्षशाल्मलिरक्तं (sec. m. ०रक्त / करंजपिथ्यकोविदारश्लेष्मातक- पलांडु (sec. m. पर्णार्जुन ) वर्जं ; H : नीपनिंबविल्वाकवार्श्रीणकवैभीतकराजवृक्ष- शाल्मकटंकपित्थंकरंजककोविंदारश्लेष्मातकपलांडुवर्जं ।

२ After एके the MSS. exc. Tr and the Viv. ins. यथदि ।

३ Thus H U, भक्ष्याणां B, भक्षणानां Tr.

४ Thus B U and Viv. ; नित्या Tr, निष्णं H.

५ युक्तानि Tr.

६ Thus Tr B and Viv. ; विपदंस्था U H.

७ सः U च Tr.

८ Thus U H and Viv. ; मूलफलैः Tr B.

९ Thus B and Viv. तरसापिवा Tr U H.

अथाभिदग्धानि[1] सदोहविर्धानानि समस्तदेवयजनमावृत्तैव[2] क्रियेरन्ननावृता[3] वा[4] वसतीवरीः प्रथमं गृह्णीयादिति[5] वाधूलकस्य मतमथेतरानानुपूर्वमित्यथ[6] यदि [7]भिन्नेषु कपालेषु सर्वाणि[8] निपतेयुस्तत्र यावत्स्मूतं[9] पुरीषमादाय वसतीवरीभिः संयुत्य[10] विस्राव्य प्रचरेत्तत्र प्रायश्चित्तं ग्रहाणामेकेन जुहुयादाग्नीध्रीयविनाश आग्नेय्यर्चा[11] जुहुयादग्निर्मूर्धा दिव इति । वैष्णव्या हविर्धाने[12] विष्णो त्वं नो अन्तम इत्याग्नेय्या[13] स्रुच्यमग्निः सहस्रिण इति । वायव्यया वायव्येषु वायो शतं हरीणामित्यैन्द्रिया[14] सदसीन्द्रं विश्वा अवीवृधन्निति । वैश्व-

---

१ अथाति० H U and the Vivaraṇa.

२ Thus Tr H U and Prāy. candrikā, समस्तंदेव० B.

३ Thus B and the Viv., क्रियेरन्नावृता Tr H U, cp. Rudradatta on Āp. XIV. 25. 2.

४ Om. T B, given by U H and the Vivaraṇa.

५ Thus Tr B, गृह्णीरन्निति H U.

६ Thus B, ०तरानानुपूर्वमित्यथ Tr, ०तरानानुपूर्व्यं भवत्यथ U, ०तराण्यनुपूर्वं भवंत्यथ H.

७ Om. H.

८ कपालानि यत्र ins. B, यत्र ins. Tr.

९ यावत्सूतं U and Viv., यावत्पूतं B H, यावन्मूतं Tr.

१० Thus U, ०युत्य H B, ०स्रुत्य Tr.

११ ०ग्नेय्या B U H.

१२ ०र्धानं B Tr.

१३ The passage अग्नेय्या...हरीणामिति found in H U only.

१४ ०त्यैंद्रीया H B ०त्यैंद्रा Tr, त्यैंद्र्या U.

देव्या ग्राव्णꣳशे विश्वे देवाः शृणुतेमꣳ हवं म इति । सर्वेषु मिन्द्राहुती जुहुयाद्व्याहृतीश्चापि वेष्टिं निर्वपेदगारदहने[1] क्षामवान्[2] सर्वविनाशे तन्तुमती[3] । दग्धेषु[4] सोमेषु[4] वा नष्टेषु वा सोमानामुपघातापहारेषु[5] वा यथालाभमꣳशूनाहृत्वा वसतीवरीभिः[6] संयुत्याभिषुत्य[6] प्रचरेत्सर्वविनाश ओषधीभिरभिषुत्य प्रचरेत्तत्कृत्वा[7] पुनर्यजेतेति श्रुतिरेवमेव कुर्यात्सा[8] प्रायश्चित्तिरिति । ॥ १ ॥ प्रथमः ॥

अथ होत्रकाणामन्योऽन्यस्य मैत्रावरुणस्योदयेदपि[9] वान्योऽन्यस्य याज्यापुरोऽनुवाक्याभ्यां[10] यजेत[10] तस्य प्रायश्चित्तं । ब्राह्मण एकहोतेत्यस्यानुवाकस्य प्रथमेन होतुर्जुहुयाद्द्वितीयेन मैत्रावरुणस्य तृतीयेन ब्राह्मणाच्छꣳसिनश्चतुर्थेन पोतुः पञ्चमेन नेष्टुः षष्ठेनाच्छावाकस्य सप्तमेनाग्नीध्रस्याध्वर्युः प्रधानदेवतामनुच्चारयित्वा योन्यामुच्चारयेद्यद्वो देवा अतिपादयानीत्येतया स्रुवाहुतिं जुहुयाद्दशात्मकेनाष्टमेन नवमेन पूर्वोक्तं

१ Thus Tr U Viv., ॰दाहे B H

२ Thus all the MSS. and the Vivaraṇa.

३ Thus Tr and the Viv., मतीं B H U.

४ दहनेषु Tr.

५ Thus Tr B; वोपघातापहारेषु U, वेष्वघातापहारेषु H.

६ ॰वरीभिःसंयुज्य U, ॰वरीः संपूज्य H, Tr B om. these three words.

७ तत् om. H U.

८ सा om. U Tr.

९ Thus Tr ॰स्योदयत्यपिवा B U H and the Viv.; H om. अपि वा ।

१० Thus Tr B and the Viv., ॰वाक्याभ्याभयचि H, ॰वाक्या भवति U.

प्रायश्चित्तं कुर्यादुक्थ्यपर्यायेषु[१] यथाक्रमेण जुहुयाद्दशमेन षोडशिरात्रिपर्यायेभ्यो[२] राथंतराय संधये । तथा शिपिविष्टस्तोत्रे वाजपेये । तथातिरिक्तस्तोत्रेष्विति[३] यथाचोदितमन्यो यजेत्तत्प्रथमो[४] यजेज्जपेद्वा स्वयं चोदितः स्वयमेव यजेद्द्वितीय एव[५] प्रायश्चित्तं भवेत्सोमे ऽन्यत्रैवं कुर्याद्धोतान्येन यजेदन्येनैव[६] मैत्रावरुणो वा पूर्वोक्तं प्रायश्चित्तं कुर्यात्तथा याज्यापुरोऽनुवाक्यास्वन्यथान्यत्प्रायश्चित्तं[७] भवेदश्वमेधस्यान्नहोमेष्वारण्यानां पशूनाꣳ स्रुवाहुत्या ऊनातिरिक्तपुनरुक्तव्याघातेषु[८] मिन्दाहुती जुहुयात्तथेष्टकोपधाने । ऽथ[९] देवसुवाꣳ हविषामन्यद्बीजमन्यद्दैवतस्य[१०] कुर्यात्तदुत्सृज्य पुनरुत्पाद्य यजेदतिशिष्टꣳ सह यजेज्जपेद्वा । पूर्वोक्तं प्रायश्चित्तं कुर्यादिति । ॥ २ ॥ द्वितीयः ॥

---

१ ॰क्थ॰ H U.

२ Thus B H, षोडशिनिरात्रि॰ Tr U.

३ इति in Tr only.

४ Thus Tr U, यजेतत्प्र॰ B. यजेनप्र॰ H.

५ एवं B only.

६ Thus B U, यजेतान्यं दैवतं Tr (H om.).

७ ? Thus Tr, ॰क्यास्वन्यथान्यतप्रा॰ B, ॰क्यास्वथान्यथान्यत्र प्रा॰ H, ॰क्यास्वथान्यत्र प्रा॰ U.

८ ? Thus Tr, ऊनातिरिक्तेषु पुनरुक्तव्याघातेषु U, ऊनातिरिक्तेषु H, न्यूनातिरिक्तेषु B.

९ थ om. H U.

१० ? ॰षामन्यंबीजमन्यंदैव॰ B, ॰षामन्यं बीजमन्यदैव॰ Tr H, ॰षामन्यदन्यदै॰ U.

अथ वितते यज्ञकर्मणि प्रायश्चित्तानि व्याख्यास्यामस्त-चौषधं पयः पशुः सोम आज्यमित्येतेषु न्यूनेषु वा नष्टेषु वापहृतेषु[1] वा[1] पुनरुत्पाद्य गृह्णीयाद्यच्च स्मरेत्प्राक् स्विष्टकृत उत्पादनं भवति । स्विष्टकृत ऊर्ध्वं स्मरेत्तत्सर्वस्याप्येतेनैव[2] पुनर्यजेत्सह यजेद्वाथ यदि निरुप्य स्मरेदन्यं[3] दैवतममुष्मै त्वेति प्रतिविभज्याभिमृश्य[4] सर्वं जुहुयादमुष्मै स्वाहेति । यच्च[5] स्मरेत्तच्चैवमेव कुर्यादासादनादथ[6] यद्यासाद्य स्मरेदन्वायात्य स्थानेषु जुहुयादन्यदा[7] पूर्वोक्तं प्रायश्चित्तं कुर्यादन्यासु देवता-स्विष्टासु[8] नष्टेषु दुष्टेषु वा[8] दोषवति[9] तन्त्रे प्रधानमावर्तये-त्सर्वैष्टिरशेषतस्तस्य[10] कः कर्मण उपक्रमो भवतीति । भागिनो दैवतस्य शूर्पादानप्रभृति कर्म कृत्वा अपयित्वासाद्य स्वस्थाने[11]

---

१ These two words in Tr only.

२ तत् om. B H.

३ °न्यद्दैवतं H.

४ तदानीमेव ins. U.

५ वा ins. B U H.

६ जुहुयात् instead of कुर्यात् Tr.

७ अन्यत् in U only. Is it to be cancelled ?

८ Thus B U, °ष्टासुनेषुदुष्टेषु वा H, °ष्टासुंनष्टेषु वा Tr.

९ Thus B U, शेषवति Tr, – षवति B.

१० H आवर्तवे instead of आवर्तयेत्; °सर्वैष्टिरशेषेतस्य Tr, °सर्वैश्विष्टिर-शेषतस्तस्य B U, °सर्वैमिरषेतस्तस्य H; सर्यैष्टिरशेतः gives the Vivarana.

११ स्व om Tr.

प्रचरेत्तत्र प्रायश्चित्तं मिन्दाहुती जुहुयाद्व्याहृतीश्चैवं[१] पश्चावुपाकरणप्रभृत्या[२] स्विष्टकृतः[२] पूर्वोक्तं[३] प्रायश्चित्तं[३] कुर्यादथ[३] यदि प्रातरनुवाकमनुपाकृतमादित्यो ऽभ्युदियात्कथं तत्र प्रायश्चित्तं भवतीत्युषाः केतुना जुषतां यज्ञं देवेभिरन्वितम् । देवेभ्यो मधुमत्तमꣳ स्वाहेति मिन्दाहुती व्याहृतीश्च हुत्वोपाकुर्यादथ यदि प्रातरनुवाके प्रस्थमान आदित्यो ऽभ्युदियादुद्वयं तमसस्परि उद् त्यं चित्रमित्येताभिः स्रुवाहुतीर्जुहुयादथ यदि सोमो नाविः स्यान्नवोनवो भवति जायमानो यमादित्या अꣳशुमाप्याययन्तीत्येताभ्याꣳ[४] स्रुवाहुती[४] जुहुयाद्यदि[४] सूर्याचन्द्रमसोर्ग्रहणं[५] विद्यत एतदेव ॥ ३ ॥

अथ यदि ग्रहान्ग्रहीष्यमाणो भागिनीं देवतामगृहीत्वा योन्यां गृह्णीयात्तथाकुर्म[६] स्वाहेति तदानीमेव सर्वं जुहुयाद्भागिनीं पुनर्गृहीत्वा मिन्दाहुती जुहुयादपि वा ग्रहाणामेकेन जुहुयात्सर्वान्वाचस्पते विधे नामन्नित्येवमादीन्ग्रहान्होत्रकाणां[७] ग्रहेषु वा चमसेषु वा हविर्दोषोक्तदोषो[८] भवे-

---

१ ०व H U.

२ Thus Tr, ०प्रभृतिमथास्विष्ट० H U B.

३ Thus Tr, पूर्वोक्तं प्रायश्चित्तमथ B, ०युक्तमथ H U.

४ एताभ्यां स्रुवाहुतीर (sic) and यदि only in Tr.

५ सूर्यचंद्र० B U H.

६ ०यादथा० H U.

७ Thus Tr, होत्वणां or होतृणां B U H.

८ Before भवेत् H U ins. वा ।

न्तथापो[1] ऽभ्यवहृत्य[1] तत्प्रायश्चित्तं कृत्वा तथा पुनर्गृहीत्वा जुहुयाच्चमसेषु[2] पुनरुन्नीय जुहुयाद्धुत्वा वा तस्मिन्हिरण्यमन्तर्धायाप आनीय भक्षयेत्सैव ततः प्रायश्चित्तिरथ यदि सवनकालो ऽतिक्रामेदग्निर्मूर्धा दिव इत्येतस्यानुवाकस्य प्रथमेन गायत्रेण[3] जुहुयात्प्रातःसवने[4] । तथा त्रैष्टुभेन[5] माध्यंदिने सवने । तथा जागतेन[5] तृतीयसवने । ऽत ऊर्ध्वमतिरात्र[6] उत्तरमहर्नाधिगच्छेद्यदि गच्छेद्यज्ञभेष आगच्छेत्तच्च प्रायश्चित्तं सर्वान्होतॄन्जुहुयाद्विज्ञायते ब्रह्म वै चतुर्होतार इति । तस्माच्चतुर्होतॄनेव जुहुयादत ऊर्ध्वमहःसंख्यां[7] नाधिगच्छेदेकाहेष्वथ[8] सवनीयानां प्रायश्चित्तिरथ यदि पूतिगन्धः[9] स्यात्तदुत्सृज्य पुनरुत्पाद्य प्रचरेदपि वोष्णोदकेन प्रक्षाल्याज्ये[10] ऽवधाय[10] पुनः श्रपयित्वा प्रचरेत्तच्चापि यदि[11] पूतिगन्धो भवेत्तदुत्सृज्य पुनरेवोत्पाद्य प्रचरेत्तथा सवनीयानां पुरो-

---

१ ०त्तथापहृत्य Tr.

२ Thus Tr, चमसेषुवा B H U.

३ गायत्र्या Tr.

४ प्रातः सवने जुहुयात् B H U.

५ त्रिष्टुभा, जगत्या Tr.

६ ०तिरात्रादुत्तर० Tr.

७ Thus H and Viv.; संख्या B U, संख्यं Tr.

८ यदि ins. Tr.

९ Thus B and Viv., पूतीगंध U, पूतीगंधाः H, पूतीगंधं Tr.

१० Thus U, ०ज्येनावधाय H, ०ज्येन—B, ०ज्येन, omitting अवधाय, Tr.

११ in U only.



A 304

होमानां तथा सांनाय्यानामथ यदि स्तोत्रꣳ शस्त्रं प्रतिगरं वोत्सृजेन्मिन्दाहुती हुत्वोपाकुर्यादथ यद्येकाꣳ स्तोत्रीयाꣳ सूक्तं वर्चं वार्धर्चं वा प्रतिगरं वोत्सृजेन्मिन्दाहुती हुत्वा जपेत्स्तोत्रोपाकरणप्रभृत्या[1] होमाद्वाचं यच्छेद्यदि वाचं विसृजेद्वैष्णवीमृचं जपेदथ यद्याश्राव्य वाचं विसृजेद्वैष्णवीमृचं जपेद्विष्णो त्वं नो अन्तम इति पुनरेवाश्राव्य[2] यजेदूनातिरिक्तपुनरुक्तव्याघातेष्वन्येषु वान्यत्र प्रायश्चित्तं[3] मिन्दाहुती जुहुयात्सर्वस्थानेषु मिन्दाहुती यज्ञशरीरमिति श्रुतिस्तस्मात्सर्वेषामाचार्याणां प्रशस्तमिति ॥ ४ ॥ तृतीयः ॥

अथ यदि हुताहुतौ सोमौ सꣳसृज्येयातामाहवनीयादुदीचो[4] ऽङ्गारान्निरूह्य[5] तेषु जुहुयाद्यज्ञस्य हि स्थ ऋत्वियाविन्द्राग्नी चेतनस्य च । हुताहुतस्य तृप्यतमहुतस्य हुतस्य च ॥ हुतस्य चाहुतस्य चाहुतस्य हुतस्य च । इन्द्राग्नी अस्य सोमस्य वीतं पिबतं जुषेथाꣳ स्वाहेति तस्य नित्यभक्षमनुवर्तयति[6] मा[6] यजमानं तमो विदन्मर्त्विजो मो इमाः प्रजाः । मा यः सोममिमं पिबात्सꣳसृष्टमुभयं हुतमित्यथ यद्यन्य-

---

१ Thus Tr B, ॰स्तोत्रादानप्रभृत्या U H.

२ एव om. Tr.

३ ॰त्तेषु Tr.

४ ॰याद्देवोदीचो Tr B.

५ Thus Tr U, ॰न्निर्वर्त्य B H.

६ ॰वर्तयेन्मा U.

हुताश्वमसा अन्यहुतैः सꣳसृज्येरन्सोमे वा सोममभिगृह्णीयादित्येतदेवाथ यद्यन्यवृता ऋत्विजो ऽन्यवृतैः सꣳसृज्येरन्दीक्षिता[1] दीक्षितैर्वान्यच्च व्रात्यस्तोमात्सत्त्राच्चेत्येतदेवाथ यदि सुतः सोमो ऽभिवृष्येत[2] तदित्पदं[2] प्रत्यस्मै पिपीषत इत्येताभ्याꣳ स्रुवाहुती हुत्वा[3] तस्य[3] नित्यभक्षमनुवर्तयतीन्दुरिन्दुमवागादिन्दोरिन्द्रो ऽपात्। तस्य त इन्द्रविन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीत्यथ यदि सुते सोमे यजमानो म्रियेत भयं वागच्छेत्सर्वाणि हवीꣳषि पात्राꣳ समवधाय द्रोणकलशे सोमं जुहामाज्यं पशुमन्यस्यामित्येकामाहुतिं जुहुयाद्ये[4] देवा येषामिदं भागधेयं बभूव येषां प्रयाजा उतानूयाजाः। इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो ऽग्निहोतृभ्यो देवेभ्यः स्वाहेति हुत्वात ऊर्ध्वं पैतृमेधिकं कर्म प्रतिपद्येताभये[5] वा[6] पुनर्यजेत जीर्णस्याशक्तस्य[7] चाग्निहोत्रचेष्टायामात्मन्यग्निसमारोपणं[7] विद्यत इत्यात्मनि समारूढेष्वग्निषु[8] न खादेन्न पिबे-

---

१ °दीक्षितौ B H U.

२ °वृष्येततदद्दित्पदं H, °वृष्येत्तद्दित्पदं B U, °वृष्येत्तदित्पदं Tr.

३ जुहुयात्तस्य Tr.

४ जुहोति ये Tr.

५ °पद्यतेभये Tr.

६ H. om. वा; it is added sec. om. in U and found in B Tr.

७ Thus Tr, °त्तस्याग्निहो° H U B.—°त्मन्यग्निसमा° Tr, °त्मसमा° B U H.

८ अग्निषु om Tr.

नोपरि शय्याᳫं[१] शयीत नाप्सु निमज्जेन्न मैथुनं व्रजेत्कामं खादेत्कामं पिबेत्कामं त्वेवोपरि शय्याᳫं[१] शयीत नैवाप्सु[२] निमज्जेन्न मैथुनं व्रजेदिति[३] । प्रक्षालितपादपाणिरप आचम्य प्राङ्मुख उपविश्याग्निहोत्रयजुषा[४] यावन्मात्रं व्रतयित्वा तूष्णीं भूयो व्रतयेत्प्रजापतिं मनसा ध्यायन्नित्येवमेवोपासीता शरीरविमोक्षणात्[५] । ॥ ५ ॥ चतुर्थः ॥

अथ वै भवति[६] यथा वै पुत्रो जातो म्रियत एवं वा एष म्रियते यस्याग्निरुख्य उद्वायति । यन्निर्मन्थ्यं कुर्याद्विच्छिन्द्याद्भ्रातृव्यमस्मै जनयेत्स एव पुनः परीध्यः । स्वादेवैनं योनेर्जनयति । नास्मै भ्रातृव्यं जनयतीति ब्राह्मणमुख्यस्येदुद्वायेदप्सु भस्म प्रवेश्योखाᳫं शकृत्पिण्डेन परिलिप्य पुनरेवैनां[७] प्रवृज्य परिदायाहुतिषाहं कृत्वाथैनाᳫं[८] स्रुवाहुतिभिरभिजुहोति[९] सुवर्न घर्मः स्वाहा सुवर्नार्कः स्वाहा सुवर्न शुक्रः स्वाहा सुवर्न ज्योतिः स्वाहा सुवर्न सूर्यः स्वाहेत्यर्कवतीभ्यामर्कषमिधावभ्या-

---

१ शय्यायां H B U.

२ नत्वेवाप्सु B U (H def.).

३ इति om. Tr.

४ Thus the Viv., ॰होत्रं यजुषा the MSS.

५ ॰वि॰ om B H U.

६ See T S. V. 7. 5. 1.

७ पुनरेवैनं B, पुनरेवान्यां Tr.

८ ॰थैनं Tr, ॰थैषां B.

९ ॰हुतीभि॰ Tr H U.

दधात्यर्कः पवित्रं पवित्रमर्को रजसो विमान इति द्वाभ्यां । मुञ्जकुलायप्रभृतिना कर्मणा प्रतिपद्येता कृष्णाजिनवाचनादथ वै भवति तमो वा एतं गृह्णाति यस्याग्निरुख्य उद्वायति । मृत्युस्तमः । कृष्णं वासः कृष्णा धेनुर्दक्षिणेति । कृष्णं वासः कृष्णां धेनुꣳ शतमानꣳ[1] हिरण्यमिति ददाति[2] । तमसैव तमो मृत्युमपहते । ऽथो तेजो वै हिरण्यं । तेज एवात्मन्धत्त इति ब्राह्मणमथ यद्यासन्द्यौ शिक्यमगारं वा दह्येत वैश्वानरीभिः समिधो ऽभ्यादध्याद्वैश्वानरो न ऊत्यैत्येतेनाष्टार्चेनाथ यदि वसतीवरीकलशः[3] पान्नेजन[4] एकधनाः[4] कुम्भेष्टकाः कथनेष्टका[5] वा परासिच्येरन्यूपो वा भिद्येत रशना वा छिद्येत चषालं वा भिद्येतौदुम्बरी वा भिद्येत ग्रावा वा भिद्येत द्रोणकलशो वा दीर्येतान्यद्वा यज्ञे दारुमयं मृन्मयं[6] वा पात्रं भिद्येत तत्तेनैव यजुषा स्व[7] आयतने[7] निधायोपधायाभिमन्त्रयते[8] भूरायुर्मे धारयत प्राणं मे धारयत प्रजां मे

---

१ Tr ins. च ।

२ Found in Tr only and in a citation in the Mahāgnisarvasva.

३ Thus Tr, the Viv. and the Prāy. Candrikā, वसतीवरकल० H U, वसतीवरः कल० B.

४ Thus B and the Prāy. Candrikā, पान्नेजना H, पान्नेजनीरेक० U, पन्नेजनीरेक० Tr.

५ Thus Tr B, क्वथने० U, कथने० H.

६ मृण्मयं Tr.

७ Thus Tr. and the Viv. स्वस्थाने U, स्वस्यस्थाने B H.

८ Thus Tr, निधायवोपधायाभि० B, निधायवोपधायावाभि० H U.

धारयत पशून्मे धारयत मा म आयुः प्राणः प्रजाः पशवः पराभिच्चेरन्नित्यथ यदि दारुमयं पात्रमाहवनीये[1] ऽनुप्रहरेदथ[2] यदि[2] मृन्मयमपो[3] ऽभ्यवहरेद्भूमिर्भूमिमगान्माता[4] मातरमप्यगात्। भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति ॥ ६ ॥ पञ्चमः ॥

[5]अथातो ऽग्निहोत्रस्य लौकिकविधिं व्याख्यास्यामः पुराग्निहोत्राद्गार्हपत्यादरण्योरग्नीन्समारोपयन्त्ययं[6] ते योनिर्ऋत्विय इत्यन्तर्वेद्यरणी निधाय लौकिके[7] ऽग्नौ जुहुयात्सायमुद्धरति[7] सायमाहुतिं हुत्वा[8] प्रातरुद्धरति प्रातरुद्धरति प्रातराहुतिं हुत्वेति विज्ञायते ऽथाग्निहोत्रं चतुर्भिर्लुप्यते[9] होमोपस्थानव्रतदर्शपूर्णमासैरिति तन्तुमत्येष्ट्वा[10] दर्शपूर्णमासाभ्यां यजेत संतिष्ठते विच्छिन्नप्रायश्चित्तिः[11] ॥ ७ ॥ षष्ठः ॥

---

१ After पात्रं H U B ins. भिन्नम्।

२ अथ यदि om. Tr.

३ मृण्मयं Tr.

४ ०वहरेयुर्भूमि० H U.

५ The first part of this kh. differs considerably in the MSS. I have given the text of Tr, which, on the whole, agrees with the Vivaraṇa.

६ पुराग्निहोत्रस्य कालाद्गार्हपत्यभस्मनारणी संस्पृश्या (or संस्पर्श्या) रण्योः समारोपयत्ययं B U H.

७..७ लौकिकमग्निमाहृत्य सायमुद्धृत्य B U H.

८ इति विज्ञायते ins. B U H.

९ Thus the Viv., ०र्लुप्येत the MSS.

१० इष्ट्वा om. Tr.

११ Thus Tr and the Vivaraṇa; ग्निहोत्रस्य लौकिकविधिः B U H.

अथापद्यग्निहोत्राणाꣳ[१] समासस्तद्यथा राष्ट्रविभ्रमो व्याधयोऽध्वगमनं गुरुकुलवासो देशकालद्रव्यानुपपत्तिरन्यैश्चायोगो[२] यासु[३] विद्यत इति । तस्य कः कर्मण उपक्रमो भवतीति । कामं पूर्वाह्णे वापराह्णे वाग्निहोत्रवेलायां वा यथासूत्रं[४] वा कुर्यात्प्रसिद्धं वा[४] यजमानस्या प्रवासात्प्रसूतः[५] प्रसिद्धं प्रतिपदि सायं[५] चतुर्दश चतुर्गृहीतानि गृह्णाति सोपवसथे पार्वणे वाथेतरस्मिन्पञ्चदश[६] । प्रसिद्धꣳ सर्वꣳ समित्प्रभृति कर्म । मन्त्राꣳश्चैकवत्सꣳस्थाप्य सायमग्निहोत्राणि[७] हुत्वा प्रातरग्निहोत्राणि[८] जुहुयात्सायमुपक्रमः प्रातरपवर्गः । काले[९] पार्वणे न यजेत । नोर्ध्वं[१०] पाक्षिकात्समासो न प्रसङ्के नाश्रद्दधानस्याथाप्युदाहरन्ति[११]

---

१ Thus Tr and the Viv.; अथाप्यग्नि० B U H.

२ Tr ins. होम after ०काल० ।

३ Thus H U, धासु Tr (grantha!), वान्यासु B.

४ Instead of these four words Tr प्रसिद्धं only.

५..५ Thus Tr; प्रवसतः प्रसुतः प्रतिपदीष्ट्वाथ U H, प्रवसत् प्रतिपदि सायं B.

६ वा only in Tr.

७ Thus U; ०त्राणां Tr B H.

८ Thus U, ०त्राणां Tr B, ०त्राण्यं H.

९ कालोथ H.

१० Thur Tr, नोर्ध्वं B U H.

११ Thus Tr, ०दधानस्य अथाप्यु० B, ०दधाननव B ०दधानेनव U (the last two om. अथाप्युदाहरन्ति).

अश्रद्धा परमः[1] पाप्मा पाप्मा ह्यज्ञानमुच्यते।
अज्ञानाल्लुप्यते धर्मो लुप्तधर्मोऽधमः[2] स्मृतः॥
श्रद्धया शुध्यते बुद्धिः श्रद्धया शुध्यते मतिः।
श्रद्धया प्राप्यते ब्रह्म श्रद्धा पापप्रणाशिनी[3]॥

तस्माच्छ्रद्दधानेनाप्रसङ्गेन[4] संपन्ने[4] काले[4] तन्त्रमत्या यजेतैवं लौकिकप्रयोग एवमकृत एवं विध्यपराधे चाथाप्युदाहरन्ति न वृथाग्नीनुद्वासयेन्नैवानापत्सु। वीरहा वा एष देवानां योऽग्निमुद्वासयत इति। तस्माच्छ्रद्दधानस्याप्रासङ्गिकस्य[5] चान्यत्रापि[6]

येये विशेषा लघवो यत्रयत्रोपलक्षिताः।
तैः कर्मसंस्तरे[7] कुर्यान्न्यायोपेतं यथा भवेत्॥
स्वशास्त्रे विद्यमाने[8] यः परशास्त्रेण वर्तते।
भ्रूणहत्या समं तस्य स्वशास्त्रमतमन्यतः॥
आर्षेयस्य स्वशास्त्रस्य प्रदेशास्तद्गुणैः समाः।
कर्मणां प्रविचारार्थमापत्सु च समाप्नुयादिति॥ ८॥

---

१ परमा MSS.

२ Thus B H U, धर्मः Tr.

३ Thus Tr, ०प्रनाशिनी U, ०प्रमोचनी B H.

४ ? Thus Tr (only संपन्नेन), ०प्रसंगेन प्रसंगेन संपन्नेकाले U, ०प्रसंगेन काले B H; the Viv. also has प्रसन्नेकाले।

५ ? Thus H U, ०धानस्याप्रसंगिक० B, ०धानेनाप्रसंगिकस्य Tr.

६ Thus Tr, ०कस्यान्यात्रापि B, ०कस्य च अन्यत्रापि U, ०कस्य च H.

७ Thus B U H, ०संस्तरैः Tr.

८ ०मानो H U.

यथो एतस्मो ऽपरिमितं प्रवसति न संवत्सरमति प्रवसतीत्यविशेषाज्जायापत्योराहिताग्न्योरित्येवेदमुक्तं भवति । विज्ञायते चार्धो वा एष आत्मनो यत्पत्नीत्यथ यदि प्रवसति यजमाने पत्न्याः प्रवासनिमित्तꣳ स्यात्तदास्तोष्यतीयꣳ हुत्वाध्वर्युः समारोपयेदयं ते योनिर्ऋत्विय इति । यत्र गच्छेत्तत्रानो हरेत्तत्र प्राप्याग्निं[1] मथित्वा विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये संतनीं जुहोति मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु । या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहेत्यथाग्नये तन्तुमते पुरोडाशमष्टाकपालं निर्वपति । शरावं दक्षिणां ददाति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ यदि यजमानश्चैव[2] पत्नी चोभौ त्वेव[3] निष्क्रामतो ग्रामान्ते ग्रामसीमान्ते वा वसतो[4] ऽग्निहोत्रमेव[4] लुप्येताविकृतमग्न्याधेयं कुर्वीताग्नीन्हरन्तो नोच्छ्वसेयुर्यद्युच्छ्वसेयुरग्नयो लौकिकाः संपद्येरन्ननो विना समारूढेष्वग्निषु[5] नाद्रियेत[5] शम्याप्रासे[6] सत्त्वनिदर्शनात्[6] । ॥ ९ ॥ सप्तमः ॥

---

१ प्राप्य only in Tr.

२ ०नश्च H U.

३ त्वेवमेव H U.

४ ? Thus B, वसातेग्नि० Tr, वसेताग्नि० U, वसत्यग्नि० H, वसेते the Vivaraṇa.

५ अग्निषु नाद्रियेत om. Tr.

६ ? शम्याप्रवासेसत्त्वनिद० Tr, शम्याप्रासेसत्त्वेतत्त्वद० B, शम्याप्रासेनदीसत्त्वनिद० U, शम्याप्रासेनदीत्वनिद० H.

अथ वै भवति सर्वान्वा एषो ऽग्नौ कामान्प्रवेशयति यो ऽग्नीनन्वाधाय व्रतमुपैति स यदनिष्ट्वा प्रयायादिति । स यदनिष्ट्वा प्रयास्यन्भवति तद्गार्हपत्य[1] आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने तुभ्यं त अङ्गिरस्तमेति । यो ऽग्नीनन्वाधाय व्रतमुपैति स यद्युद्वायतीति तत्पुरस्ताद्व्याख्यातं । यस्याहिताग्नेरग्निरपक्षायति यावच्छम्यया प्रविध्येद्यदि तावदपक्षायेत्तं संभरेदिदं त एकं पर उ[2]त एकमिति । संभृत्यानुप्रहरेदग्निहोत्रकालेषु[3] वान्येषु[3] वा[3] । यदि परस्तरामपक्षायेदनुप्रयायावस्येदित्यनुप्रयायावस्येत्तद्यत्रैवावस्येत्तत्र[4] वोद्वासयेयु रोषधीर्वा[4] एतस्य पशून्पयः प्रविशति यस्य हविषे वत्सा अपाकृता धयन्ति । तान्यदुह्वायातयाम्ना हविषा यजेत । यत्र दुह्याद्यज्ञपरुरन्तरियाद्वायव्यां यवागूं निर्वपेदित्यथैतेषां दोहयित्वा[5] तस्मिन्नप आनीय व्रीहिप्रभृति सिद्धमत ऊर्ध्वमथ यस्य सायं दुग्धं हविरार्तिमार्छतीन्द्राय व्रीहीन्निरुप्योपवसेदिति । निर्वपणान्तं[6]

---

१ Thus B, तदागार्ह० H U, गार्ह० Tr.

२ ज Tr. H.

३ Thus Tr U and the Viv. (only चान्येषु instead of वा०); कालेषु वा H, कालेचान्येषु वा B.

४ Thus H U, ०वस्येत्तत्रैवावस्येदोषधी० Tr, ०वस्येत्तद्यत्रैवास्योषधी० B.

५ किंचिद् ins. Tr and the Viv.

६ निर्वापणान्तं Tr, निर्वापांतं Viv.

कर्म कृत्वा श्वो भूत आग्नेयेन प्रचर्यैन्द्रेण प्रचरेच्छृतस्थानं तत्कुर्यादथ[१] यस्योभयꣳ हविरार्तिमार्च्छेत्यैन्द्रं पञ्चशरावमोदनं निर्वपेदिति । प्रकृत्या वा निर्वपेच्छरावेण वेति । प्रकृत्या[२] निर्वपेत्तथा[२] शरावपरिमाणार्थꣳ शरावमिति वदन्तस्तथा[३] चतुब्यात्रं निर्वपेदित्यत्र पात्र्यामेव निर्वपेत्सांनाय्यस्थाने[४] कुर्याद्यस्य[५] व्रत्ये ऽहन्पत्न्यनालम्भुका भवति तामपरुध्य यजेतेति । तामपरुध्यैव[६] यजेत सर्वेणैव यज्ञेन यजते । तामिष्टोपह्वयेताम्[७] हमस्मीत्यृतुकाल[७] उपगमनमन्त्रो । ऽग्न्यन्वाधानप्रभृत्यपरुध्यैव यजेत तथैकाहानाम् । ॥ १० ॥ **नवमः** ॥

अथ यदि[८] दीक्षोपसत्सु[८] तथाहर्गणेष्वन्येष्वहःसु वा[९] यथा[९] त्र्यहे पर्यवेते गोमूत्रेणोष्णोदकमिश्रेण लोहितं क्लित्वेत्युक्ता[१०]

---

१ Thus Tr and B; U and H read (after कृत्वा): यैतान्व्रीहीन्कूर्पे समुप्याद्भिरभ्युक्ष्यासंजयेदथ वागते सꣳसादयेत्प्रोक्षणप्रभृतिना कर्मणा प्रतिपद्येत सिद्धमत ऊर्ध्वमथ यस्योभयꣳ etc.

२ These three words not in Tr.; प्रकृत्येव B

३ तथा not in Tr.

४ After निर्वपेत् Tr. has: न प्रकृत्या प्रसिद्धमाग्नेयेन प्रचर्यैन्द्रेण प्रचरेत् ।

५ कुर्यात् only in Tr.

६ एव not in Tr.

७ ॰येतामोऽहम॰ U and the Viv. (pr. m.) ॰येतेत्यमोऽहम॰ Tr, but cp. T Br. III. 7. 1. 9.

८ यद्दी॰ Tr, यद्दी॰ B.

९ ? वाथ Tr.

१० ? क्लिन्नखे॰ Tr, क्लित्वे॰ B H U and the Viv.

प्रक्षाल्य दर्भपुञ्जीलैः पवयतीति विज्ञायत आपो वै दर्भास्तैर्हि[1] स्नाता भवतीति विज्ञायते ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्यास्त इति तस्माद्धविर्नावेक्षेत न स्पृशेदित्यथ सूतिकाया[2] दशाहे पर्यवेते यथाम्नातꣳ शौचं कृत्वा पत्नीं कर्मसु योजयेत्तत्कर्म पुत्रो[3] ब्रह्मचारी वा कुर्यात्तन्मन्त्रं यजमानो जपेदेषा पत्न्यकुशली[4] यदि स्यादेवमेव कारयेदित्यथ यदि[5] सांनाय्ये घर्मे वा प्रवृत्तायां पयो न स्याद्येन[5] केनचिदुपायेन किंचित्पयो[6] दोहयित्वाद्भिः सꣳसृज्य प्रचरेन्नैवान्यत्पय आनीय कुर्यात्तैव ततः[7] प्रायश्चित्तिरथ यदि सोमाधानमारभ्य पुरा[8] दीक्षणीयाया अनालम्भुका भवति नाग्निहोत्रं जुहोति त्र्यहे पर्यवेते[9] ऽप्सुदीक्षाप्रभृति सिद्धमत ऊर्ध्वमथ यदि पुरा व्रतदोहनादनालम्भुका भवति त्र्यहꣳ हविष्यमश्नीयाद्यदि व्रते[10] दुग्धे[10] हविष्यमेव[11] व्रतमपो ऽभ्यव-

---

१ Thus H U, दर्भा इति तैर्हि B, दर्भा इति तेन Tr.

२ Thus H ०कायां Tr B U.

३ तत्पुत्रो Tr.

४ Thus Tr and U (sec. m.); कुशली B H U (pr. m.).

५..५ Thus Tr; सांनाय्यं वा घर्मो वा प्रतप्तो नश्येद्येन B, सांनाय्ये वा घर्मे वा प्रवृत्तायां पयो नश्येद्येन U, H is corr. but reads at the end पयोनस्याधेन ।

६ किंचित्तस्मिन् Tr.

७ तत्र B H.

८ पुरस्तादू Tr.

९ यथाम्नातं शौचं कृत्वा ins. U.

१० Thus B U H and the Viv., ०तं दुग्धं Tr.

११ Only in Tr.

हरेत् । त्र्यहे[1] पर्यवेते गोमूत्रादि सिद्धमत ऊर्ध्वम् । अथ[1] यदि पुरा प्रवर्ग्यस्य[2] स्यान्न[2] प्रवृञ्ज्यादुद्धविष्यप्रभृति यथाम्नातꣳ शौचं कृत्वा गोमूत्रादि सिद्धमत ऊर्ध्वम् । अथ यदि प्रवृक्ते[3] ऽनालम्भुका भवति हविष्यमेव[4] तदहः[4] सꣳस्थाप्य त्र्यहे[5] पर्यवेते गोमूत्रादि सिद्धमत ऊर्ध्वम् । अथ[5] दीक्षित वाचं यच्छ व्रत्य वाचं यच्छ[6] पत्नि[6] वाचं[6] यच्छेति संप्रैषादेकस्तनप्रभृत्यानालम्भुका[7] भवति सिद्धमावभृथात्कृत्वा त्र्यहे पर्यवेते ऽवभृथमवयन्ति । सुत्ये ऽहनि मार्जालीये सिकतोपोप्ते परिश्रित्योपविशेद् । अन्येष्वहःसु पत्नीशालायामेवोपविशेत्प्राग्वꣳशं[8] न प्रपद्येत । ॥ ११ ॥ दशमः ॥

अथातः प्रायश्चित्तसमुच्चयं व्याख्यास्यामः । सर्वत्रानादिष्टेषु मनस्वती मिन्दाहुती व्याहृतयो होतार इति जुहुयात्सर्वेष्व-व्रत्येषु[9] मिन्दाहुती पितृयज्ञलोपे सप्तहोतारमिति[10] जुहुया-द् । अथ[10] यद्यग्न्याधेये सर्वमौपासनमभिप्रव्रजेयुः पुनस्त्वादित्या रुद्रा वसवः समिन्धतामित्येतया स्रुवाहुतिꣳ हुत्वा[11] लौकिके

---

१ त्र्यहे..ऊर्ध्वम् only in Tr.

२ ? Thus U B, प्रवर्ग्यस्य न Tr, प्रवर्ग्यस्यासन्न H.

३ प्रवृत्ते MSS. and Viv.

४ Thus Tr, ०ष्यमेतदहः B H U.

५ Instead of त्र्यहे..ऊर्ध्वम् Tr has only सिद्धम् ।

६ Only given by Tr.

७ Thus Tr, संप्रैषावेक० B H U.

८ उपविशेत् om, H U.

९ Thus Tr, ०षु व्रत्येषु B U H.

१० इति जुहुयात् in Tr only.

११ तस्मिन् ins. Tr.

ऽग्नौ गृह्याणि कर्माणि प्रयुञ्जीत[1] यद्यर्धमवशिष्येताथ[2] यदि ब्रह्मौदनिको धारितः स्यादौपासनवत्स्यात्त।थोद्वाते पाकादूर्ध्वं जयादीꣳश्च जुहुयाद।थ यदि गार्हपत्यमनाहितमादित्यो ऽभ्युदियादादित आरभ्यान्यस्मिन्काल आदध्यान्मध्ये चेदग्निविनाश एतदेवाथ[3] यदि पत्नीमृत्वियं[4] विन्देत प्राग्दक्षिणाया एतदेवा।त ऊर्ध्वमपरोधो ऽग्निहोत्रे च सोमे[5] चावभृथादिषु[5] सर्वत्रेष्टिपशुसोमेषु[6] तावन्मात्रं[7] पत्न्या वा सर्वम।थ यदि गार्हपत्याहवनीयावुद्वायेतामभिनिम्रोचेदभ्युदियाद्वाग्न्याधेयं[8] तत्र प्रायश्चित्तिः। पुनराधेयमित्येके। ऽथ[9] यदि पत्नी बहिः सीमां पुनराधानम।थ यद्यात्मनि समारूढेष्वव्रत्यं चरेदरणिविनाशोक्तदोषो[10] वा[11] भवेदग्न्याधेयम।रणिविनाशेनाग्निविनाश[12] उक्तो। ऽथ यदि ग्राममर्यादां नदीं वाग्नीनतिहरेयुरेताने-

१ अथ ins. Tr.

२ Thus H U, ०शिष्येदथ Tr, ०शिष्येतातस्मिन्कुर्यादथ B.

३ अथ in Tr only.

४ Thus Tr, पत्न्यृत्वियं B U H.

५ Thus B H, सोमे चावभृथात् U, सोमेनावभृथादिषु Tr.

६ Thus Tr B, सर्वेष्टि० U H.—०सोमेषु Tr B, ०तंत्रेषु U H.

७ स ins. U H.

८ Thus Tr, आहवनीयगार्हपत्यावु० B U H.—उद्वायेताम् Tr.

९ In Tr only.

१० ०रणी B U H.

११ In H U only.

१२ Tr om. अग्न्याधेयम्, rightly?

वाग्नीन्ह्रियमाणानन्वारभेयातां[1] । प्रवसति यजमाने न[2] पत्नी[2] प्रवसति[2] नात्र प्रायश्चित्तं । भिन्नयोनिश्चेदन्वाहार्यपचन उद्धायेद्या[3] प्रकृतिस्तत[4] आहरणं पृथगरणी वा । ॥ १२ ॥

अथ यद्येककपालः परावर्तते[5] प्रजापतेर्वर्तनिमनुवर्तस्वेत्यध्वर्युः स्वस्थाने प्रतिष्ठापयेत्प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे विश्वमन्याभिवावृध इत्येताभ्यां यजमानो ऽनुमन्त्रयते । ऽस्कान्द्यौः पृथिवीमस्कानजनि प्राजनीत्येताभ्याꣳ स्रुवाहुती जुहुयात्सꣳस्थिते वैश्वानरीमिष्टिं[6] निर्वपेद्विज्ञायते च यत्प्राङ्[7] पद्येत देवलोकमभिजयेद्यद्दक्षिणा पितृलोकं । यत्प्रत्यग्रक्षाꣳसि यज्ञꣳ हन्युर्यदुदङ् मनुष्यलोकमभिजयेत्प्रतिष्ठितो होतव्य इत्यथ यदि पशुबन्धः सोमो वा लुप्येत वैश्वानरीमिष्ट्वा पुनर्यजेत[8] । सर्वं चेत्सुत्यमहरतिक्रामेत्समन्वारब्धाः[9] प्रागुपवेशनादपच्छिद्येरन्समाप्य पुनर्यजेत । सोमेन दीक्षितो न[10] दद्यान्न[10] जुहुयान्न[10] पचेन्न जपेदित्यादित[11] एव विभजेदित्याहुर्मंतो-

१ Instead of एतानेव B U H एतदेव ।

२ Thus Tr, B om. न, प्रवसति H, S प्रवसति वा U.

३ Thus Tr B, ॰येद्यथा U H.

४ Instead of तत Tr तद् ।

५ पराङावर्तते Tr.

६ इष्टिम् alone in Tr.

७ प्राक् H.

८ एकाहेषु ins. U.

९ After ॰क्रामेत् U ins. सर्पणे ।—Instead of ॰रब्धाः (thus Tr.) ॰रब्धा वा U, रब्धा वा H B.

१० न जुहुयान्न दद्यान्न Tr.

११ इति om. Tr.

प्रेतो[1] न[1] स्नायान्नापो[1]ऽवगाहेत न वासो जह्यान्न रजः[2] प्रस्नावयेत्। सर्वत्र यजमानस्यर्त्विजां च यावत्कर्म व्रतमुपदिशन्ति नर्त्विजामार्त्विज्यमन्यत्र विद्यते न महर्त्विजाꣳ समासो[3] न[3] सर्वत्र[3] यजमानस्यार्त्विज्यमन्यत्र सत्रात्। सर्वेषु[4] सोमेषु सोमापचार-कालातिक्रमान्तरितविपर्यासव्यत्यायसमासादिष्वन्येषु[5] चाज्ञा-तेषु[6] ज्ञातेषु च दोषेषु[6] प्राक् समिष्टयजुष आज्यस्थाल्याः स्रुवेणोपघातꣳ सर्वप्रायश्चित्तानि जुहुयात्। जयानित्येके। अभ्या-तानानित्येके। राष्ट्रभृत इत्येके। आत्यहोमानित्येके। छन्दाꣳ-सीत्येके। सौरीरित्येके। तनूरित्येके। होतॄनित्येके। दशा-त्मकमित्येके। पौरुषीरित्येके। वैष्णवीरित्येके। महाव्याहृती-रित्येके। व्याहृतीरित्येके। प्राजापत्यामित्येके[7]। प्रणवमित्येके। सर्वानित्याचार्यः[8] सर्वानित्याचार्यः। ॥ १३ ॥ एकादशः ॥

॥ इत्येकोनत्रिंशः प्रश्नः ॥

१ व्र॰ न स्नायात् in U only.

२ Thus Tr, वासः B U H.

३ ? Thus reads U, समासोन चापिवै (यज॰) Tr, समासोमेन सर्वत्र B, समास्तोमेन सर्वत्र H. The meaning of the whole passage is unclear to me.

४ सत्राच्चसर्वेषु Tr.

५ सोमोपचार॰ Tr.—॰सादिषु चान्येषु B.

६ Thus (only वाज्ञा॰ instead of चाज्ञा॰) Tr, वाज्ञाषेषु दोषेषु B, चदोषेषु U H.

७ Thus Tr, प्राजापत्यानि॰ H B, प्राजापत्यानी॰ U.

८ ॰चार्यः Tr H, ॰चार्याः B U.

अथेमे ऽग्निचयास्तेषां भूमेः परिमाणविहारान्व्याख्यास्यामो। ऽथाङ्गुलप्रमाणं चतुर्दशाणवस्तुस्त्रिꣳशत्तिलाः पृथुसꣳश्लिष्टा इत्यपरं। दशाङ्गुलं क्षुद्रपदं। द्वादश[1] प्रादेशः[1]। पृथोत्तरयुगे त्रयोदशिके। पदं पञ्चदशाष्टाशीतिशतमीषा चतुःशतमक्षः। षडशीतिर्युगं। द्वात्रिꣳशज्जानुः। षट्त्रिꣳशच्छम्याबाहू। द्विपदः प्रक्रमः। द्वौ प्रादेशावरत्निरथाप्युदाहरन्ति पदे युगे प्रक्रमे ऽरत्नावियति शम्यायां च मानार्थेषु याथाकामीति। पञ्चारत्निः पुरुषो व्यामश्च[2]। चतुररत्निर्व्यायामश्चतुरश्रं[3] चिकीर्षन्यावच्चिकीर्षेत्तावतीꣳ रज्जुमुभयतःपाशां कृत्वा मध्ये लक्षणं करोति। लेखामालिख्य तस्या मध्ये शङ्कुं निहन्यात्तस्मिन्पाशौ प्रतिमुच्य[4] लक्षणेन मण्डलं परिलिखेद्विष्कम्भान्तयोः शङ्कू निहन्यात्पूर्वस्मिन्पाशं प्रतिमुच्य पाशेन मण्डलं परिलिखेदेवमपरस्मिꣳस्ते यत्र समेयातां तेन द्वितीयं विष्कम्भमायच्छेद्विष्कम्भान्तयोः शङ्कू निहन्यात्पूर्वस्मिन्पाशौ प्रतिमुच्य लक्षणेन मण्डलं परिलिखेदेवं दक्षिणत एवं पश्चादेवमुत्तरतस्तेषां ये ऽन्त्याः सꣳसर्गास्तच्चतुरश्रꣳ संपद्यते। ऽथापरं। प्रमाणाद्द्विगुणाꣳ रज्जुमुभयतःपाशां कृत्वा मध्ये लक्षणं करोति। स प्राच्यर्धो। ऽपरस्मिन्नर्धे चतुर्भागोने

१ द्वादशांगुलंप्रादेशं M.

२ Thus T, च not in my copies.

३ Thus throughout B U M; ०स्र० instead of ०श्र० throughout H.

४ प्रमुच्य B M H.

लक्षणं करोति । तन्न्यञ्छनमा ऽꣳसार्धं । पृष्ठ्यान्तयोः पाशौ प्रतिमुच्य न्यञ्छनेन दक्षिणापायार्धेन श्रोण्यꣳसान्निर्हरेद्दीर्घ-चतुरश्रं चिकीर्षन्यावच्चिकीर्षेत्तावत्यां भूम्यां[1] द्वौ शङ्कू निहन्या-द्द्वौद्वावेकैकमभितः[2] समौ । ध्रुवतौ तिर्यङ्मानी तावतीꣳ रज्जुमुभयतःपाशां कृत्वा मध्ये लक्षणं करोति । पूर्वेषामन्त्ययोः पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायम्य लक्षणे लक्षणं करोति । मध्यमे पाशौ प्रतिमुच्य लक्षणस्योपरिष्टाद्दक्षिणा-पायम्य लक्षणे शङ्कुं निहन्यात्सोऽꣳसः । एतेनोत्तरो ऽꣳसो व्याख्यातस्तथा श्रोणी । यत्र पुरस्ताद्दꣳहीयसीं मिनुयात्तत्र तदर्धे लक्षणं करोत्यथापरं प्रमाणं द्व्यर्धाꣳ रज्जुमुभयतः-पाशां कृत्वापरस्मिꣳस्तृतीये षड्भागोनं लक्षणं करोति । तन्न्यञ्छ-नमिष्टे[3] ऽꣳसार्धं[3] । पृष्ठ्यान्तयोः पाशौ प्रतिमुच्य न्यञ्छनेन दक्षिणापायम्येष्टेन श्रोण्यꣳसान्निर्हरेत्तच्चतुरश्रस्याक्ष्णयारज्जु-र्द्विस्तावतीं भूमिं करोति । प्रमाणं तिर्यग्द्विकरण्यायामस्त-स्याक्ष्णयारज्जुस्त्रिकरणी । तृतीयकरणमेतेन व्याख्याता । नव-मस्तु[4] भूमेर्भागो भवतीति[5] । दीर्घचतुरश्रस्याक्ष्णयारज्जुः पार्श्वमानी[6] तिर्यङ्मानी च यत्पृथग्भूते कुरुतस्तदुभयं करोति ।

१ Thus my copies, भूमौ T.

२ ०वेकमभितः B, ०वेकैवमभितः H.

३ ०नमिष्टेन सार्धं M.

४ Before नव० M ins. विभागस्तु तासां ।

५ भवति M.

६ च ins. M.

तासां[१] त्रिकचतुष्कयोर्द्वादशिकपञ्चिकयोः[२] पञ्चदशिकाष्टिकयोः[३] सप्तिकचतुर्विꣳशिकयोर्द्वादशिकपञ्चत्रिꣳशिकयोः[४] पञ्चदशिकषट्त्रिꣳशिकयोरित्येतासूपलब्धिः । ॥ १ ॥

नानाचतुरश्रे समस्यन्कनीयसः करण्या वर्षीयसो वृध्रमुल्लिखेद्वृध्रस्याक्ष्णयारज्जुः[५] समस्तयोः पार्श्वमानी भवति । चतुरश्राच्चतुरश्रं निर्जिहीर्षन्यावन्निर्जिहीर्षेत्तस्य करण्या वर्षीयसो वृध्रमुल्लिखेद्वृध्रस्य पार्श्वमानीमक्ष्णयेतरत्पार्श्वमुपसꣳहरेत्सा यत्र निपतेत्तदपच्छिन्द्याच्छिन्नया निरस्तꣳ । समचतुरश्रं दीर्घचतुरश्रं चिकीर्षꣳस्तदक्ष्णयापच्छिद्य भागं द्वेधा विभज्य पार्श्वयोरुपदध्याद्यथायोगमपि[६] वैतस्मिꣳश्चतुरश्रꣳ[७] समस्य तस्य करण्यापच्छिद्य[८] यदतिशिष्यते तदितरत्रोपदध्याद्दीर्घचतुरश्रꣳ समचतुरश्रं चिकीर्षꣳस्तिर्यङ्मानीं करणीं कृत्वा शेषं द्वेधा विभज्य पार्श्वयोरुपदध्यात्खण्डमावापेन[९] तत्संपूर-

---

१ Found in all my copies; not given by T.

२ M om. द्वादशि..कयोः ।

३ पंचिकषष्टिकयोः M.

४ ०विꣳशति० instead of ०विꣳशि० M.

५ वृज्ञ instead of वृध्र the MSS. here and infra. cp. Thibaut, Paṇḍit X, pp. 17, 18.

६ ०रुपसंदध्या० M U B.

७ Thus अपि वैत० my copies, not अपि चैत०, as Thibaut reads.

८ Thus B H U, ०च्छिद्याद् M only.

९ Instead of पार्श्वयोः T: विपर्यस्येतरत्र ।; उपसंदध्या० B H U.

येत्तस्य निर्हारं[1] उक्तश्चतुरश्रमेकतोऽणिमच्चिकीर्षन्नणिमतः करणीं तिर्यङ्मानीं कृत्वा शेषमक्ष्णया विभज्य विपर्यस्येतरत्रोपदध्याच्चतुरश्रं प्रउगं चिकीर्षन्यावच्चिकीर्षेद्द्विस्तावतीं भूमिं समचतुरश्रां कृत्वा पूर्वस्याः करण्या मध्ये शङ्कुं निहन्यात्तस्मिन्पाशौ प्रतिमुच्य दक्षिणोत्तरयोः श्रोण्योर्निपातयेद्बहिस्स्पन्द्यमपच्छिन्द्याच्चतुरश्रमुभयतः प्रउगं चिकीर्षन्यावच्चिकीर्षेद्द्विस्तावतीं भूमिं दीर्घचतुरश्रां कृत्वा पूर्वस्याः करण्या मध्ये शङ्कुं निहन्यात्तस्मिन्पाशौ प्रतिमुच्य दक्षिणोत्तरयोर्मध्यदेशयोर्निपातयेद्बहिस्स्पन्द्यमपच्छिन्द्यादेतेनापरं प्रउगं व्याख्यातं' चतुरश्रं मण्डलं चिकीर्षन्नक्ष्णयार्धं मध्यात्प्राचीमभ्यापातयेद्यदतिशिष्यते[2] तस्य सह तृतीयेन मण्डलं परिलिखेन्मण्डलं चतुरश्रं चिकीर्षन्विष्कम्भमष्टौ भागान्कृत्वा भागमेकोनत्रिंशधा[3] विभज्याष्टाविंशतिभागानुद्धरेद्भागस्य च षष्ठमष्टमभागोनमपि वा पञ्चदश भागान्कृत्वा द्वावुद्धरेत्सैषानित्या[4] चतुरश्रकरणी' प्रमाणं तृतीयेन वर्धयेत्तच्चतुर्थेनात्मचतुस्त्रिंशोनेन[5]' सविशेषः' ॥ २ ॥

अथाग्न्याधेयिके विहारे[6] गार्हपत्यादाहवनीयस्यायतनं'

---

१ निर्ह्रासं B U, cp. Z D M G. LV, p. 579.

२ ॰भ्यायातये॰ B M.

३ ॰विंशधा H M.

४ Thus U M; ॰द्धरेदेषा॰ H B and T.

५ Thus my copies.

६ Thus, not विहारो, my copies.

विज्ञायते ऽष्टासु प्रक्रमेषु ब्राह्मणो ऽग्निमादधीतैकादशसु राजन्यो द्वादशसु वैश्य इत्यायामतृतीयेन त्रीणि चतुरश्राण्यनूचीनानि कारयेदपरस्योत्तरस्यां[1] श्रोण्यां गार्हपत्यस्तस्यैव दक्षिणे ऽंसे ऽन्वाहार्यपचनः पूर्वस्योत्तरे ऽंस आहवनीयो । ऽपि वा गार्हपत्याहवनीययोरन्तरालं पञ्चधा षोढा वा संभुज्य षष्ठं सप्तमं वा भागमागन्तुकमुपसमस्य[2] समं त्रैधं विभज्य पूर्वस्मादन्ताद्द्वयोर्भागयोर्लक्षणं[3] करोति । गार्हपत्याहवनीययोरन्तौ नियम्य लक्षणेन दक्षिणापायम्य लक्षणे शङ्कुं निहन्ति । तद्दक्षिणाग्नेरायतनं भवत्यपि वा प्रमाणं पञ्चमेन वर्धयेत्तत्सर्वं पञ्चधा संभुज्यापरस्मादन्ताद्द्वयोर्भागयोर्लक्षणं[3] करोति । पृष्ठ्यान्तयोः पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायम्य लक्षणे शङ्कुं निहन्ति । तद्दक्षिणाग्नेरायतनं भवति । विपर्यस्तैतेनोत्करो व्याख्यातो । ऽपरेणाहवनीयं यजमानमात्री भवतीति दार्शपौर्णमासिकाया वेदेर्विज्ञायते । तस्यास्त्रिभागोनं पश्चात्तिरश्ची । तस्या एवार्धं पुरस्तात्तिरश्चीं[4] दीर्घचतुरश्रमेकतोऽणिमदिहत्य स्रक्तिषु शङ्कून्निहन्याद्यावती पार्श्वमानी

---

१ ०दपरस्योत्तरस्योत्तरस्यां B M.

२ ०गंतुसुपसमस्य H U.

३ Thus (and cp. Thibaut's remark) B; the other MSS. अन्यात् instead of अन्तात् ।

४ ०त्तिरश्ची यावद् M.

द्विरभ्यस्ता[1] तावतीं[1] रज्जुमुभयतःपाशां कृत्वा मध्ये लक्षणं करोति । दक्षिणयोः पार्श्वयोः[2] पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायस्य लक्षणे शङ्कुं निहन्यात्तस्मिन्पाशौ प्रतिमुच्य लक्षणेन दक्षिणं पार्श्वं परिलिखेदेतेनोत्तरं पार्श्वं व्याख्यातं । पूर्वं पार्श्वं तथा द्विरभ्यस्तया परिलिखेदेवमपरं । दशपदा पश्चात्तिरश्ची द्वादशपदा प्राच्यष्टापदा पुरस्तात्तिरश्चीति पाशुबन्धिकाया वेदेर्विज्ञायते । मानयोगस्तस्या व्याख्यातो । रथसंमितेत्येकेषां । विराट्संपन्नेत्येकेषां । शम्यामात्री चतुः-स्रक्तिर्भवतीत्युत्तरवेदेर्विज्ञायते[3] । समचतुरश्राविशेषाद्वितीया वेदिर्भवतीति पैतृक्या[4] वेदेर्विज्ञायते । महावेदेस्तृतीयेन समचतुरश्रकृतायास्तृतीयकरणी[5] भवतीति[6] । नवमस्तु भूमेर्भागो भवति[7] । यजमानमात्री चतुःस्रक्तिर्भवतीत्येकेषां । दिक्षु स्रक्तयो भवन्ति । वेदितृतीये यजेतेति सौत्रामणिकीं वेदिमभ्युपदिशन्ति । महावेदेस्तृतीयेन समचतुरश्रकृताया अष्टादशपदा पार्श्वमानी भवति । तस्यै दीर्घकरण्यामेकतोऽणिमत्करण्यां च याथाकामीति । ॥ ३ ॥

---

१ द्विस्तावतीं B.

२ ? Found in H M U; B. om. Thibaut omits the word.

३ चतुस्र० the MSS.

४ पैतृयज्ञिकाया B, and U originally.

५ ०कृतायाः करणी तृतीयकरणी B U, and cp. Thibaut's remark on this passage.

६ भवति M U, भवती H.

७ भवतीति M.

प्राग्वंशः षोडशप्रक्रमायामो द्वादशव्यासो[1] ऽपि वा द्वादशप्रक्रमायामो दशव्यासस्तस्य मध्ये द्वादशिको विहारस्त्रिंशत्पदानि प्रक्रमा वा पश्चात्तिरश्ची भवति षट्त्रिंशत्प्राची चतुर्विंशतिः पुरस्तात्तिरश्चीति महावेदेर्विज्ञायते । मानयोगस्तस्या व्याख्यात । आहवनीयात्षट् प्रक्रमान्महावेदिस्तत एकस्मिन्सदस्तद्दशक्रमुदक् सप्तविंशत्यरत्नयो । ऽष्टादशेत्येकेषां । ततश्चतुर्षु हविर्धानं । तद्दशकं द्वादशकं वा । मानयोगस्तयोर्व्याख्यातो । यूपावटीयाच्छङ्कोरर्धप्रक्रममवशिष्योत्तरवेदिं विमिमीते । दशपदोत्तरवेदिर्भवतीति सोमे विज्ञायते । मानयोगस्तस्या व्याख्यातश्चात्वालः शम्यामात्रो ऽपरिमितो वायोपरवाः प्रादेशमुखाः प्रादेशान्तराला । अरत्निमात्रं समचतुरश्रं विहृत्य स्रक्तिषु शङ्कून्निहन्यादर्धप्रादेशेनार्धप्रादेशेनैकैकं मण्डलं[2] परिलिखेत्सदसः[3] पूर्वार्धाद्विप्रक्रममवशिष्य धिष्ण्यानां[4] द्विप्रादेशो विष्कम्भस्तथान्तराला । आग्नीध्रागारस्य[5] पार्श्वमानी पञ्चारत्निरेतेन मार्जालीयो व्याख्यातस्तस्योदीचीं द्वारं कुर्वन्ति । रथाचान्तराला यूपावटा भवन्तीत्येकादशिन्यां

---

१ द्वादशपदव्यास॰ M, which omits the following words up to दशव्यास॰ ।

२ परिमंडलं M and U (sec. m.).

३ ॰त्सदः H.

४ Thus, not धिष्णिया॰, the MSS.

५ आग्नीध्रीया॰ T.

विज्ञायते । तस्या[1] दशानां च रथाक्षाणामेकादशानां च पदानामष्टाङ्गुलस्य च चतुर्विंशं भागमाददीत । स प्रक्रमः स्यात्तेन वेदिं विमिमीते[2] । ऽथाश्वमेधे[2] विंशत्याश्च रथाक्षाणामेकविंशत्याश्च पदानामष्टाङ्गुलस्य च चतुर्विंशं भागमाददीत । स प्रक्रमः स्यात्तेन वेदिं विमिमीते[3] । ऽथ[3] प्राच्येकादशिन्यां[4] यूपार्थं वेदेः पूर्वार्धात्पदार्धव्यासमपच्छिद्य[5] तत्पुरस्तात्प्राञ्चं[6] दध्यान्नात्राष्टाङ्गुलं विद्यते । न व्यतिषङ्गो । यूपावटाः पदविष्कम्भास्त्रिपदपरिणाहानि यूपोपराणीति ।

|| ४ || प्रथमः ||

अर्धाष्टमाः[7] पुरुषाः[7] प्रथमो ऽग्निरर्धनवमा द्वितीयो । ऽर्धदशमास्तृतीय । एवमुत्तरोत्तरो[8] विधाभ्यास ऐकादशविधात्तदेतत्सप्तविधप्रभृत्येकशतविधान्तमत ऊर्ध्वमेकशतविधानेव प्रत्याददीतानग्निकान्वा यज्ञक्रतूनाहरेदन्यत्राश्वमेधादश्वमेधमप्राप्तं चेदाहरेदत ऊर्ध्वं विधामभ्यस्येन्नेतरदाद्रियेतातीतं[9]

---

१ तस्यै U originally and a citation in the Mahāgnisarvasva.

२ ०मीतायाश्वमेधे M, cp. XXVI. 23 : 304. 6.

३ ०मीताय again M.

४ प्राच्ये० M, प्राचै० the other MSS.; ०न्या U.

५ Thus M; पूर्वार्धात्पदार्थव्या० U, पदार्धव्या० B, पूर्वार्धसदार्धन्या० H.

६ ०प्राच्यां M.

७ अर्धाष्टमपुरुषाः T.

८ ०त्तरे M.

९ ०भ्यस्येदन्यतरदाद्रि० M.

चेदाहरेदाहृत्य कृतान्तादेव प्रत्याददीत । कथमु खलु विधामभ्यस्येद्यदन्यत्प्रकृतेस्तत्पञ्चदश भागान्कृत्वा विधायांविधायां द्वौद्वौ भागौ समस्येत्ताभिरर्धाष्टमाभिरग्निं चिनुयादूर्ध्वप्रमाणाभ्यासं जानोः पञ्चमस्य चतुर्विंशेनैके[1] समामनन्त्यथ हैक एकविधप्रभृतीनपक्षपुच्छाꣳश्चिन्वते । तन्नोपपद्यते पूर्वोत्तरविरोधादथ हैकेषां ब्राह्मणं[2] भवति श्येनचिदग्नीनां पूर्वा ततिरित्यथापरेषां[3] न ज्यायाꣳसं चित्वा कनीयाꣳसं चिन्वीतेत्यथास्माकं[4] । पक्षी भवति । न ह्यपक्षः पतितुमर्हत्यरत्निना पक्षौ द्राघीयाꣳसौ भवतस्तस्मात्पक्षप्रवयाꣳसि वयाꣳसि । व्याममात्रौ पक्षौ च पुच्छं च भवतीति । नापक्षपुच्छः श्येनो विद्यते । न चासप्तविधस्य पक्षपुच्छानि विद्यन्ते न च सप्तविधं चित्वैकविधप्रसङ्गस्तस्मात्सप्तविध एव प्रथमो ऽग्निर्भेदान्वर्जयेदधरोत्तरयोः पार्श्वसंधानं भेदा इत्युपदिशन्ति । तदग्न्यन्तेषु न विद्यते[5] न स्रक्तिपार्श्वयोः । साहस्रं चिन्वीत प्रथमं चिन्वान इति[6] । पञ्चमायां वा चितौ

---

१ ०शेनैवैके T.

२ See XXIV. 5: 188. 14.

३ ०थापरं M.

४ ब्राह्मणं ins. U on the margin; the brāhmaṇa is found T. S. V. 2. 5. 1.

५ विद्यंते U.

६ See T. S. V. 6. 8. 2.

संख्यां[1] पूरयेद्द्विशतास्वेच्चिकीर्षेत्यश्वचोडाभिर्नाकसदः[2] समानसंख्यं[3] प्रतीयात् । ॥ ५ ॥

पशुधर्मो[4] ह वा अग्निर्यथा ह वै पशोर्दक्षिणेषामस्थ्नां यद्दक्षिणं पार्श्वं तदुत्तरेषामुत्तरं यदुत्तरेषां दक्षिणं तद्दक्षिणेषामुत्तरं यदवाक्[5] चोर्ध्वं[5] च[5] तत्समानमेवमिष्टकानाꣳ रूपाण्युपदध्याद्या दक्षिणावृतो लेखास्ता दक्षिणत उपदध्यात्सव्यावृत उत्तरत । ऋजुलेखाः पश्चाच्च[6] पुरस्ताच्च भवन्त्यालिखिता मध्ये । ऽथ या विशयस्था[7] यथा ह वै पशोः पृष्ठवꣳशो नैवैकस्मिन्पार्श्वे व्यतिरेकेण वर्तते नैवापरस्मिन्नेवं तासामुपधानं प्रतीयादथापि ब्राह्मणं[8] भवति प्रजापतिर्वा अथर्वाग्निरेव दध्यङ्ङाथर्वणस्तस्येष्टका अस्थानीति । तस्माद्बहिस्तन्वं चेच्चिनुयात्तन्वोपह्वयमध्यैरात्मोपह्वयमध्यात्संदध्यात्प्राञ्चमेनं[9] चिनुत इति विज्ञायते । ऽन्नमयीभिरनिष्टकाभिर्न[10]

---

१ om. M.

२ ०शताꣳस्वे U, ०शतांसे० B.—०चोडानाकसदः M.

३ ०ख्यं H U, ख्यां M, ०ख्याः B.

४ ०धर्मा B M U.

५ यदवांचं M; यदवाक् चो० B.

६ Thus H M U, पश्चात् B.

७ Thus with T; विषय० my copies.

८ T. S. V. 6. 6. 3.

९ Some of the MSS. write (as Lāṭy. I. 5. 7.) उपह्वय or ह्वय, some (as Drāhy. II. 1. 10.) उपप्लव ।

१० ०योभिरिष्टकाभि० M B.

संख्यां पूरयेदिष्टकचिद्वा[1] अन्यो ऽग्निः पशुचिदन्य इत्येतस्माद्ब्राह्मणात्पशुर्वा एष यदग्निर्योनिः खलु वा एषा पशोर्विक्रियते यत्प्राचीनमैष्टकाद्यजुः क्रियत[2] इति च[3] । लोकबाधीनि[4] द्रव्याण्यवटेषूपदध्यान्मण्डलमृषभं विकर्णीमितीष्टकासु[5] लक्ष्माणि प्रतीयादिष्टकामन्त्रयोरिष्टकाव्यतिरेके लोकंपृणाः संपद्यन्ते परिमाणाभावादतीतानेव[6] वेष्टकागणानन्वोपदध्यात्पञ्च[6] लोकंपृणा । मन्त्रव्यतिरेके ऽक्ताः शर्कराः संधिषूपदध्यात्प्राचीरुपदधाति प्रतीचीरुपदधातीति गणेषु रीतिवादः । प्राचीमुपदधाति प्रतीचीमुपदधातीति कर्तुर्मुखवादः । पुरस्तादन्याः प्रतीचीरुपदधाति पश्चादन्याः प्राचीरित्यपवर्गश्चतुरश्रास्वेवैतदुपपद्यते । ॥ ६ ॥

न खण्डामुपदध्यान्न भिन्नामुपदध्यान्न कृष्णामुपदध्यान्न जीर्णामुपदध्यान्न लक्ष्मणामुपदध्यान्न[7] स्वयमातृण्णाः स्वयंचितावुपदध्यादूर्ध्वप्रमाणमिष्टकानां जानोः पञ्चमेन कारयेदर्धेन

१ See T. S. I. 5. 8. 2.

२ ०यत इति B U, but we have one single citation: T. S. V. 2. 10. 1.

३ om. H.

४ With ब my copies: T. with व ।

५ विकर्णी is, according to the Mahāgnisarvasva, विशाखकर्णी स्त्री ।

६ Thus B U, ०तीतानेवे० M, H is incompl. T reads as M, inserting, moreover, एव after ०गनान् ।

७ Thus H, लक्ष्मामु० M U; लक्ष्माणमु० T.

नाकसदां पञ्चचोडानां च । यच्छोषपाकाभ्यां प्रतिह्रसेत[१] पुरीषेण तत्संपूरयेत्पुरीषस्यानियतपरिमाणत्वाद्व्यायाममात्री भवतीति गार्हपत्यचितेर्विज्ञायते । चतुरश्रेत्येकेषां । परिमण्डलेत्येकेषां । चतुरश्रꣳ सप्तधा विभज्य तिरश्चीं त्रेधा विभजेदपरस्मिन्प्रस्तार उदीचीरुपदधाति । समचतुरश्राश्चेदुपदध्याद्व्यायामषष्ठेनेष्टकाः कारयेच्चतुर्थेन तृतीयेनेति । तासां नव प्रथमा द्वादश द्वितीया इति पूर्वस्मिन्प्रस्तार उपदधाति । पञ्च तृतीयाः षोडश प्रथमा इत्यपरस्मिन्परिमण्डलायां यावत्संभवेत्तावत्समचतुरश्रं कृत्वा तन्नवधा विभजेत्प्राचीꣳस्त्रिधा त्रिधेत्यपरं[२] प्रस्तारं[२] तथोपदध्याद्यथा प्रत्यनीकेषु स्रक्तयो भवन्ति । धिष्ण्या एकचितीकाश्चतुरश्राः परिमण्डला वा । तेषामाग्नीध्रीयं नवधा विभज्यैकस्या स्थाने ऽश्मानमुपदध्यादथ होतुर्धिष्ण्यं[३] नवधा विभज्य पूर्वाꣳस्त्रिभागानेकैकं द्वेधा विभजेदथेतरान्नवधानवधा विभज्य मध्यमपूर्वौ द्वौ[४] भागौ समस्येदथ मार्जालीयं त्रेधा विभज्य पूर्वापरौ भागौ पञ्चधा विभजेदुख्यभस्मना सꣳसृज्येष्टकाः कारयेदिति । संवत्सरभृत[५] एवैतदुपपद्यते न रात्रिभृत[५] । एवमस्य मन्त्रवती चितिक्लृप्तिम्क्लृ-

---

१ Thus U and T; ॰सेत् H M B.

२ ॰परस्मिन्प्रस्तारे M B.

३ धिष्ण्यं H M.

४ द्वौद्वौ M.

५ See X. 12 : 11. 13.

न्दश्चितं[1] त्रिषाहस्रस्य परस्ताच्चिन्वीत कामविवेकान्तस्य रूपꣳ श्येनाकृतिर्भवतीति ।[2] ॥ ७ ॥ द्वितीयः ॥

अथ वै भवति[3] श्येनचितं चिन्वीत सुवर्गकाम इत्यांकृतिर्द्वैविध्यं । चतुराश्रात्मा श्येनाकृतिश्च । त्रिज्ञायत उभयं[4] ब्राह्मणं[4] । पञ्च दक्षिणायाꣳ श्रोण्यामुपदधाति पञ्चोत्तरस्यां । बस्तो वय इति दक्षिणेऽꣳस उपदधाति । वृष्णिर्वय इत्युत्तरे । व्याघ्रो वय इति दक्षिणे पक्ष उपदधाति । सिꣳहो वय इत्युत्तरे[5] । पुरुषो वय इति मध्य इति चाथापरं । वयसां वा एष प्रतिमया चीयते यदग्निरित्युत्पततां छाययेत्यर्थः । समचतुरश्राभिरग्निं चिनुते[6] दैव्यस्य च मानुषस्य च व्यावृत्त्या इति मैत्रायणीयब्राह्मणं[7] भवति । तस्येष्टकाः कारयेत्पुरुषस्य चतुर्थेन पञ्चमेन षष्ठेन दशमेनेत्यथाग्निं विमिमीते । यावान्पुरुष ऊर्ध्वबाहुस्तावदन्तराले वेणोश्छिद्रे[8] करोति मध्ये तृतीयं ।

---

१ See XVII. 28 : 306. 8. and XXVI. 28 : 311. 5.

२ H adds प्रकृतित्वात् and thus also T, but see the comm.: इतिकरणः परिभाषासमाप्त्यर्थः ।

३ See T. S. V. 4. 11. 1.

४ The first brāhmaṇa is found T. S. V. 3. 1. 5. (cp. Baudh. X. 38: 36. sqq.) the second T. S. V. 5. 3. 2.

५ U and Mahāgnisarv. ins. पक्षयोरेव वीर्यं दधाति ।

६ Thus my copies; चिन्वीत T.

७ I have not been able to trace this passage in the agnicitibrāhmaṇa of our Maitrāyaṇī Saṃhitā.

८ Thus M; वेणोः छिद्रे H U, वेणोश्छिद्रे B and Thibaut.

यदमुत्र स्पन्द्यया करोति तदिह वेणुना करोति । तस्यात्मा समचतुरश्रश्चत्वारः पुरुषाः । पक्षः समचतुरश्रः पुरुषः । स तु दक्षिणतोऽरत्निना द्राघीयानेतेनोत्तरः पक्षो व्याख्यातः । पुच्छः समचतुरश्रः पुरुषस्तमवस्तात्प्रादेशेन[1] वर्धयेदेवꣳ सारत्निप्रादेशः सप्तविधः संपद्यत । उपधाने पश्चात्प्रागुत्तरतः पुरुषतृतीयवेलायां चतस्रः पञ्चम्यस्तासामभितो द्वे द्वे पादेष्टके । ततोऽष्टौ चतुर्थ्यः । पक्षशेषꣳ षड्भागीयाभिः प्रच्छादयेदेतेनोत्तरः पक्षो व्याख्यातः । पूर्वापरयोः पुच्छपार्श्वयोश्चतुर्भागीया उपदध्याद्दक्षिणोत्तरयोः पादेष्टकाः । शेषमग्निं पञ्चमभागीयाभिः प्रच्छादयेदेष द्विशतः प्रस्तारोऽपरस्मिन्प्रस्तारे पश्चात्प्रागुत्तरतोऽर्धव्यायामवेलायां तिस्रस्तिस्रः षष्ठ्यो द्वे द्वे द्विपदे इति विपर्यासमुपदध्यात्तथोत्तरे[2] । दक्षिणस्याꣳ श्रोण्यां नव षष्ठ्यश्चतुरश्रकृतास्तथोत्तरस्यां । नवनव षष्ठ्यो द्वे द्वे द्विपदे इति दक्षिणादꣳसादोत्तरादꣳसाद्विपर्यासमुपदध्याच्छेषमग्निं पञ्चमभागीयाभिः प्रच्छादयेदेष द्विशतः प्रस्तारो व्यत्यासं चिनुयाद्यावतः प्रस्ताराꣳश्चिकीर्षेत् । ॥ ८ ॥

अथापरः । पुरुषस्य पञ्चम्यस्ता एवैकतोऽध्यर्धास्तासामर्ध्याः पाद्यास्तोपधाने पूर्वापरयोः पक्षपार्श्वयोरर्धेष्टका उदीचीरुपध्यात्तथोत्तरे । दक्षिणोत्तरयोः पुच्छपार्श्वयोस्तिस्रस्तिस्रो[3]ऽध्यर्धा उदीचीः । पुच्छस्यावस्ताच्चतस्रोऽर्धेष्टका उदीचीस्ता-

---

१ अधस्तात् instead of अवस्तात् M.

२ ०दध्यादेवमुत्तरे B.

३ पुच्छपक्षयो० B.

सामभितो द्वे पादेष्टके । जघनेन पुच्छाप्ययोरेकैकामर्धेष्टकां[1] प्राचीं । शेषमग्निं पञ्चमभागीयाभिः प्रच्छादयेदेष द्विशतः प्रस्तारो । ऽपरस्मिन्प्रस्तार आत्मसक्थिषु चतस्रः[2] पादेष्टका उपदध्यात्तासामभितो द्वे द्वे अर्धेष्टके । पूर्वस्मिन्ननीके पञ्च । पक्षाप्ययोस्तिस्रस्तिस्रो ऽध्यर्धा उदीचीस्तासामन्तरालेष्वेकैका-मर्धेष्टकां प्राचीं । शेषमग्निं पञ्चमभागीयाभिः प्रच्छादयेदेष द्विशतः प्रस्तारो । व्यत्यासं चिनुयाद्यावतः प्रस्तारांश्चिकीर्षेत् ।
॥ ९ ॥[3]

अथ वक्रपक्षो व्यस्तपुच्छस्तस्येष्टकाः कारयेत्पुरुषस्य चतुर्थ्य-स्तासामध्याः पाद्यास्व[4] । नित्यमक्ष्णयापच्छेदनमनादेशे । पादेष्ट-काश्चतुर्भिः[5] परिगृह्णीयादर्धपदेन पदेनाध्यर्धपदेन पदसवि-शेषेणेति । ते द्वे यथा दीर्घसंश्लिष्टे स्यातां तथार्धेष्टकां कारयेद्यथाग्निं विमिमीत । आत्मा द्विपुरुषायामो दशपदव्या-सस्तस्य दक्षिणादंसादुत्तरतो ऽध्यर्धप्रक्रमे लक्षणं करोत्ये-वमपरतस्तयोरुपरिष्टात्स्पन्द्यां नियम्यांसमपच्छिन्द्यादेतेने-तरासां[6] स्रक्तीनामपच्छेदा व्याख्याताः । स आत्मा । शिरो

१ पुरस्ता॰ U, पुरुपार्श्वयो॰ M.

२ पादेषु M; T om.

३ Here ends probably the third adhyāya; no indication of it is found in my copies.

४ ॰स्येति B U H.

५ ॰ष्टकांचतुर्भिः my copies.

६ Between नियम्य and ऽसम् M ins. अनुसन्धि ।

ऽर्धषष्ठपदायाममर्धपुरुषव्यासं। तस्याꣳसौ प्रक्रमेणप्रक्रमेणापच्छिन्द्यात्पुच्छस्य षट्पदा प्राची द्विपुरुषोदीची। तस्य पूर्वे स्रक्ती त्रिभिस्त्रिभिः प्रक्रमैरपच्छिन्द्यात्पक्षो द्वादशपदायामो दशपदव्यासस्तस्य मध्यात्प्राञ्चि[1] षट् पदानि प्रक्रम्य शङ्कुं निहन्याच्छ्रोण्योरेकैकमथैनꣳ स्पन्द्यया परिचिनुयादन्तस्पन्द्यामपच्छिद्य तत्पुरस्तात्प्राञ्चं दध्यात्स निर्णाम। एतेनोत्तरस्य पक्षस्य निर्णामो व्याख्यातः। पक्षाग्रयोः प्रक्रमप्रमाणानि पञ्चपञ्च चतुरश्राण्यनूचीनानि कृत्वा सर्वाण्येवाङ्गमत्त्वाण्यापच्छिन्द्यादर्धान्युद्धरेदेवꣳ सारत्निप्रादेशः सप्तविधः संपद्यत। उपधाने शिरसो ऽप्यये चतुर्थीमुपदध्याद्धꣳसमुखीं पुरस्तात्पादेष्टके अभितस्तयोरवस्तादभितस्तिस्रस्तिस्रश्चतुरश्रपाद्याः। शेषे पादेष्टका। अपि वा शिरसो ऽग्रे हꣳसमुखीमुपदध्यात्तस्य अवस्ताच्चतुर्थीमुपदध्यात्पादेष्टके अभितस्तयोरवस्तादभितस्तिस्रस्तिस्रश्चतुरश्रपाद्याः। शेषे पादेष्टकाः। शिरसो ऽवस्तात्पञ्च पादेष्टका व्यतिषक्ता उपदध्यात्तथा पुच्छस्य पुरस्ताद्यद्यदपच्छिन्नं तस्मिन्नर्धेष्टकाः पादेष्टकाश्चोपदध्याच्छेषमग्निं चतुर्भागीयाभिः प्रच्छादयेत्पाद्याभिः सार्धाभिः संख्यां पूरयेदेष[2] द्विशतः[2] प्रस्तारो[2]। ऽपरस्मिन्प्रस्तारे हꣳसमुखीश्चतस्रश्चतसृभिः पादेष्टकाभिः संयोजयेद्यथा दीर्घचतुरश्रꣳ संपद्यते। तत्तिर्यक्

---

१ प्रांचं M.

२ These three words not in B; T omits them.

स्वयमातृण्णावकाश उपदध्याद्द्वे ऽसमुख्यौ प्रतीच्यौ पुच्छाप्यये[1] ऽर्धपदेनात्मनि विशये । तयोरवस्तादभितस्तिस्रः पादेष्टकाः प्राङ्मुखीरुपदध्यात्पुच्छस्यावस्तात्पञ्चदश पादेष्टका व्यतिषक्ता उपदध्यात्पादेष्टके अर्धेष्टकेति पक्षपक्षाणां प्राचीर्व्यत्यासं चिनुयाद्विशये यदपच्छिन्नं तस्मिन्नर्धेष्टकाः पादेष्टकाश्चोपदध्याच्छेषमग्निं चतुर्भागीयाभिः प्रच्छादयेत्पाद्याभिः साध्याभिः संख्यां पूरयेत् । ॥ १० ॥

अथापरः[2] । पुरुषस्य पञ्चमीभिः शतमशीतिः सप्तार्धं च सारत्निप्रादेशः सप्तविधः संपद्यते । तासां पञ्चाशद्द्वे चात्मन्यर्धचतुर्थ्यः[3] शिरसि । पञ्चदश पुच्छे । ऽष्टपञ्चाशत्सार्ध्या दक्षिणे पक्ष उपदध्यात्तथोत्तरे । ऽर्धव्यायामेन स्रक्तीनामपच्छेदः । संनतं पुच्छं । पक्षयोस्त्रिभिस्त्रिभिररत्निभिरपनामो । ऽध्यर्ध्याभिः[4] षट्षट् पक्षाणि कुर्यादाकृतिः शिरसो नित्यायेष्टकानां विकाराः । पुरुषस्य पञ्चम्यस्ता एवैकतो ऽध्यर्धास्ता एवैकतः सपादाः । पञ्चमभागीयायाः पाद्याः सार्ध्यास्तथाध्यर्धायास्तयोश्चाष्टमभागौ[5] तथा श्लेषयेद्यथा तिस्रः स्रक्तयो भवन्ति । पञ्चमभागीयायाश्चाष्टम्यस्तानि दशात्मनि पञ्चमभागीयाः सार्ध्या उपदध्यात्तथा पुच्छे । पक्षयोश्चाध्यर्धाः सार्ध्याः । शिरसि याः संभवन्त्यपरस्मिन्प्रस्तारे पूर्वयोः

१ पुच्छस्याप्यये U.

२ ०परं M.

३ ०तुर्थाः B.

४ Thus B, ध्यर्धाभिः M U, ०ध्यर्धाध्याभिः T.

५ ०स्तथाध्यर्ध्याया० M U.

52

पक्षाप्ययोरेकैकामुभयीमुपदध्यादेकैकामपरयोर्द्वे शिरसः पार्श्वयोः । पुच्छस्यावस्तादध्यर्धाः प्राचीर्यथावकाशं । पार्श्वयोः पाद्याः साष्टमभागाः[1] । पक्षयोस्त्वाध्यर्धाः सावयवाः । शेषं यथायोगं यथासंख्यं यथाधर्मं[2] चोपदध्यात् । ॥ ११ ॥

कङ्कचित[3] एतेनात्मा पुच्छं च व्याख्यातं । शिरसि पञ्चोपदध्यात्तस्याकृतिर्व्याख्याता । सप्तपञ्चाशद्दक्षिणे पक्ष उपदध्यात्तथोत्तरे । व्यायामेन सप्रादेशेन पक्षयोरपनामः । पञ्चमभागीयाध्यर्धाभिः षट्षट् पक्षाणि कुर्यादध्यर्धावशिष्यते । तया पुच्छस्यावस्तात्पादावरत्निमात्रावरत्न्यन्तरालौ प्रादेशव्यासौ भवतस्तयोरवस्तादभितो द्वौद्वावष्टमभागौ शाग्भेदावुपदध्यादेवं सारत्निप्रादेशः सप्तविधः संपद्यते[4] । ऽथेष्टकानां विकाराः । पञ्चमभागीयाः सावयवाः । पादेष्टकां[5] चतुर्भिः[5] परिगृह्णीयादर्धप्रादेशेनाध्यर्धप्रादेशेन प्रादेशेन प्रादेशसविशेषेणेत्यध्यर्धेष्टकां[5] चतुर्भिः[5] परिगृह्णीयादर्धव्यायामेन द्वाभ्यामरत्निभ्यामरत्निसविशेषेणेति । ताः षट् । तासां चतुरश्रपाद्याः साष्टमभागाः पादयोरुपधाय शेषं यथायोगं यथासंख्यं यथाधर्मं[2] चोपदध्यात् । ॥ १२ ॥

---

१ ०भागीयाः M.

२ यथाधर्म्यं my copies throughout.

३ See XVII. 28 : 307. 1.

४ शिरसो नित्या ins. M.

५ पादेष्टकाश्चतुर्भिः M.

अश्वजचित[1] एतेनात्मा शिरः पुच्छं च व्याख्यातं पदावपोद्धृत्य । त्रिषष्टिर्दक्षिणे पक्ष उपदध्यात्तथोत्तरे । पुरुषेण पक्षयोरपनामो । ऽपरस्मादपनामात्प्राञ्चमरत्निं मित्वा तस्मिन्त्सद्यां नियम्यापरं पक्षपक्षापच्छेदमन्वायच्छेदेवं[2] पञ्च पञ्चभ्यः साध्या उद्धृता भवन्ति । पादेष्टकामपनाम[3] उपधाय तासां चतुरश्रपाद्याः साष्टमभागा अपोद्धृत्य शेषं[4] यथायोगं यथासंख्यं यथाधर्मं चोपदध्यात् । ॥ १३ ॥

प्रउगचितं चिन्वीतेति[5] । यावानग्निः सारत्निप्रादेशस्तावत्प्रउगं कृत्वा तस्यापरस्याः करण्या द्वादशेनेष्टकास्तदर्धव्यासाः कारयेत्तासामर्ध्याः पाद्याश्च । तासां द्वे अर्धेष्टके बाह्यसविशेषे[6] चुबुक उपदध्यादर्ध्याश्चान्तयोः । शेषमग्निं बृहतीभिः[7] प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेदपरस्मिन्प्रस्तारे ऽपरस्मिन्ननीके सप्तचत्वारिंशत्पादेष्टका व्यतिषक्ता उपदध्याच्चुबुक एकां[8] शूलपाद्यां । दीर्घे चेतरे चतस्रः स्वयमातृण्णावकाश उपदध्यादर्ध्याश्चान्तयोः । शेषमग्निं बृहतीभिः प्राचीभिः प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेत् । ॥ १४ ॥

---

१ See XVII. 28 : 307. 4.

२ पक्षपक्षमपच्छे० M, पक्षयंनापच्छे० B.

३ पादेष्टकानामवनाम B.

४ Thus (not शेषा as T) my copies

५ See XVII. 28 : 307. 7.

६ Thus my copies; बाह्यविशेषे T.

७ M ins. प्राचीभिः, rightly ?

८ Not given by T in the text.

उभयतःप्रउगं चिन्वीतेति[1] । यावानग्निः सारत्निप्रादेशस्तावदुभयतःप्रउगं कृत्वा । नवमेन तिर्यङ्मान्याः प्रउगचितोक्ता विकारास्तथोपधानमपरस्मिन्प्रस्तारे चुबुकयोर्द्वे पादेष्टके उपदध्यात्संध्यन्तयोश्च दीर्घपाद्ये । दीर्घे चेतरे च[2] चतस्रः स्वयमातृण्णावकाश उपदध्यादर्धाश्चान्तयोः । शेषमग्निं बृहतीभिः प्राचीभिः[2] प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेत् । ॥ १५ ॥

चतुर्थः ॥

रथचक्रचितं चिन्वीतेति विज्ञायते । द्वयानि तु[2] खलु रथचक्राणि भवन्ति साराणि च प्रधियुक्तानि चाविशेषात्ते मन्यामहे । ऽन्यतरस्याकृतिरित्यथाग्निं विमिमीते । यावानग्निः सारत्निप्रादेशस्तावतीं भूमिं परिमण्डलां कृत्वा तस्मिन्यावत्संभवेत्तावत्समचतुरश्रं[3] कृत्वा तस्य करण्या द्वादशेनेष्टकाः कारयेत्तासाꣳ षट् प्रधावुपधाय शेषमष्टधा विभजेदपरं[4] प्रस्तारं तथोपदध्याद्यथा प्रध्यनीकेषु स्रक्त्यो भवन्त्यथापरः[5] । पुरुषार्धात्पञ्चदशेनेष्टकाः समचतुरश्राः कारयेन्मानार्थास्तासां द्वे शते पञ्चविꣳशतिश्च सारत्निप्रादेशः सप्तविधः संपद्यते । तास्वन्यास्चतुःषष्टिमावपेत्ताभिः समचतुरश्रं करोति । तस्य

---

१ See XVII. 28 : 307. 9.

२ Not in the text as given by T.

३ तावत् not in the text of T.

४ After विभजेत् U ins. (probably taken from the bhāṣya): अस्मिन्प्रस्तारे चतुरश्रस्रक्तीरवान्तरदेशात्प्रतिसंपादयेद० ।

५ After भवन्ति U ins. इति ।

षोडशेष्टका[1] पार्श्वमानी भवति । रथस्त्रिंशदतिशिष्यन्ते । ताभिरन्तान्सर्वशः परिचिनुयान्नाभिः षोडश मध्यमाश्चतुःषष्टिररांश्चतुःषष्टिर्वेदिर्नेमिः शेषा । नाभिमन्ततः परिलिखेन्नेमिमन्ततश्चान्तरतश्च[2] परिलिख्य नेमिनाभ्योरन्तरालं द्वात्रिंशद्धा विभज्य विपर्यासं भागानुद्धरेदेवमवाप उद्धृतो भवति । नेमिं चतुःषष्टिं कृत्वा व्यवलिख्य मध्ये परिकृषेत्ता अष्टाविंशतिशतं[3] भवन्त्यराꣳश्चतुर्धाचतुर्धा[4] नाभिमष्टधा विभजेदेष प्रथमः प्रस्तारो । ऽपरस्मिन्प्रस्तारे नाभिमन्ततश्चतुर्थवेलायां परिकृषेन्नेमिमन्तरतो । नेमिमन्तरतश्चतुःषष्टिं[5] कृत्वा व्यवलिखेदराणां पञ्चधा विभाग आ परिकर्षणयोर्नेम्यामन्तरालेषु द्वे द्वे नाभ्यामन्तरालेष्वेकैका । यच्छेषं नाभेस्तदष्टधा विभजेत्स एष षोडशकरणः सारो रथचक्रचित्[6] । ॥ १६ ॥ पञ्चमः ॥

द्रोणचितं चिन्वीतेति विज्ञायते[7] । द्वयानि तु[8] खलु द्रोणानि भवन्ति[9] चतुरश्राणि च[10] परिमण्डलानि चावि-

---

१ ०ष्टकाः my copies.

२ ०मिमंततः पर्यस्य तस्य परिलिखेन्नेमि० M, B om. परिलिख्य, U has तत्र after परिलिख्य; cp. XVII. 29 : 307. 16.

३ Thus T and U; अष्टाविंशच्छतं B, अष्टाचत्वारिंशच्छतं M.

४ Thus U M; विभजेन् instead of the second चतुर्धा B T.

५ नेम्यंतरत० U, नेम्यंत० M, नेमिमंतत० B.

६ ०चक्रः B M.

७ See XVII. 29 : 308. 3.

८ Only in U B.

९ Only in U.

१० om. B.

शेषान्ते मन्यामहे । ऽन्यतरस्याकृतिरित्यथाग्निं विमिमीते । चतुरश्र आत्मा भवति । तस्य त्रयः पुरुषास्त्रिभागोनाः पार्श्वमानी । पश्चात्सक्थिर्भवति । तस्यार्धपुरुषो दशाङ्गुलानि च[1] प्राची । त्रिभागोनः पुरुष उदीचीत्येवं[2] सारत्निप्रादेशः सप्तविधः संपद्यते । ऽथेष्टकानां विकाराः । पुरुषस्य षष्ठ्यस्ता एवैकतोऽध्यर्धास्तासामर्धास्तिर्यग्भेदाः पुरुषस्य चतुर्थ्य इति । तासां स्रक्त्योरन्तरालयोः षट् षष्ठीरुपधाय शेषमग्निं बृहतीभिः प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेदपरस्मिन्प्रस्तारे दक्षिणेऽंसेऽध्यर्धामुदीचीमुपदध्यात्तथोत्तरे । पूर्वस्मिन्ननीके षड्भागीया उपदध्याद्दक्षिणोत्तरयोश्चतुर्भागीयास्स्रक्त्योः पुरस्तात्पार्श्वयोर्द्वे चतुर्भागीये उपदध्यात्तयोरवस्तादभितो द्वे द्वे अध्यर्धे विषूची । तयोरवस्तान्मध्यदेशे[3] द्वे[4] षष्ठ्यौ प्राच्यौ । शेषमग्निं बृहतीभिः प्राचीभिः[5] प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेत् । ॥ १७ ॥[6]

अथापरः । पुरुषस्य षोडशीभिर्विंशशतं[7] सारत्निप्रादेशः सप्तविधः संपद्यते । तासामेकामपोद्धृत्य शेषाः परिमण्डलं करोति । तत्पूर्वेण रथचक्रचिता व्याख्यातं । षोडशीं पुरस्ता-

१ Only in U.
२ इति om. U.
३ मध्येदेशे B.
४ om. B.
५ om. U.
६ End of sixth adhyāya ?
७ ०विंशशतं B. विंशतिशतं M.

द्विशय उपधाय तया सह मण्डलं[1] परिलिखेदवस्तादपच्छिन्नं तत्पुरस्तादुपदध्यात् । अर्धीनाꣳ सप्तधा विभागः । प्रधिमध्यमाः प्रक्रमव्यामा भवन्ति । चतुरश्राणामर्धाभिः संख्यां पूरयेद्परस्मिन्प्रस्तारे प्रधिमध्यमामोष्ट उपधाय यदवस्तात्तद्द्वेधा विभजेत् । एष नवकरणो द्रोणचित्परिमण्डलः । समूह्यपरिचाय्यौ[2] पूर्वेण रथचक्रचिता व्याख्यातौ । समूह्यस्य दिक्षु चात्वालान्खानयित्वा तेभ्यः पुरीषꣳ समूह्योपदध्यात् । परिचाय्य इष्टकानां देशभेदस्तꣳ सर्वाभिः प्रदक्षिणं परिचिनुयात् ।

॥ १८ ॥ सप्तमः ॥

श्मशानचितं चिन्वीतेति विज्ञायते[3] । सर्वमग्निं चतुरश्रान्यष्टदश भागान्कृत्वा तेषामाख्यातमुपधानं । त्रिभिर्भागैर्भागार्धव्यासं[4] दीर्घचतुरश्रं विहृत्य पूर्वस्याः करण्या मध्याच्छ्रोणी[5] प्रत्यालिख्यान्तावुद्धरेत् । तस्य दशधा विभागस्तानि विꣳशतिः सर्वोऽग्निः संपद्यते । ऽपरस्मिन्प्रस्तारे प्रउगमध्ये[6] ऽनूचीनं विभजेत् । तस्य षड्धा विभागस्ते द्वे पार्श्वयोरुपदध्याद्भागतृतीयायामाश्चतुर्थव्यासाः कारयेत् । तासामर्धास्तिर्यग्भेदास्ता अन्तयोरुपधाय

---

१ परिमंडलं M.

२ See XVII. 29 : 309. 6, 8.

३ See XVII. 30 : 309. 1.

४ भागार्ध om. B.

५ Thus my copies (cp. the bhāṣya) ; अर्धाच्छ्रोणी Thibaut.

६ प्रधिमध्ये B.

शेषमग्निं बृहतीभिः प्राचीभिः प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेदूर्ध्वप्रमाणमग्नेः पञ्चमेन वर्धयेत्तत्सर्वं त्रेधा विभज्य द्वयोर्भागयोश्चतुर्थेन वा नवमेन[1] वा चतुर्दशेन वेष्टकाः कारयेत्ताभिस्तिस्रो वा नव वा चतुर्दश[2] वा[2] चितीरुपधाय[2] शेषमवाञ्चमक्ष्णयापच्छिन्द्यादर्धमुद्धरेत्तस्य नित्यो विभागो । यथायोगमिष्टकानाꣳ ह्रासवृद्धी । ॥ १९ ॥ अष्टमः ॥

कूर्मचितं चिन्वीत यः कामयेत ब्रह्मलोकमभिजयेयमिति विज्ञायते[3] । द्वयाः खलु कूर्मा भवन्ति वक्राङ्गाश्च परिमण्डलाश्चाविशेषात्ते[4] मन्यामहे । ऽन्यतरस्याकृतिरित्यथाग्निं विमिमीते । चतुरश्र आत्मा भवति । तस्य दश प्रक्रमाः पार्श्वमानी भवति । तस्य द्वाभ्यांद्वाभ्यां प्रक्रमाभ्याꣳ स्रक्तीनामपच्छेदः । पूर्वस्मिन्ननीके प्रक्रमप्रमाणानि चत्वारि चतुरश्राणि कृत्वा तेषां ये अन्त्ये ते अक्ष्णयापच्छिन्द्यादेवं दक्षिणत एवं पश्चादेवमुत्तरतः । स आत्मा । शिरः पञ्चपदायाममर्धपुरुषव्यासं । तस्याꣳसौ प्रक्रमेणप्रक्रमेणापच्छिन्द्यात्स्रक्त्यपच्छेदे[5] पादानुन्नयेत्तस्य द्विपदाक्ष्णया तिरश्ची तद्द्विगुणायाममनूची । तस्य द्विपदाक्ष्णया पूर्वमꣳसमपच्छिन्द्यादेतेनेतरेषां पादाना-

---

१ पंचमेन M.

२ वधीरुपधाय M.

३ See XVII. 30 : 309. 6.

४ परिमंडलांगा॰ U.

५ प्रक्रमेण once M.

मपच्छेदा व्याख्याता । अपरयोः पादयोरपरावंसावपच्छिन्द्यादेवं[1] सारत्निप्रादेशः सप्तविधः संपद्यते । तस्येष्टकाः कारयेत्पुरुषस्य चतुर्थ्यस्तासामर्ध्याः[2] पाद्यास्त्र्यध्यर्धपाद्याश्चतुर्भिः[3] परिगृह्णीयात्प्रक्रमेण द्वाभ्यां पदाभ्यां पदसविशेषेणेति । ते द्वे[4] यथा दीर्घसंश्लिष्टे स्यातां तथैकां कारयेद्द्विपदाद्व्यणार्धेन समचतुरश्रामेकामुपधाने शिरसो ऽग्रे चतुरश्रामुपदध्याद्द्वंसमुख्याववस्तात्पञ्चपञ्च चतुरश्रा द्वेद्वे पादेष्टके इति पादेषूपदध्याद्यद्यदपच्छिन्नं तस्मिन्नर्धेष्टका[5] उपदध्याच्छेषमग्निं[5] चतुर्भागीयाभिः प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेदपरस्मिन्प्रस्तारे शिरसो ऽग्रे द्वंसमुखौमुपदध्यात्पादेष्टके अभितस्तयोरवस्तादभितो द्वेद्वे अध्यर्धपाद्ये[6] विषूची । तयोरवस्तादभितश्छेदसंहिते द्वे पादेष्टके । द्वेद्वे द्विपदे तिस्रस्तिस्रो ऽर्धेष्टका इति पादेषूपदध्याद्यद्यदपच्छिन्नं तस्मिन्नर्धेष्टकाः पदेष्टकास्वोपदध्याच्छेषमग्निं चतुर्भागीयाभिः प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेत् ।

॥ २० ॥ नवमः ॥

---

१ ०रपरांसावप० M.

२ चतुर्थीस्ता० B, but cp, XXX. 10 : 403. 9.

३ ०ध्यर्धपाद्यां चतुर्भिः Thibaut, but cp. XXX : 10 : 403. 10.

४ om. T, but cp. l.c.

५ Thus M ; तस्मिन्नर्धेष्टकास्वोप० B, and Thibaut ; तस्मिन्नर्धेष्टकाः पदेष्टकास्वोप० U (rightly ? cp. XXX. 10 : 404. 16).

६ अध्यर्धा० T.

अथापरः । पुरुषस्य षोडशीभिर्विꣳशशतꣳ[1] सारत्निप्रादेशः सप्तविधः संपद्यते । तासां पञ्च षोडशीरपोद्धृत्य शेषाः परिमण्डलं करोति । तदुत्तरेण द्रोणचिता व्याख्यातमथ ताः पञ्च षोडश्यस्ताभिरवान्तरदिक्षु पादानुन्नयेच्छिरः[2] पुरस्तात्तासां परिकर्षणं व्याख्यातं । प्रधीनाꣳ सप्तधा विभागः । प्रधिमध्यमाः[3] प्रक्रमव्यामा भवन्ति । यदतिरिक्तꣳ संपद्यते तच्चतुरश्राणामध्यर्धाभिर्योयुज्येतापरस्मिन्प्रस्तारे पादानाꣳ शिरोवद्विभागः शिरसः पादवद्व्यत्यासं चिनुयाद्यावतः प्रस्ताराꣳश्चिकीर्षेत्कूर्मस्यान्ते तनुपुरीषमुपदध्यान्मध्ये बहुलमेतदेव[4] द्रोणे विपरीतमथ हैक एकविधप्रभृतीन्प्रउगादीन्ब्रुवते । समचतुरश्रानेक आचार्यास्तस्य करण्या द्वादशेनेष्टकाः कारयेत्तासामर्धाः पाद्यास्त्वाथाश्वमेधिकस्याग्नेः पुरुषाभ्यासो नारत्निप्रादेशानां । प्राकृतो[5] वा त्रिगुणस्त्रिस्तावो ऽग्निर्भवतीत्येकविꣳशो ऽग्निर्भवतीत्युभयं ब्राह्मणमुभयं ब्राह्मणम्[6] । ॥ २१ ॥ दशमः ॥

॥ इति शुल्बसूत्रं समाप्तम् ॥

---

१ ०विशंशतं B U, विंशतंशतं M.

२ Thus my copies; before शिरः Thibaut reads पञ्चम्याꣳ० but the locat. cannot be correct and पञ्चम्यां would be superfluous.

३ Thus my copies; प्रधिमध्याः Thibaut, but cp. XXX. 18 : 411. 2.

४ एव only in U and in one of Thibaut's MSS.

५ Thus H U, प्रकृतो B, ता M.

६ See XXVI. 10 : 285. 4, where, however, only the first brāhmaṇa is found.

अथातः प्रवरान्व्याख्यास्यामः । सप्तानामृषीणामगस्त्याष्टमानां[१] पक्षा भवन्ति । त्रयः पक्षा भृगूणां पञ्चार्षेया वत्सा विदा आर्ष्टिषेणास्त्वार एवाङ्गिरसः कौमण्डा दीर्घतमा रौक्षायणा[२] गर्गाश्च । गर्गाणां त्र्यार्षेयो विकल्पो । विश्वामित्रपक्षे[३] पूरणा द्व्यार्षेयाः । शुनकवसिष्ठा[४] एकार्षेया । अतो ऽन्ये त्रिप्रवरा भवन्त्येतेषु भृग्वङ्गिरसो भिन्नविवाहं[५] कुर्वते न चेत्समानार्षेया बहवः स्युरिति मतं बौधायनस्येति[६] । ॥ १ ॥

अथात[७] ऊर्ध्वानध्वर्युर्वृणीते[८] ऽमुतो ऽर्वाचो होतेत्येष एवोभयोः सर्वत्रोद्देशो । द्व्यार्षेयसंनिपाते ऽविवाहस्त्र्यार्षेयाणां । त्र्यार्षेयसंनिपाते ऽविवाहः पञ्चार्षेयाणामसमानप्रवरैर्विवाहः[९] ।

---

१ ०णामागस्त्याष्ट० Be U.

२ रौक्ष्या० G M T.

३ ०वंशे Be U.

४ शुनकावसिष्ठा BU.

५ According to the Pravaramañjarī the reading ऽभिन्न० is also admissible.

६ Here ends the first k. according to Be U; according to the other MSS. it ends after ०त्रोद्देशः (line 9); but the Pravaramañjarī remarks इतिकरणमध्यायपरिसमाप्तिबोधनार्थम् ।

७ Thus all the MSS. and Āp. XXIV. 5. 8; r. अथेत and cp. Āp. II. 16. 9.

८ एवोर्ध्वान० Be U.

९ Thus T M; ०णांसमानप्र० Bu G; Be U and Pm om. the two words असमा० विवाहः; cp. Āśv. śrs. pariśiṣṭa (p. 891 of the Calcutta edition).

एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते। तावत्समानगोत्रत्वमन्यत्र[1] भृग्वङ्गिरसां[2] गणादिति[2] पञ्चानां त्रिषु सामान्याद्‌विवाहस्त्रिषु द्वयोः। भृग्वङ्गिरोगणेष्वेव शेषेष्वेको[3] ऽपि[4] वारयेदिति[4] ॥ २ ॥

भृगूणामेवादितो[5] व्याख्यास्यामो मार्कण्डेया माण्डूका[6] ५ माण्डव्याः काऽंसय[7] आलेखना दार्भायणाः[8] शार्कराक्षा[9]

---

१ Instead of अन्यत्र Be U ऋते।

२ ०ङ्गिरोगणा० Be U, ०ङ्गिरसां गणाच्च T M G, omitting the following passage; गणैरिति Bu, equally omitting the following passage.

३ एके instead of एको Be U.

४ This śloka is found only in Be U of the MSS.; it is not treated by the author of the Mañjarī, but we find it cited in the Gotrapravaranirṇaya of Raghunātha, in the Saṃskāraratnamālā p. 418, the Prayogaratna fol. 64. C. 1, the Nirṇayasindhu, III, fol. 30. a. 5. Instead of एव we find I sometimes cited with एवं (rightly ?). Instead of पिवारयेदिति Be U have विवाहयेदिति and the metric bhāṣya on the Pravarapariśiṣṭa of Kāty. (Verz. der Berl. HSS. I. p. 62, 25) has निवारयेत; Gopīnāthadīkṣita (Ratnamālā l.c.) remarks: शेषेष्वेको ऽपि प्रवरः समानश्चेत्तद्विवाहं वारयेदित्यर्थः।

५ भृगूनेवादितो Be U; एव om. Bu T Pm Pn.

६ Thus M G Bu, मांडका T; मांडूकेया Be U Pm Pn Rm.

७ Thus G T Pn: कासय Pm, कांसव M, कांस्य Bu; कांसेया Be U Rm.

८ दर्भा० M Bu.

९ Thus G Pn; शा (or श)र्कराक्ष्या the other sources.

दैवतायनाः[१] शौनकायना माण्डूकेयाः[२] पार्षिकाः[३] साङ्काः[४] प्रान्तायनाः[४] पैलाः पैङ्गलायना दाभ्रेषयो[५] बाह्लकयो[६] वैश्वानरयो वैह्वीनरयो[७] विरोहिता[८] बार्हा[९] गौष्ठायणा[१०] ऐष्टेषयः[११] काशकृत्स्ना वाग्भूतया[१२] श्वतभागा[१३] ऐतिशायना जानायनाः[१४]

---

१ Thus Bu U Rm Pn, देवंता० or दैवंता० the other sources.

२ Thus M G Rm; मंडूकेया Bu; T om.; माधूकेया the others.

३ Thus M G Bu Pn Pm; T om.; वार्षिकाः the others.

४ ? सांकप्रान्तायनाः Bu (grantha), सांकप्रान्ता० M G, सांकाप्रांता० Be U, शांकाः प्रजायनाः Pm, साकांप्राप्ता० Sk, साकाः प्राप्ता० Rm, सांकाः प्राक्ता० Pn (cp. gaṇa *aśvādi*).

५ ? Thus M G T Pn, दाभ्रेषयः Bu, दाभ्रेषकयो U, दाभ्रेषकाकयो Be, दाभ्रेयकाः Sk, राभ्रेद्यकयो Pn.

६ वा० M Pn Be U.

७ Thus M T Rm Pn; वैह्वीनराः Bu, वैभीनरयो G, वैह्वीतरयो Be U, वैह्वित० Sk (cp. PW. s. v. विह्वीनर)।

८ Thus Be U Pm Pn; विलोह्विता M G T Bu, वैरोह्विता Sk Rm.

९ ? Thus M Pm, बर्ह्वी G T, बर्भाः Bu, बाह्या the others.

१० ? Thus M G T Bu, गोष्टायणा Pm, गोष्ठायना Rm, कौकायना Be U.

११ Conjecturally. यष्टेषय M G T, यष्टेषयः Bu, ष्टै (or ष्ठै)केया Be U Pm, ष्टौकयः Rm, टौकपाः Sk, ष्टैकयः Pn.

१२ ? Thus G T; वात्भू० M, वार्कभू० Bu, वाह्नतका Be U, वाङ्गूतका Rm Pm, वाड्भ्तका Sk, वाड्तका Pn.

१३ चत० Be U, छत० Rm Sk Pn.

१४ Thus (and cp. gaṇa *aśvādi*) T Bu Pm Pn, जाणा० M, जान्ता० G, जातायनाः Be U Sk, ज्ञानायनाः Rm.

पाणिनिर्वाल्मीकि स्थौलपिण्डयः शैखावता[1] जिह्वीतयः[2] सावर्णिर्वाकायना[3] बालायना सौक्तयो मण्डवित्सौविष्टयो[4] हस्त्याग्नयः[5] शौद्धकयो[6] वैकर्णा[7] श्रौपजिक्रय[8] श्रौरग्नयः[9] काम्बलोदरयः[10] काठोरक्तदैहलिर्विरूपाचा[11] वृकाश्वा उच्चैर्मन्यवो दैवमत्या[12] आर्कायणा[13] मार्कायणाः काक्षायना[14] ५

---

१ ? Thus M G; शैखामिताः Bu, शौखावता T, सौषावला Be U, सौपातवाः Sk Pn, सैषातवा Pm, सैवातवा Rm.

२ Thus Be U Pm Pn Rm; जिह्वि॰ T Sk, जिक्रतयः G, जिक्रतीयः M, जिगीतयः Bu.

३ Thus Be U Pm Pn Rm Sk; वाकायना T, वार्कायणा G, वाकायणा M, ग्राकायनाः Bu; वाकायनि Mān. sū., वागायना Laugākṣi.

४ सौविष्टपयो M G T, सौविष्टक्रपयाः Bu.

५ ? Thus Be U Pm Sk; हस्त्यग्नयः G T, गस्त्यग्नयः M, श्चगस्त्यग्नयः Bu, हस्त्याग्रयो Pn, हस्ताग्रव्हः Rm, हस्ताग्नयः Sk.

६ Thus M G T Sk Rm Pn; सौ॰ Pm, सैद्यकयः Bu, रौद्दकायो Be U.

७ Thus Bu Rm; the others have वैकर्ण्णा, वैकर्णेया, वैकर्णया or वैकरार्या (cp. Pān. IV. 1. 117).

८ Thus G only; द्रौ॰ M T; द्रो॰ Be U Pm, मौ॰ Bu; द्रोणकजि॰ Rm Sk, द्रोकजि॰ Pn.

९ Thus M G T Bu, श्रौरसयः all the others.

१० कांबरोदरयः M G T, कांबनो॰ Bu, कांबोदयः Be U, कांबलोदरयः Sk Rm, कांवलोदयः Pm.

११ ? Thus M G T; काठक्तत् Bu, कांबोदक्तत् Be U Pn, वाकारक्तत् Rm Sk, कचोरष्ट Pm (cp. कौठार ? gaṇa *śivādi*).— वैरूपाचा U, वैरूपाच्चा Be.

१२ Thus M Bu T; देवमर्त्या G, देवमत्या Pm, द्दमत्या the others.

१३ Thus (as Laugākṣi) M G T Bu, बार्यायणा the others.

१४ Thus M Bu Be U Sk Pn; काणायना G, कांबायना T.

वायवायनिनो[१] शांकरवाः[२] कारबवश्चान्द्रमसा[३] गाङ्गेया अनुपेया[४] याज्ञिका[५] जाबालिर्बाङ्कमित्रायणा[६] आपिशलयो[७] वैष्टपुरेया लोहितायना[८] उष्ट्राचा नाडायनाः[९] शारदतायना[१०] राजितवाहा[११] वत्सा वात्स्यायना[१२] इत्येते वत्सास्तेषां पञ्चार्षेयः प्रवरो भवति । भार्गव च्यावनाप्नवानौर्व जामदग्न्येति होता । जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युः । ॥ ३ ॥

---

१ ? Thus M G Bu, वायवोश्वधनिनः T, वायव (or वा)वम्यायनाः Be U, याथवायनिनः Pn, वायनस्वायनिनः Rm, वापनयः वायनिनः Sk, वायकावावाया-यिनः Pm (cp. वायव्यायन Mān. sū).

२ Thus (with Mān. sū.) Pm, शांकरवः M G T, शांकवः Bu, शांक-राश्वाः Be U, शार्ङ्गरवाः Rm, शार्णरवाः Sk.

३ कारबव० G, कारबह्न० T, कारश्वबः Bu, कारबर्ह्हः M, कारवचः Pm. Not found in any of the other MSS. or nibandhas; cp. perhaps कालबव of Āp. XXIV. 9. 1, although there as Viśvāmitra.—०मसा Be U T Sk Rm, ०मसो M Bu G Pm Pn.

४ ? Thus M G T Bu, नौपेया Be U Pn, नौषेया Pm, नौधेया Rm, लौयेय Sk.

५ Thus M G T Bu Rm; याद्गिया Be U, याज्ञिया the other nibandhas.

६ Instead of जाबालिः (cp. Āp. XXIV. 5. 14.) M G T Bu have पारिमण्डलिः, cp. पारिमंडलि of Laugākṣi.

७ Thus Be U Pm Pn Sk Rm; आपिशालेयो or आविशालेयो M G T Bu.

८ रो० Be U, लौ० Pn (perhaps better).

९ See Pāṇ IV. 1. 99; नाळायनाः M G T Bu; मालायनाः the others.

१० Thus all exc. T and M, which have शाठद्व० ।

११ Thus M G Bu T; राह्नजितवाह्ना Be U Pm, राजतवाह्ना Pm Sk.

१२ Thus Be U Pm Rm Pn Sk; वानावाद्या G, वानावाध्या M T, नवाध्याः Bu.

विदाः शैला अवटाः शैलाः[१] प्राचीनयोग्या[२] अभयजाताः[३] काण्डरथश्चो वैदभृताः[४] पुलस्तय[५] आर्कायणा[६] माकायणा[६] नाड्वायणाः क्रौञ्चायना भुञ्जायना[७] जामलायना[८] इत्येते विदास्तेषां पञ्चार्षेयः प्रवरो भवति । भार्गव च्यावनाप्नवानौर्व वैदेति होता विदवदूर्ववदप्नवानवच्च्यावनवद्भृगुवदित्यध्वर्युः । ॥ ४ ॥

आर्ष्टिषेणा नैरथयो[९] ग्राम्यायणाः[१०] काण्वयश्चान्द्रायणाः[११] प्रौढकलायनाः[१२] मिद्धाः सुमनायना गौराम्भिराम्भिरित्येत[१३]

---

१ Found only in M G T and Be U.

२ °योगा M G T Bu.

३ Thus also (and cp. gaṇa *gargādi*) Laugākṣi and Mānava; अभयदानाः Be U and the nibandhas.

४ Thus (and cp gaṇa *gargādi*) corrected in acc. with the Mānava text; वैत° M G T Bu, वैन° Be U and the nibandhas.

५ Thus M G T Bu; पुलस्तय Pm, पुलस्त्य the others.

६ Perhaps these two (cp. p. 418. 5), the last of which is missing in Bu, ought to be cancelled.

७ Thus M G T Bu; मुंजा° Be U; fails in all the nibandhas.

८ ? Thus Be U; जामला G, जालो M, जमला T, बोधाः भार्गवः Bu; नालामला Pm.

९ Thus the MSS. and Pm Pn; नैऋथयो Rm Sk.

१० ग्राम्यायणयः Rm perhaps rightly, cp. gaṇa *tikādi* and ग्राम्यायणि of Laugākṣi.

११ ? काण्वय° M T, काण्वया° G, कण्वकः Bu; काम्यायना° Be U, कार्णायनाः Rm Pn, कारणायुनाः Pm, काणायनाः Sk.

१२ Thus M G T, पाण्डकायनाः Bu, पौटकलायनाः Be U Pn Pm Rm, पौठकलायनाः Sk.

१३ Thus M T Pm; गौराभिरांभि° G, गौरांभि° (omitting आम्भिः) Be U, गौरा Bu, गौराभिः Sk Rm, गौरांभिःरांभिः Pn.

आर्ष्टिषेणास्तेषां पञ्चार्षेयः प्रवरो भवति । भार्गव च्यावनाप्नवानार्ष्टिषेणानूपेति[1] होतानूपवदृष्टिषेणवदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युर्वत्सा विदा[1] आर्ष्टिषेणा इत्येतेषामविवाह । एते पञ्चावत्तिनः[2] । ॥ ५ ॥

५ यस्का मौनो[3] मूको[4] वाधूलो वर्षपुष्पो वालेयो[5] राजिततायिनो[6] दुर्दिनो[7] भास्करो दैवन्तायनो[8] वाष्कलेयो[9] माध्यसेया वाग्रयः[10] कौशाम्बेयाः कौटिल्याः[11] सत्यकश्चित्रसेना[12]

---

१ Thus the pravara in Be U and all the nibandhas (cp. Āp. XXIV. 5. 15); the four other MSS. are more or less confused.

२ The words after अध्वर्युः given only by Be U T Bu Pm, but in Be U: ०विवाहस्तेषां पंचावत्तिन इति।

३ Thus Be U and the nibandhas; मौना G, मूनो T M, असुनः Bu.

४ मुको Be मूका G, मौको Rm.

५ ? Thus T Bu M, बाळायो G; मातावाक्रोयो Be U, मातलयो Pm, भागलेयो Rm Sk, नागलेयो Pn.

६ Thus all (०तापिनो Be U, रातित० Pm), the other nibandhas substitute a name from the Laugākṣi pravarasūtra (भागविज्ञेयो)।

७ दुर्दितो Be U.

८ ? (cp. p. 417. 1) Thus M G Be U Pn, देवंतायना T, दैवतायना Pm, दैवजायनो Sk.

९ ? Thus Be U, बाष्कलयो T G, बाकळेयः Bu, बाकलयो M, वाकलया Pm, वार्कलेयो Pn Rm Sk.

१० Thus M Bu पाग्रयः G T वासयः Be U and the nibandhas.

११ Thus Be U, कौठिल्याः M, काठिल्याः Bu, क्रौंठिल्याः T, कौण्डल्याः G; after this name Be U have सप्तकेयाः क्रौविल्याः, the last name (instead of कौटिल्याः) also Rm Sk Pn, कौविल्याः Pm.

१२ Instead of सत्यक० (thus Be U M T Pm) सम्यकि० G, सत्यकः Bu, सत्यकयः Pm, सत्यकयाः Rm, सत्यकपयः Sk.

भागन्तयो वार्काश्वकय[1] श्रौक्या[2] श्रौग्रचितयो[3] भागुरित्यथ इत्येते यस्कास्तेषां त्र्यार्षेयः प्रवरो भवति । भार्गव वैतहव्य सावेतसेति[4] होता । सवेतोवद्वीतहव्यवद्भृगुवदित्यध्वर्युः[5] । ॥ ६ ॥

मित्रयुवो[6] रौक्ष्यायनाः[7] ग्रायण्डिनाः[8] सापिण्डनाः[9] सुराभिना[10] माल्या[11] वाल्या[12] महावाल्यास्ताच्छ्यायणा

---

१ Thus emended (cp. वृकाश्वकि of the Laugākṣisūtra); वार्काश्वक्रय M G T, वातार्काश्वकेय Be U.

२ ? ? श्रौत्या M, श्रौक्या T, श्रौच्चा G, श्रौत्स्याः Bu; Be U and the nibandhas omit this name.

३ ? श्रौगंचित्रयो G, श्रौगंचितयो Be U, श्रौक्यितयाः T, श्रौकचितया M, श्रौर्गाः चितयाः Bu.

४ The MSS. exc. Bu (which has साचेतसेति) and Pm Sk, have all सावेद्सेति ।

५ Instead of सवेतोवत् MSS, exc. Bu (which has सचेतसवत्) and Be U (which have सवेदोवत्), all सवेद्सवत् ।

६ Thus Be U and the nibandhas; मित्रयूणा M G T, मित्रायणाः Bu.

७ Thus (and cp. Census p. 120) Be U (after ग्रायण्डिनाः, after मित्रायुवो they have रौक्यायणाः), रैक्ष्यायनाः Rm, रैाक्षायणाः Pm, रैक्ष्णायनाः Sk, रैाक्ष्ग्रायणाः G, रौगंयायणाः M T, रौग्यायणाः Bu.

८ ? Thus T, ग्रायण्डीनाः M, ग्रण्डीनराः Bu, ग्रारंडिना Be U. All the other MSS. and the nibandhas om. this name. Be U ins. after it (cp. foregoing note) रौक्ष्यायनाः ।

९ ? Found only in Be U (सापिंडायनाः) G (सापिण्डीनाः), Sk and Rm (सापिंडिनाः), Pn (सापेंडिनाः) Pm (सापिंडिताः). The Census l.c. has *sāpindana*.

१० Thus T Bu, सुरांभीना G, सुरांभिनश्राना M, सुरभिनेया the others.

११ ? Thus Be U and all the nibandhas; बाल्या M G, बल्या T, बल्लाः Bu.

१२ Thus Be U, यवाल्या M, यवल्या G, याबल्या T, यावल्लाः Bu; all the nibandhas om. this name.

औरुच्छ्यायणा[१] वाजायना[२] मादाघयः[३] कैतवायना इत्येते मित्रयुवस्तेषां[४] त्र्यार्षेयः प्रवरो भवति । भार्गव वाध्र्यश्व दैवोदासेति होता । दिवोदासवद्वध्र्यश्ववद्भृगुवदित्यध्वर्युः । ॥ ७ ॥

वैन्याः पार्था वाष्कलास्तेषां[५] त्र्यार्षेयः प्रवरो भवति । भार्गव वैन्य पार्थेति होता । पृथुवद्वेनवद्भृगुवदित्यध्वर्युः[६] । ॥ ८ ॥

शुनका गार्त्समदा यज्ञपयः[७] सौगन्धयः[८] खार्दमायना[९] गाङ्गायना[१०] मत्स्यगन्धाश्चौचाः[११] औचियास्तैत्तिरीयाः[१२]

---

१ ? Thus Be U; उरुच्छ्यायणा M G, उच्छायणा Pn, उरुच्छमायणाः Bu; T and the other nibandhas om.

२ ? Thus Be U Pm; वाञ्जायना M G T, वार्जायनाः Bu; not in the nibandhas.

३ Thus (and cp. मदाघ) M G, मादापयः T, मदार्पयः Bu, माजायनाः Be U, माजाद्यया Pm.

४ मित्रयव॰ M T, मित्रायणा॰ Bu.

५ Instead of वाष्कला॰, Bu पात्कलाः, T पात्कल्का॰, Pm वात्कला॰। After this name Be U add शाकलाः, Bu adds श्वेताः, Sk, श्येनाः, Rm and Pn श्यैताः (cp. Āśv. XII. 10 11). In M the *vainyāḥ pārthāḥ* are left out. The Census report has as fourth name *shveta*.

६ वैन॰ instead of वेन॰ MSS. exc Be U.

७ ? Thus all (perhaps better with the Laugākṣisūtra याज्ञपयः) the MSS. and Pm Pn, यज्ञपतयः G and Sk only.

८ Thus Be U Sk Pm; सौर्भकयः Bu, सपयः M T, सौपयः G.

९ कार्द॰ G only (कर्दमायनाः Lau., Mān.).

१० गाङ्घायनाः Bu.

११ Before चौचाः Be U have गार्भायणाश् and after it चैचियाः।

१२ Thus Be U Pm Sk; ॰स्तित्तिर्याः M G T, ॰स्तित्तरीयः Bu.

पत्पूला[1] इत्येते शुनकास्तेषामेकार्षेयः प्रवरो भवति । शौनकेति होता । शुनकवदित्यध्वर्युर्गार्त्समदेति होता गृत्समदवदित्यध्वर्युर्वा[2] । ॥ ९ ॥ प्रथमः ॥

अङ्गिरसो व्याख्यास्याम । आयास्या आणीवेयाः[3] काचाचयो[4] मूढाः[5] सात्यकयस्तैदेहाः[6,7] कौमारवत्यास्तौण्डिर्दार्भिर्दैवकिः[8] सात्यमुग्रिः[9] कौबाह्या[10] बौध्या[11] नैकरिः[12] खस्तैषकिः[13]

---

१ ? Thus T G, पत्पूला M, आपत्पूलाः Bu, पित्पला Be, विप्पला U ;—प्रत्यूषाः Sk, प्रत्युषाः Pn, both probably after the Laugākṣi—(प्रत्यूषाः) and the Mānavasūtra (प्रत्युराः) ।

२ After the first अध्वर्यु Bu ins., omitting वा at the end, गार्त्समदानामेकार्षेयः ।

३ Conjecturally (cp. gaṇa *śubhrādi* on Pāṇ. IV. 1. 123); आनिचेयाः M T, अनिचेयाः Bu, औणीवेधाः G, सौणिचेयाः Be U Pm, औणिवेयाः Pn, औणिवेधाः Sk Rm.

४ कौचा० Bu ; all the nibandhas om. this name.

५ ? Thus M G T Bu, मूढसंरथाः Be U, मूढरथाः the nibandhas.

६ सात्य० M G T Bu, सत्य० Be U and the nibandhas.

७ तैदेहाः Bu, तैदेयाः T, तैन्देहाः G M ; खेदेहाः Be U, खैदेहाः Sk, खैदेहाः Pm Pn Rm, r. perhaps तैदेयाः ?

८ Instead of तौण्डिर्दार्भिः (thus Be U) तौण्डिभिः M T, तौण्डिकिः G Bu ; instead of देवकि, दैवकिः Rm Sk.

९ ०मुग्रि T, ०मुग्र M G, ०मद्किः Bu ; सत्य० Be U Pm.

१० Thus (or कौवा०) Be U and the nibandhas ; कोबाह्यो or कोबाह्या M G T Bu.

११ वौभ्या or बौभ्या Be U Pm Pn Rm, वैभ्याः Sk ; बौध्या M G T Bu (cp. Pāṇ. IV. 1. 107).

१२ Thus (नैकरि०) MSS. exc. Bu (करि०), Rm (नौकरि०), Sk (तौकरिः) ।

१३ I have adopted the reading, however doubtful, of Be U, which is supported by Sk Rm Pn ; the four other MSS. have (in connection with the foregoing name) नैकरिष्ठीष्टैषीकिः (G), नैकरिष्ठिकिः (M), नैकरिष्ठिष्टैणिकः (T), कैरिष्टः ष्टैच्चकिः (Bu).

कीलालयः[1] कारुणिः[2] काठोरिः काश्नीवाजाः[3] पार्थिवा इत्येत आयास्या गौतमास्तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गि-रसायास्य गौतमेति होता । गौतमवदयास्यवदङ्गिरोवदित्य-ध्वर्युः[4] । ॥ १० ॥

शारद्वता[5] आभिजिता[6] रौहिण्याः क्षीरकरम्भाः सौसुचयः[7] सौयमुना[8] औपबिन्दवो[9] राहूगणा[10] राणयो[11] मार्षण्या[12] इत्येते शारद्वता[13] गौतमास्तेषां[14] त्र्यार्षेयः प्रवरो भवत्याङ्गि-

---

१ किला॰ Bu G Pm Pn.

२ आरुणिः M only; the nibandhas, however, all point to का॰ ।

३ काश्नि॰ M G T Rm Pn; after this name Be U add काश्चीयाः ।

४ Instead of गौतम॰ and अयास्य॰ (thus Be U) गौ॰ and आ॰ the other MSS.

५ Corrected; शारद्वन्ता T, शरद्वन्ता M G Bu and the nibandhas; शरद्वन्तो Be U; cp. Pāṇ. IV. 1. 102.

६ Thus Rm only, अभि॰ all the MSS. and the other nibandhas.

७ ? Thus Be U and the nibandhas; सौसुरयः M G T, सौगुरयः Bu.

८ ? Thus Be U; सौधासुरा G T, सौथासुरा M, सौयासुरा Bu. Perhaps two names: सौधाः, सुराः ?

९ R. औपबिन्दवयः ? cp. gaṇa *bāhvādi*; औपबिन्दवो Sk Rm Pn; कोपबिंद्वो Be U Pm, रौपभिंद्वो M G T Bu.

१० Thus Be U, रहू॰ or रहो॰ the other MSS. and the nibandhas.

११ Thus (and cp. gaṇa *pailādi*) M G T, राणेयाः Bu, गणयो Be U and the nibandhas.

१२ ? माषण्या Be U Pm Pn, मार्षण्या M G, मर्षण्या T, माषयाः Bu, भाषण्याः Rm.

१३ शरद्वंतस् Be U Bu (omitting गौतमास्), शरद्वता G M, शरद्वंता T.

१४ गौतमास् om. Be U T.

रस गौतम शारद्वतेति होता । शरद्वद्गोतमवदङ्गिरोवदित्यध्वर्युः[१] । ॥ ११ ॥

कौमण्डा मामन्थरेषणा[२] मासुराचाः काष्टरेषय[३]ऊर्जायना[४] वानजायना[५] वाग्रय[६] इत्येते कौमण्डा गौतमास्तेषां पञ्चार्षेयः प्रवरो भवत्याङ्गिरसौचथ्य[७] काक्षीवत गौतम कौमण्डेति होता । कुमण्डवद्गोतमवत्कक्षीवदुचथ्यवदङ्गिरोवदित्यध्वर्युः[८] ॥ १२ ॥

दीर्घतमसां[९] पञ्चार्षेयः प्रवरो भवत्याङ्गिरसौचथ्य[७]काक्षीवत गौतम दीर्घतमसेति[१०] होता । दीर्घतमोवद्गोतमवत्कक्षीवदुचथ्यवदङ्गिरोवदित्यध्वर्युः[११] ॥ १३ ॥

---

१ Thus Be U only, शरद्वतवद्गौतम० the other MSS.

२ Be U add मासरेषयः ।

३ Thus M G Bu, काषरेषय T, काष्ठ० Be U Pm, काषरेखयः Sk, काष्ठरेखयः Rm.

४ Thus (and cp. Āp. XXIV. 7. 1) M G, ऊर्जया T, औजायनाः Bu, आंजायना Be U Pm Rm Sk.

५ ? Thus MG, वाना T, Bu om.; याजायनाया Be U, वाजायन Pm, वांजायनाः Sk Rm.

६ Thus Be U T G Sk, पाग्रय M Bu.

७ ०तथ्य Be U and in the adhvaryu formula उतथ्यवत् ।

८ Thus Be U only ०त्कक्षीवतव० the other MSS.

९ Corrected (see, however, p. 415. 3); दीर्घतमस्य Be U, दीर्घतमानां the other MSS.

१० Thus Be U (r. दैर्घ० ?), दीर्घतमेति the other MSS.

११ Thus Be U, दीर्घतमव० the other MSS.

औशनसा दिश्याः[1] प्रशस्ताः सुरूपाक्षा महोदरा विगद्रकाः[2] सुबुध्या[3] निहिता[4] गुहा[5] इत्येत औशनसा गौतमास्तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरस गौतमौशनसेति होतौशनसवद्गौतमवदङ्गिरोवदित्यध्वर्युः ॥ १४ ॥

कारेणुपालयो वास्तव्याः[6] श्वेतीयाः पौञ्जिष्ठय[7] औदज्ञायना[8] बाभ्रुक्या[9] आजगन्धय[10] इत्येते कारेणुपालयो गौतमास्तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरस गौतम कारेणुपालेति होता करेणुपालवद्गौतमवदङ्गिरोवदित्यध्वर्युः[11] ॥ १५ ॥

वामदेवानां त्र्यार्षेयः प्रवरो भवत्याङ्गिरस गौतम वाम-

---

१ Thus Be U G and the nibandhas; दिश्याः M Bu, दिश्ययः T.

२ ? Thus M G T, पिंगरकाः Bu, विकंहताः Be U and the nibandhas.

३ ? सुबुद्धा Be U Pm, सुबुभ्निया G, सुबुधन्या M, सुबुद्धयः Bu, सुबुभ्रा T, सुबुद्ध्याः Sk, सुबुध्या Rm.

४ निहता Be U and the nibandhas exc. Rm.

५ Om. Be U Pm.

६ Be U add वामदेव्या ।

७ Thus T, पौञ्जिष्ठ्य MG, पजिष्टाः Bu, पैंजिष्ठा Be U Rm, पौजिष्ठाः Sk Pm.

८ ? (cp. औदज्ञायनि gaṇa *tikādi*) औदुञ्ज्रायना M G, औदुंजायना T, औदुज्यायनाः Bu, औदुरुंजायना Be U, औदजा० the nibandhas.

९ ? Thus M G T, बभ्वान्याः Bu, मधुच्चारा Be U and the nibandhas exc. Sk (साधु०) ।

१० ? अजगंधा Be U, राजगन्धयः M G T Bu, आजगन्धाः Rm, अंजगंधा Sk.

११ करेणुपालिव० Be U, कारेणुपालव० the other MSS.

देवेति होता । वामदेववद्गोतमवदङ्गिरोवदित्यध्वर्युर्गौतमानाꣳ सर्वेषामेवाविवाहः[१] । ॥ १६ ॥ द्वितीयः ॥

भरद्वाजाः[२] क्षाम्यायणा मामण्डा[३] देवाश्वा उद्वहव्याः प्राग्वꣳशयो वाह्लया[४] वाह्योगा[५] वासिनायनास्तैदेहा[६] आज्ञा[७] औचा[८] भूरयः पारिणद्धेयाः[९] शैखेयाः[१०] शौद्धकय[११] ऊरूढाः[१२] खारिग्रीवय[१३] औपशयो वयोचिभेदा आग्निवेश्या

---

१ The last three words in M T Be U only, the last two omitting एव and adding इति at the end.

२ भर० (here and infra 432, 1) U only (and Sk Pm), all the others भार० ।

३ ? Thus M G, मामंथा T, मामण्डाः Bu; मंगदा Be, मंगडा U Pm, मेङ्गडा Rm, मेगयाः Sk.

४ ? वाह्लगा M G T, वालकाः Bu, वाह्लच्चाः Sk, वह्नालभा Pm, वाह्वच्छन्ना Rm, देवह्लेला Be U.

५ ? Thus Be U and the nibandhas; वन्ध्योगा T G, वन्ध्योगा M, वध्वगाः Bu.

६ (cp. वासिनायनि P W) बाशिनायना० G, वाशिना० T M, वशिना० Bu; वासनायना० Be U, वसीनायना Pm, वासीतायना Rm, वशीतायनाः Sk.

७ ? ? Thus M G T Bu, आस्ना Be U, Sk Rm, अत्तास्ना Pm.

८ ? Thus Be U Bu Sk Rm Pm, औथा M, औक्ष्या G, औधा T.

९ Thus Rm only, पारी० G, पारिणद्धेयाः Sk, परिणद्धेयाः Be U M, परिखेयाः T, परिनद्धेयाः Pm, वारिणेकेयाः Bu.

१० Thus M G T Bu, केशखेयाः Be U and the nibandhas.

११ Thus M G, शौद्धिकय T, शौकय Bu, शौद्दय Be U Sk, शौद्वय Rm Pm.

१२ Thus G T Be U Rm, जरूढाः M, औरूढाः Bu, उरूढाः Sk, उरुग Pm.

१३ खार० Be U Rm.

वेधाः[1] शठा[2] गौरिवायनाश्वेलका[3,4] स्तनकर्णा ऊरूच्चा[5] माण-भिन्द्याः[6] काङ्कोदङ्कास्तौञ्जलयो[7,8] वेलाः[9] खारणादयो[10] भारुण्डेया माद्रपथयः[11] सौरोभङ्गाः[12] शुङ्गा[13] द्वैमतय[14]

---

१ वेशाः Be U (the nibandhas om. this name).

२ Thus M Bu Pm, शग Be U, श्वला T, शां G, शयः Sk, शवा Rm.

३ Thus (with न) Bu G Rm; भौरिवायनाः M, गोरिवायनाः Pm, गौरिवावनाः Sk, गौखालारेखायनाः Be U.

४ ? Thus Be U T, ०श्वेळका M G, खेलकाः Rm Sk, वेलकाः Pm, चौरुकाः Bu.

५ ? Thus M G, औरुचाः Bu, ऊरूचा T, वच Be U, च्चचाः Sk Pm Rm.

६ Thus M T; माणभिन्द्याः G, माणभन्द्याः Bu, माणभिंद्याः Be U Rm, माणिभिंद्याः Sk (to be taken together with the foregoing name ?).

७ ? Thus M G, काखोदंका० T, कासोदकाः Bu, कद्दोदकाः Be U (which add : कांजोवकाः), कद्दोदकाः Rm, कद्दादकाः Sk.

८ ? Thus M T Bu; ०सौजलयो G, खोञ्जलयो Be U, खोञ्जलयो Pm, सौञ्जलायः Sk Rm.

९ ? Thus Bu Sk Rm, वेलाः Be U Pm, वेणाः M G T.

१० Thus emended, cp. gaṇa *bāhvādi*; खारणाद्यो M G, ०द्यो T, खारणाःरेयाः Bu, खारडारेवेया Be U, खारुडाद्यो Pm.

११ Thus M G T, माव० Bu, भद्ररथा Be U, भद्राथयः Pm, भद्राद्यः Rm Sk.

१२ ? Thus M G T, सौरभंगाः Bu, सौरभराः Be U Sk Pm, सौरंभराः Rm.

१३ Thus Bu Pm Sk Rm, शृंगा Be U, शुभाङ्गा M G, शुभंगा T.

१४ Thus, and cp. gaṇa *taulvalyādi*, M G T, देवमः०य Bu Be U and the nibandhas.

इषुमता[1] औदमेघय:[2] प्रवाहणेया: कल्माषा राजस्तम्भि:[3] सुधूपक्वदाराहयो[4,5] वलभिकय[6] उग्रांगता[7] शालाहलयो देववेला[8] महावेला[9] निविञ्चायना[10] धन्यायना:[11] शालालय: शार्दूलय: कात्कला[12] वाक्कला[13] सैह्यकेला:[14] क्रौडायणा:[15]

---

१ R. ऐषुमता ?

२ Thus, and cp. gaṇa *pailādi*, Be U Rm; औद्यमे॰ Sk; बौदो-मेघय: M G, वैदादोदमे॰ T, दोद:मेघय: Bu.

३ Thus M G Bu T Pm, ॰स्तंबा: Be U, ॰स्तवय: Rm Sk.

४ Thus M G T Bu, साध्युपक्वतयो Be U, संधोपक्वतय: Sk Rm, संयोधोपक्वत Pm.

५ Thus (and cp. वाराह्व P W) M G T, पराह्वया Bu, राह्वयो Be U, पराह्वरयो Pm Rm Sk.

६ Thus M G T, वलभीकयो Pm, वलभोकयो Rm Sk; उपलंभिकया: Bu, वलभयो Be U.

७ ? ? Thus M G T, इन्द्रोद्वता: Bu, रुद्रांगयथा: Be U Sk, रुद्रांगपथा: Pm Rm.

८ Thus M G T Bu, वेद्वेल Be U, वेला: Sk, वेदचेला Rm, वेद्वेला-यना Pm.

९ Only in M G T Bu.

१० ? Thus M G, निपिंचायना T, रज्यायना: Bu; न्वत्यायना Be U Pm Rm Sk.

११ Thus (and cp. धान्यायन gaṇa *aśvādi*) M G T Bu; Be U and the nibandhas omit this name.

१२ ? Thus G Bu; कार्कला: T (cp. perhaps Pāṇ. IV. 2. 145), कात्ककला M, कालाचला Be U, काचला Rm Pm, काचलय: Sk.

१३ ? Thus M G, वात्कला: Bu, फात्कला: T, बा (or वा)ष्कला: Be U and the nibandhas.

१४ ? Thus G; ॰कला: M, सैह्या: कैन्दा: Bu, सह्यकेला: T, सात्यकेता: Be U, सत्यकेया: Sk, सिह्यकेया: Rm, सेह्यकेधा: Pm.

१५ क्रौडा॰ T, क्रोडा॰ M G Bu, कौंडा॰ Be U, क्रौंदा॰ Pm, कौंदा॰ Sk, कौडा॰ Rm (क्रौडायन Katy.).

क्रौडिल्या[१] ब्रह्मस्तम्भा राजस्तम्भा अग्निस्तम्भा वायुस्तम्भाः सूर्यस्तम्भाः[२] सोमस्तम्भा[२] यमस्तम्भा इन्द्रस्तम्भा विष्णुस्तम्भा यज्ञस्तम्भा[३] आपस्तम्भा ये चान्ये स्तम्भशब्दाः[४] श्लिष्टा[५] आरुणसिन्धुः[६] कौमुद्गन्धिः[७] शक्तिः[८] कौशिवायना[८] आत्रेयायणाः[९] भामण्या[१०] धूमगन्धाः[११] कुकाः[१२] कौकाक्षयो नैतुन्दयो दार्भयः श्यामेया मत्स्यक्राथाः[१३] कौकायनाः[१४] कारुपथयः

---

१ ? Thus M G Pm, क्रौढि॰ T, काण्डिल्याः Bu, कौडिल्या Be U कौण्डिन्याः Rm Sk.

२ Thus Be U and the nibandhas; सोम॰ सूर्य॰ M G; Bu om. सोम॰; in the following names the order is somewhat different in the MSS.

३ Only in M G T Bu.

४ स्तंभस्तंबशब्दा Be U (cp. Āp. XXIV. 7. 1).

५ Om. Be U and the nibandhas.

६ Thus M G T; आरुणाकिसिंधु Pm, अभ (or अम)णसिंधव Be U, आरुणाः (or आरुणाः) सिन्धवः Sk Rm.

७ गन्धयः Be U and the nibandhas.

८ Instead of these two names Be U and the nibandhas have one name: शिखायना ।

९ Thus (and cp. gaṇa *aśvādi*) Be U Pm, मात्रेयायणा Rm Sk, आत्रेयणा M G T, आत्रयणाः Bu.

१० ? Thus Be U; भामाण्याः the nibandhas; भामण्या M G T, यतमासत Bu.

११ Om. Be U and the nibandhas.

१२ ? Thus M G T, कोकाः Bu, कुत्साः Be U Pm Rm Sk.

१३ ? Thus Be U Pm Rm, ॰क्रापाः Sk, मत्स्यक्रोढाः Bu, ॰कायाः M G T.

१४ ? Thus (and cp. Āp. XXIV. 7. 1.) T, केकौ॰ M G, काच्यायणाः Bu, कारवायनाः Be U and the nibandhas.

कारीषायणा:[१] काम्बल्या[२] इत्येते भरद्वाजास्तेषां[३] त्र्यार्षेयः प्रवरो भवत्याङ्गिरस बार्हस्पत्य भारद्वाजेति होता। भरद्वाजवद्बृहस्पतिवदङ्गिरोवदित्यध्वर्युः। ॥ १७ ॥

रौक्षायणानां[४] पञ्चार्षेयः प्रवरो भवत्याङ्गिरस बार्हस्पत्य भारद्वाज वान्दन मातवचसेति होता। मतवचोवद्वन्दनवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदित्यध्वर्युः। ॥ १८ ॥

गर्गाः सांभरायणाः सखीनयो[५] गन्धरायणा[६] वाङ्कलकयो[७] भ्रष्टका[८] भ्राष्टबिन्दवः[९] कौष्टुकयः[१०] सौयामुनिर्भ्राजि-

---

१ कारी॰ Be U G Pm, कारि॰ the other MSS. and Sk Rm.

२ ? कांबल्या Be U, काबल्या G T Bu, काबाल्या M, कावल्या Pm Sk Rm.

३ भार॰ M G T Bu Be, भर॰ U Pm.

४ रौचा॰ (and cp. p. 415. 4) G Be U Sk Rm; रौच्या॰ M G Bu — In Be and U of the MSS. only and in Sk Rm Pn of the nibandhas (*not* in Pm), a list of nine names is given finishing: इति रौक्षाः, taken, as it seems, from the Kātyāyana pravarasūtra, cp. Verz. der Berl. HSS. vol. I, p. 56, l. 30 sqq. The raukṣāyaṇas correspond with the ṛkṣas of Āp and Āśv. and the rukṣabharadvājas of the Mānavasūtra (cp. also Verz. l.c. p. 60, l. 23).

५ Thus Be U G Pn; सखीन (or त)यो the nibandhas; सांखिनयो T M, सांखनाग्यो Bu.— After this name Be U add ऽयसांख्यायना।

६ माभ्ररायणाः Sk Rm.

७ Thus Be U M G Pm Pn, बङ्क॰ T, बाङ्कलका Bu, बाङ्कलयो Sk Rm.

८ Thus (and cp. gaṇa *upakādi*) M G T Bu Pm; भाष्ट्रका Be U, भाष्टृतो Sk Rm Pn.

९ भाष्ट॰ M T, भ्रष्ट॰ Bu.

१० क्रौष्टकयः Be U Pm, क्रोष्ट॰ Rm Sk, कौष्टुकयः G T, कौष्ट॰ M, कौष्टकाः Bu.

नाचत्रेया[१,२] होत्रापचयः सत्यापचयः काणायना[३] औपमत्क-टायना[४] जाणवत्पलागगाखानन्तयः[५] संग्रहतुल्या[६] वैडुहा[७] निस्रोहताः[८] कारिरौतिः कैवल्या[९] राजयः[१०] पौलय इत्येते गर्गास्तेषां पञ्चार्षेयस्त्र्यार्षेयो वा प्रवरो भवत्याङ्गिरस बार्हस्पत्य भारद्वाज शैन्य गार्ग्येति होताङ्गिरस शैन्य गार्ग्येति वा । गर्गवच्छिनिवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदित्यध्वर्युर्गर्गवच्छिनिवदङ्गिरोवदिति वा । भरद्वाजानाञ्‌ सर्वेषामेवाविवाहः[११] । ॥ १९ ॥ तृतीयः ॥

---

१ सौभा॰ G T, सौजा॰ Bu.

२ ? भाजिनाचत्रेया T, भाज॰ M G, भाजिनाःचभाः Bu; भागीनाद्यो Be U, भागिनाद्यो Pm, भाजिनाद्यो Pn Rm Sk.

३ Be U om. this and the following name. In the nibandhas none of the following gargas is found.

४ Thus (and cp. Kāty. Verz. d. Berl. HSS. p. 55, l. 40) T only; औपत्कटायना M G, औपउत्कटाः यना Bu; r. perhaps औपमर्कटायना, cp. उपमर्कट of the Mānava— and Laugākṣi sūtra.

५ Thus M G T, ग्रोणव॰ Bu, जनवानव॰ Be U.—॰पचयः instead of ॰वन्तयः Be U.

६ Thus T G, ॰तुल्यो Be U, संग्रव॰ M, संभव॰ Bu.

७ ? वैळुहा M G, वैळुहका T, वैदुहाः Bu; वेणुभरिः Be U.

८ ? निखोहताः M G, निखोतसाः T, रिखोहताः Bu; खौग्रह (but cp. the last syllable of the foregoing name in these two MSS). Perhaps the first name ends on ॰रिः ।

९ Thus M G T Bu, क्रौचाल्यो Be U.

१० ? Thus M G T Bu, रां (or ग्रं)कुवत् Be U.

११ The four last words only in M T (here भा॰) but they are quoted in Pm Pn.

